श्रीः

महाराष्ट्रकविवर्य

श्रीमयूरविरचिते

ग्रन्थसंग्रहे

१

# संस्कृतकाव्यानि

इमानि

पराडकरान्वयजेन दत्तात्रेयात्मजजन्मना रामकृष्णेन

सम्पाद्य प्रकाशितानि ।

'अच्युत चिन्तामणि भट' इत्यनेन च

पुण्यपत्तनस्थे 'यशवंत' मुद्रणालये

मुद्रितानि ।

शकाब्दाः १८३८

श्रीर्जयति

# उपोद्घातः

आर्यार्पितमहानन्दः सर्वलोककृतादरः ।
विराजते मयूरेशः कलाधरशिरोमणिः ॥ १ ॥
अतिचित्रकलापाढ्यः सदारामपरस्थितिः ।
कारिकाजनितानन्दो मयूरेशो विराजते ॥ २ ॥

—सुश्लोकलाघवम् ।

**श्रीमयूर**कविविरचितानि गैर्वाणीकाव्यान्यद्य रसिकेभ्यः समुपाहरतामस्माकं कोऽपि निरतिशयः प्रमोदो मानसमुल्लासयति । गैर्वाणीरसिका हि अधुनातना वाल्मीकिमादिकविमारभ्य भासकालिदासादीन् यावत्प्राचां कृतिषु कृतावगाहनाः समास्वादितजगन्नाथभणितयः, 'न कोऽप्येतेभ्यो विशेषः कश्चिदाधुनिकानां काव्येषु समुपलभ्येत' इति साशङ्का अपि कौतूहलाक्रान्तधियः काव्यान्यमुष्य कवेः समाद्रियेरन् गुणदोषविशेषतश्च परीक्षेरन्नित्यस्ति नो द्रढीयान् विश्वासः । कीदृशश्चास्य कवेः काव्यानि वाचयितॄणां रसानुभवः स्यादिति स्वयमेव ते भावयितुं प्रभवन्तीत्येतादृशं विमर्शमत्रोपेक्षामहे । किन्तु काव्यरसानुभवायावश्यत्वेनापेक्षिता ये ये विषयास्त एव प्रायोऽत्र निर्दिश्येरन्निति निवेदयामः ।

किमधुनातनं गैर्वाण्याः स्वरूपं के च गुणास्तयाद्य यावत्समासादिता यान् निकषीकृत्य काव्यविमर्शका नवीनानि काव्यानि परीक्षेरन्निति पृष्टे ब्रूमः । इयं हि देववाणी आदिकवेः सहजं रामणीयकं प्रसन्नाकृतित्वं च, भासकवेर्लोकवृत्तान्तवर्णनाप्रवणताम्, कालिदासाद्विदग्धविलासवत्सकलजनमनोहारिताम्, भवभूतेरोजस्विताम्, दण्डिनः पदलालित्यम्, भारवेरर्थगौरवम्, भट्टबाणान्मार्दवम्, पण्डितराजाच्च जगन्नाथकवेर्मानिनीत्वं दर्पं चेति गुणकदम्बकमधिगम्य सर्वासां भाषाणां मूर्ध्नि राजते । न चेदृशी काचित्स्वभावमनोहारिणी च गुणालङ्कारभूषिता च भाषा निखिलेऽप्यस्मिञ्जगति दृश्यते । सर्वासां देशभाषाणामियमेव प्रभवः, अस्या एव तासामुत्कर्षावाप्तिः, इयमेव च तासामलङ्कारमञ्जूषा यस्याः समुद्धृत्य भूषणानि, अलंकृत्य च शरीरमेताभिरनवरतं ह्रियन्ते मानसान्यनधिगतगैर्वाणीपरिचयानाम् ।

अयमेतावान् सन्दर्भः कृतगैर्वाणीपरिचयान् प्रत्याययितुं प्रभवेद्यथा नावश्यकमेतदधुना देववाणीमभिनवैरलङ्कारैर्भूषयितुम् । न च देशभाषास्तथाद्याप्यलंकृता इति भृशमपेक्ष्यते तास्वभिनवप्रबन्धप्रणयनं च तत्र कविप्रातिभाविष्करणं च रसालङ्कारादीनां संयोजनं चेति । परिनिष्ठितप्रयोगा हि गैर्वाणी नाधुना पण्डितप्रकाण्डानपहाय कुत्रापि व्यवहारायोपयुज्यते नाप्यस्ति नः प्रत्याशा यथेयमेव भारतीयानामागामिनि समये प्रधानव्यवहारभाषा स्यादिति । तदेवं स्थिते पण्डितवर्यैः प्राकृतभाषास्वेव बद्धादरैर्भवितव्यं तास्वेव च ग्रन्थादीन् प्रणीय प्राकृतानां जनानामुत्तमः पन्थाः प्रदर्शनीयः । देववाणीस्थितस्यैवार्थस्य देशभाषया निबन्धने न वयं कमपि दोषमुत्पश्यामः । यथा गैर्वाण्यामपि हि सत्सु वाल्मीकिप्रभृतीनां सरसमनोहारिषु काव्येषु, कालिदासादीनामभिनवप्रबन्धरचनाप्रयासो न व्यर्थ इति शङ्कनीयम् । तथा हि चम्पूरामायणे भोजकविः

वाल्मीकिगीतरघुपुङ्गवकीर्तिलेशै-
स्तृप्तिं करोमि कथमप्यधुना बुधानाम् ।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः
किं तर्पणं न विदधाति नरः पितॄणाम् ॥ इति ।

एतेनैव न्यायेन सत्सु गीर्वाणभाषामयेषु प्रभूतेषु ग्रन्थेषु तदर्थमुपजीव्य विरचितानां प्राकृतभाषाप्रबन्धानां प्रणयनं न निष्प्रयोजनं न वा गतरसमित्याशङ्कनीयम् । एतमेवार्थमुपनिबध्नाति कविरयं महाराष्ट्रमंत्ररामायणस्योपसंहारे

रामाचें रचिलें चरित्र मुनिनें वाल्मीकिनें संस्कृतीं,
नाहीं हानि कदापि अन्यकविहीं तें वर्णितां प्राकृतीं;
मुक्तांचा रचिला चि हार पहिला जो रेशिमाच्या गुणें,
तो कार्पासगुणेंकरूनि करितां काय प्रभेला उणें? २
केलें पात्र सुवर्णाचें, कीं विरूपशि खापरी;
लावितां तेथ संहारी तम, दीपशिखापरी. ४
श्रीवाल्मीकिप्रभृतिमुनिहीं वर्णिली रामलीला;
मादृक्षाहीं मुदितहृदयें काय गावें न तीला?
श्रीकंठाद्यमरपरिषत्सेव्यगंगाप्रवाहीं

संध्यास्नानादिक न करणें काय या मानवांहीं? ६

'गीर्वाणें राघवाचें यश रसिकजना लागतें फार मिष्ट,
तैसें न प्राकृतानें' अचतुर म्हणती, मानिती तें न शिष्ट;
पीतां गोक्षीर कार्तस्वरमणिचषकें देतसे जे चि गोडी,
सारङ्गाला पलाशद्रुमदलपुटकें सेवितां ते न सोडी. ११

माजी सत्कृति दूषिली जारि खळें उच्छृंखळें आग्रहें,
सेवावी च परंतु नित्य रसिकें हे सद्गुणाच्या गृहें;
चंडाळ त्रिदशापगेंत वमला कीं धेनुला स्पर्शला,
त्यांचें श्रोत्रियदेवसेव्य पय ही, त्या ही सदा निर्मळा. १३

इयं हि देशभाषासु गीर्वाणग्रन्थार्थनिबन्धनाप्रवृत्तिः त्रयोदश्यां शताब्द्यामवतीर्णस्य ज्ञानराजस्य भावार्थदीपिकाख्यायां श्रीमदभगवद्गीताव्याख्यायामिदम्प्रथमत्वेन दरीदृश्यते। तत उत्तरमेकनाथेन भावार्थरामायणादयः प्रभूता ज्ञानवैराग्यभक्तिमार्गप्रपञ्चात्मका ग्रन्था निरमायिषत। तद्दौहित्रश्च मुक्तेश्वरो वैयासिकीं महाभारतकथां महाराष्ट्रभाषया जग्रन्थ। तदनन्तरं च रामदासतुकाराम वामनपण्डितप्रभृतयः स्वतंत्रप्रतिभा वश्यवाचः कवयो महाराष्ट्रभाषां स्वैः स्वैर्ग्रन्थरत्नैर्भूषयामासुः। तत्र पण्डितवामनोऽधीतसकलशास्त्रार्थः पण्डितमण्डलीं भारतवर्षीयां विजिगीषुः केनापि महात्मना हृतदर्पो महाराष्ट्रभाषया ग्रन्थरचनायामादृतोऽभूदिति सार्वजनीनेयं प्रथा। सत्स्वप्येतेषु कविमूर्धन्येषु सत्सु च तेषां नानार्थनिबन्धनेषु ग्रन्थेषु न महाराष्ट्री शब्दसम्भारतस्तथा सुसम्पन्ना यादृशा तया भाव्यम्। एते हि कवयः दुर्बोधत्वमपाकरिष्णव इव तद्भवानेव शब्दान् भूयसोपयुञ्जानास्तत्समान् विरलतयैव प्रयुञ्ज। भाषाशुद्धौ च नितरामौदासीन्यमेषां संलक्ष्यते। मुक्तेश्वरमपहाय रसालङ्कारनिबन्धने वर्णनाविषये च प्रायः पराङ्मुखी ह्यमीषां प्रवृत्तिः। तथापि परमार्थप्रवणत्वादेतेषामिदं पराङ्मुखत्वं न दोषायेति सुधीभिर्विभावनीयम्।

तदित्थंभूते व्यतिकरे पूर्वोक्तानां प्राकृतकवीनां निखिलानपि दोषानपजिहीर्षुः, चोरमपि ग्रन्थरत्नैः समाकर्षन्, मयूरस्य नामतोप्यऽनुकुर्वाणः, भास इव महाराष्ट्रीहासभूतः, कालिदास इव कविताकामिनीविलासः, श्रीहर्ष इव सरस्वतीहर्षजननः, भट्टबाण इव च वाग्देवीपञ्चबाणोऽवततार महाराष्ट्रजनपदे मयूरकविः। यः खलु

रामायणमेकमेव विरच्य दृप्तमिवादिकविं वाल्मीकिमुपहसन्निवाष्टोत्तरं शतं रामायणानि नैकवृत्तनिबद्धानि प्रणिनाय । यज्जननी च लक्ष्मीसती महाभारतप्रथनलब्धकीर्तिना बादरायणेन सूनुना सत्यवतीव धन्यममंस्तात्मानम् । यश्च शुक इव परिरक्षितं निगमकल्पतरोर्गलितं फलममृतद्रवसंयुतं श्रीमद्भागवतं देशभाषया विपरिणमय्य भवदन्दशूकविदष्टान्निखिलानपि प्राकृतान् मुमुक्षूनास्वादयामास । एककेकारटनोद्वेजितभुवनत्रयं कलापिनमधरीकुर्वाण इवायमेकविंशेन शतेन केकाभी रसिकगोष्ठीरावर्जयामास । किं बहुना । 'सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः । वक्रोक्तिमार्गनिपुणाश्चतुर्थो नैव विद्यते' इति दृप्तां वाचमुदीरयमाणेन कविराजेन राघवपाण्डवीयस्य प्रणेत्रा स्पर्धमान इव चित्ररचनाघटितान्येव प्रायः समुपाहरत्काव्यानि विदुषाम् ।

सोऽयं मयूरकविः शालिवाहनशकस्य भूबाणर्तुचन्द्रमिते (१६५१) वत्सरे करवीरप्रदेशान्तर्गते पन्नगालयापरनामधेये पराशरक्षेत्रे पराडकरवंशसम्भवाद्रामशर्मणो जनिमलब्ध । तत्रैव चापगतशैशवोऽयं समधिगतसंस्कारस्तत्रत्याभ्यां पाध्येकुलोत्पन्नाभ्यां केशवगणेशशर्मभ्यामधीतसारस्वतश्छन्दःसाहित्यादीनां शास्त्राणामन्तमधिजगाम । प्रातिभं तु चक्षुरस्य विशेषतो गणेशगुरुप्रसादादाविरभूदिति महाराष्ट्रमन्त्ररामायणस्य मङ्गलाचरणात्

> "**श्रीमद्गणेशगुरुपदनखशशिकान्तिच्छटा जयन्तुतराम् ।**
> **प्रतिभारत्नं लब्धं यासु मयेदं मनस्तमोघ्नीषु ॥"**

इत्यतोऽवगम्यते । जनितुरुपनेतुर्विद्यानां प्रदात्रोश्च गुरूणां श्रीरामहरिकेशवगणेशशर्मणां नामान्यनेनैव कविनान्यत्रोल्लिखितानि समुपलभ्यन्ते ।

एवमधीतविद्योऽयं कविश्चतुर्विंशतिवर्षः पन्नगालयं परित्यज्य वेदनगर्तुभूमिमिते (१६७४) वत्सरे पितुर्दर्शनार्थं बारामतीनगरमागमत । अस्य पिता हि तदा तत्र बाबूजीनाईकाख्यं कमपि राजपुरुषं सेवमानो न्यवसत् । एकदा बाबुरायो दुहितृभिर्वधूभिश्च पठ्यमानमतिरमणीयाक्षरं सीतागीतमाकर्ण्य केनैतत्प्रणीतमिति ता अप्राक्षीत् । ताभ्यश्च मयूरपंतस्य नामोपलभ्य स एनमाह्वयत् । 'ब्रह्मोत्तरखंड'ग्रन्थार्थं च तत्क्षणं देशभाषावृत्तनिबद्धमाकर्ण्य प्रीतान्तरङ्गस्तमात्मनः प्रासाद एव पुराणकथनाय न्ययुंक्त प्रतिवत्सरं पञ्चशतं च रूपिका अस्मै भृतिमदात् । इत ऊर्ध्व-

मयं कविः पुराणानि स्वस्वामिनं श्रावयन्, देशभाषानिबद्धानि गैर्वाणीमयानि च बहूनि काव्यानि प्रणयन्नामरणमत्रैव न्यवात्सीत्।

इदं च बारामतीनगरमधिवसन्नयं कविरनन्तरेषु चत्वांरिंशति वत्सरेषु बहूनि देशभाषानिबद्धान्युपाख्यानानि महाभारतं च रामायणानि च खण्डकाव्यानि चातिरमणीयानि प्रकाशयन् यशःकायेन विगलितजरामरणभीतिना विराण्मूर्तिरिव भुवनत्रयं व्यापयाम्बभूव। तद्विरचितानां च ग्रन्थानामत्र निर्देशः पद्यसंख्यानिर्देशश्च संक्षेपतया विलिख्यते–

| | | |
|---|---|---|
| आर्याभारतस्य | पद्यसंख्या | १७१३६ |
| रामायणानां ... ... | ,, ... | १५७३७ |
| हरिवंशस्य ... ... | ,, ... | ५४४४ |
| कृष्णविजयस्य ... ... | ,, ... | ३६७० |
| मंत्रभागवतस्य ... | ,, ... | } ३७०३ |
| मंत्रमयभागवतस्य ... | ,, ... | |
| ब्रह्मोत्तरखण्डस्य ... | ,, ... | १२१२ |
| कुशलवाख्यानस्य ... | ,, ... | ५०८ |
| प्रह्लादविजयस्य ... | ,, ... | २४१ |
| हरिश्चन्द्राख्यानस्य ... | ,, ... | २९६ |
| भीष्मभक्तिभाग्यस्य ... | ,, ... | १९८ |
| अवतारमालायाः ... | ,, ... | ३१० |
| सप्तशत्याः ... ... | ,, ... | ४०७ |
| गीतार्याणाम् ... ... | ,, ... | ७३७ |
| स्फुटकाव्यानाम् (आहत्य अतिरिच्यते) | | ७५०० |
| | आहत्य | ५७०९९ |

अनेन सन्दर्भेण सुस्पष्टमेतद् भवेत्सुधियां यथानेन कविना महाराष्ट्रभाषायामेव प्रथितानि प्रभूतानि काव्यानि तदपेक्षया त्वतीव स्वल्पानि गैर्वाण्यामिति। इममेव विशेषमासाद्य वयमिमं कविं "**महाराष्ट्रकवि-**" रिति सम्बोधयामः।

अयं कविः स्वीयानि काव्यरत्नान्यादाय खचन्द्रर्षिभूमिमिते ( १७१० ) वत्सरे

वाराणसीतीर्थमगच्छत् । न्यवसच्च तत्र चतुरो मासान् । तदानीन्तनास्तत्रत्याः पण्डिता हि गैर्वाणीनिपुणा अपि स्वधीतशास्त्रा अपि प्रायो देशभाषाभ्यो विमुखा आसन् कवींश्च प्राकृतांस्तृणायामन्यन्त । किन्तु परीक्षितेऽस्य शलाकया काव्यसङ्ग्रहे यदृच्छासमुपलब्धं विराटपर्वणोऽन्तिममार्याद्वयमनुवाच्य सर्वापि पण्डितमण्डली कविराजायास्मै यथार्हं मानं व्यतरत् । एवं सुरभयन् महाराष्ट्रप्रदेशं च भारतवर्षं च स्वीयैरनवद्यैः काव्यकुसुमैरयमृतुचन्द्राद्रिभूमिते ( १७१६ ) वत्सरे चैत्रे पौर्णमास्यां श्रीरामचन्द्रचरणसंस्मरणपरः प्राकृतं लोकमिममत्यजत् ।

पद्यसंख्यातो विविच्यमानेऽस्य कवेर्गीर्वाणपद्यानि महाराष्ट्रपद्यानां द्वादशांशतोऽपि न्यूनानि सम्पद्यन्ते । मुक्तामालां विहाय न कुत्रापि चमत्कारजनकः प्रबन्धार्थः । न चौज्वल्यं रचनायाः । नापि मन्त्ररामायणमपहाय कुत्रापि प्रसादः । सर्वत्र केवलं चित्रबन्धरचनायामेव कृतप्रयत्नोऽयमुपलभ्यते कविः । तत्किमेतस्य कवेर्गीर्वाणवाणीबन्धस्य प्रायो नीरसस्य प्रणयने प्रयोजनमिति चेत्केवलं गैर्वाण्यामिष्टदेवतावर्णनेच्छैव प्रयोजनमिति संभावयामः । यदयं श्रीमद्भिर्महामहोपाध्यायबिरुदधारिभिर्धर्मसिन्धुप्रणेतृभिः " काशीनाथ बाबा पाध्ये " इत्येतैः पञ्चमहाकाव्यवन्नूतनानां महाकाव्यानां निर्माणे विज्ञप्तस्तत्र तु तेषामेतस्मिन्नादरातिशय एव निदानम् । महाराष्ट्रीकाव्यानि तु महाकाव्यलक्षणोपपन्नानि च चारुतमानि चेति निर्विशङ्कमभिप्रेमः ।

मन्त्ररामायणप्रणयनोद्देशः कविनैवान्तिमे पद्ये निबद्धः । स यथा—

**सत्काव्योपवनं यदाद्यकविना वाल्मीकिना निर्मितं**
**तत्रस्थैरतिरम्यपद्यकुसुमैः प्रीत्या गृहीते गुणे ।**
**श्रीमन्त्रे विरचय्य दाम रुचिरं श्रीमन्त्ररामायणं**
**श्रीरामस्य जगद्गुरोरुचितयोः पादाब्जयोरर्पितम् ॥ ३०९–१४**

अनेन च महर्षिवाल्मीकिविरचिताद्रामायणादतिरम्याणि पद्यान्युद्धृत्य श्रीमन्त्रगुणेन तेषां गुम्फनमेव परममस्य प्रयोजनमिति ज्ञायते । यद्यपि न प्रायोऽत्र कथाबन्धस्य विच्छेदस्तथाप्यादिकाव्यस्य प्रसन्नार्थत्वं च काव्यत्वं चात्रापहारितमेव संलक्ष्यत इति सुतरां दूयामहे ।

मुक्तामाला तु सर्वेभ्योऽस्य गीर्वाणकाव्येभ्यः सरसतरा । तत्रापि प्रायो दूरा-

न्वितानामर्थालङ्काराणामुत्प्रेक्षादीनां तथानुप्रासादीनां च शब्दप्रधानालंकृतीनामुपयोगो विरसतामावहतीति निःशङ्कं ब्रूमः। अस्या मुक्तामालायाः श्रीमन्त्ररामायणस्य श्रीरामनामाष्टोत्तरशतरामायणस्य च विद्यार्थिनामध्ययनमतीवोपकुर्यादिति नो मतम्।

अन्यानि काव्यान्यस्य स्वेष्टदेवतास्तुतिपराणि। तत्रापि प्रायः शब्दचमत्कृतिरेव प्राधान्येनोपलक्ष्यते भूयांसि च दुरधिगमार्थानि। विरलानि हि

**दीनोऽहं दीनबन्धुस्त्वमहमघनिधिः पावनस्त्वं प्रसिद्धो**
**भीतोऽहं कालदण्डाच्छरणमुपगतस्त्वामसि त्वं शरण्यः।**
**दाता त्वं सद्वराणां वरदगुरुरहं याचकस्त्वं दयावान्**
**आर्तोऽहं त्वं क्षमावानहमपि विनतः पादयोः सापराधः॥** ३६८

इत्येतादृशानि सरलानि च सरसानि च पद्यानि।

अधुनास्य कवेर्विशेषान् प्रपञ्चयामः। प्रथमं तावदिदं निवेदनमत्रावश्यकं भवति विदुषां यन्महाराष्ट्र्यां तावन्नैतादृशः कोऽपि कविरभूद्यस्तत्समान् शब्दान्भूयसा प्रायुङ्क्त। अस्य तु महाराष्ट्र्यां गीर्वाणवाणीपथानुसरणे महान् प्रयत्नस्तथैव गैर्वाण्यामपि महाराष्ट्रीप्रचारानुसरणे तादृगेवाभिनिवेशः संलक्ष्यते। तत्रायमन्तरान्तरा महाराष्ट्र्यामपि गीर्वाणवाक्यखण्डानि प्रयोजयति। यथा—

**ऐसें म्हणतां स्त्रीच्या कंठीं घालुनि मिठी म्हणे "अयि! ते।**
**कथमेवमुक्तमदयं तदयं किमनुष्ठितुं क्षमो दयिते!॥"**

—आदि ३१. २७

यथा वा—

**"ब्रूयात्क्षमी गभीरोऽसीति बत युधिष्ठिरं प्रभुं को न?"**
**निज नीचपण प्रकटिसि तूं श्वान भल्यावरीहि भुंकोन॥**

—सभा. ४।८५

क्वचिच्च वर्णनापरवशः प्राकृतकाव्येष्वपि गीर्वाणभाषामयानि प्रयुङ्क्ते पद्यानि। यथा—

**त्र्यक्षमनोहर! दीनजनावनदक्ष! पुमर्थद! साधुसभाधन!**
**लक्षकविस्तुत! दारुणपातककक्षदवानल! सत्करुणाघन!**
**तक्षककोट्यधिकोग्रदशाननरक्षउपद्रुतविश्वभयापह!**

**रक्ष रघूत्तम ! मामबलं वृतपक्षमनाथमहर्षिमहामह !** सवयारामा० ७२

बहुषु स्थलेषु प्रत्ययवर्जं प्रायो निखिला अपि गीर्वाणशब्दाः। यथा मंत्ररामायणे

**सुंदरि ! गंगायमुनासंगम हा हर्ष देतसे थोर**

**मिश्रितमुक्तामरकतमणिमयहारद्वयप्रभाचोर** ॥ युद्ध० ७९८.

प्रत्यययोजने च कतिपयपदपरिवर्तने च गैर्वाणीमयीयं सम्पद्यते गीतिः। यथा–

**सुन्दरि! गंगायमुनासंगम इह मुदमुपाहरत्यतुलाम् ।**

**मिश्रितमुक्तामरकतमणिमयहारद्वयप्रभाचोरः ॥**

सार्थकयति चैवं गीर्वाणवाण्या मार्दवदानेन कविराजशेखरस्योक्तिम्

**परुसा सक्कअबन्धा पाउअबन्धो वि होइ सुउमारो ।**

**पुरुसमहिलाणं जेत्तिअमिहन्तरं तेत्तिअमिमाणम् ॥** कर्पूर० १-८

[ परुषाः संस्कृतबन्धाः प्राकृतबन्धोऽपि भवति सुकुमारः ।

पुरुषमहिलानां यावदन्तरं तावदेतेषाम् ॥ ]

अनेनैव कविना स्वहस्तलिखितेषु प्राकृतकाव्येषु क्वचिदर्थबोधाय टिप्पणी विनिवेशिता । तत्रापि बहुषु स्थलेषु कविरयं गैर्वाणीमेव वाणीं प्रयुङ्क्ते ।

अस्य कवेर्गीतिवृत्तमतीव प्रेयः । भूयांस्यस्य काव्यानि तद्वृत्तनिबद्धानि । किन्तु कविरयं वृत्तमेतदार्याजातित्वाद "आर्या" इत्येव व्यपदिशति । अन्यान्यपि बहूनि वृत्तान्यनेन प्रयुक्तानि । जातिवृत्तान्यपि विविधान्यत्र संलक्ष्यन्ते। साररामायणाख्ये काव्ये तु बहुविधान्येतादृशानि वृत्तानि सुधियां नयनसरणिमुपगच्छेयुः ।

गीर्वाणकाव्येषु तु बहव एव प्रयोगा आर्षाश्चापाणिनीयाश्च कविनानुकृताः। किन्तु मंत्ररामायणे प्रयुक्तान्यपाणिनीयानि प्रायः सर्वाण्यपि रूपाण्यार्षाद्रामायणात्तथैवोद्धृतानीति नात्र विषये कविरयं दोषभाग्भवितुमर्हति । वाल्मीकिप्रयुक्तेष्वेव पदेषु निरतिशयास्य भक्तिरेव निदानमिति कामं वक्तुं शक्यम् । किन्तु स्फुटकाव्येष्वेतादृशामपशब्दानां प्रयोगः कवेरस्य दोषभागितां समाविष्करोतीति मनुमहे । न हि तादृशानि रूपाणि केनाप्यभियुक्तेन कविना प्रयुक्तपूर्वाणि । मन्त्ररामायणे प्रयुक्ता अपाणिनीयाः शब्दा आर्षादेवोद्धृता इत्यनुपदं दर्शयिष्यामः ।

| मंत्ररामायणे | आर्षः प्रयोगः | वाल्मीकिरामायणे |
|---|---|---|
| अयोध्या० ३६ | बन्धितुम् | अयोध्या० १८–१३ |

| | | |
|---|---|---|
| अयोध्या० १५८ | आमंत्रयामि | अयोध्या० ३९-३८ |
| अरण्य० २८८ | नयिष्यसि | अरण्य० ४९-२६ |
| ,, ३५० | स्फुरते | ,, ५९-५ |
| किष्किन्धा० ५१ | वधिष्यामि | किष्किन्धा० ५-२६. |

किन्तु 'वत्स्यन्तु, गृहीतुकामः, गृहीतुम्,' इत्यादयः प्रयोगा नैव तत्राण्युपलंभ्यन्त इति निवेदयामः।

स्फुटकाव्येष्वपि शिष्टैर्विरलमुपयुक्ता अपाणिनीयाः प्रयोगा बहुषु स्थलेषु दृश्यन्ते। न चानेन सर्वथा कवेरस्य शब्दशास्त्रानभिज्ञतां संसाधयितुमिच्छामः। इदमेव तावदाश्चर्यं यद्य एव महाराष्ट्र्यां भाषाशुद्धौ नितरामात्मानमभियुंक्ते स एव गैर्वाण्यां तामुपेक्षत इति।

अयं कविः क्वचिल्लोकोक्तीर्देशभाषामयीः प्रयोजयति। यथा रामस्तुतौ-मृतिभीतमरिं तृणास्यमाजौ जयिनस्त्वादृश एव पालयन्ति। पृ० ३१७--३७

अत्र तृणास्य इति देशभाषामयी एव लोकोक्तिः। दृश्यन्ते च क्वचिद्गैर्वाण्यामपि देशभाषामयानि 'अभंगदोहा-'प्रभृतीनि वृत्तानि।

महाराष्ट्रप्रदेशे कविमिममुद्दिश्य प्राचामाधुनिकानां च पण्डितानां बहव एव विशयाः प्रादुरासन्। तत्र केचिन्नानेन कविना शास्त्राण्यधीतानि नापि पञ्च महाकाव्यान्यवलोकितानीति वदन्ति। अपरे तु कविरयं सर्वतंत्रस्वतंत्रः साहित्यादिशास्त्रनिपुणश्चेति प्रत्यवतिष्ठन्ते। अन्ये नायं कविपदवीमर्हतीति। चित्रकाव्यरचनयैवानेन व्यर्थतां नीतमायुरिति ब्रुवते। परे च महाराष्ट्रप्रदेशे नैतादृशः समजनि कविर्विद्यते वा भविष्यति वेति संस्तुवत्येनम्। नायं विवादविषयः कविकाव्यविमर्शायोपयुक्त इत्यनवकाश एव यद्यपि विस्तरस्य, तथापि मध्यममार्गानुसरणमेवात्र श्रेय इति संसूचयामः। यद्यपि शब्दशास्त्रन्यायनयाद्यध्ययने नैव सन्ति प्रमाणानि तथापि साहित्यवेदान्तशास्त्रेष्वस्य परिचयः सर्वत्र स्फुट एव सूक्ष्मदृशां सुधियाम्। गैर्वाण्यां यद्यपि कवित्वमस्य संशय्यते तथापि महाराष्ट्र्यां कविप्रथमपद्धतिमयमेवावातारयदिति नात्र केषामपि विशयस्यावसरः। एतावतापि च कवित्वेऽस्य

**अत्थणिएसा ते च्चिअ सद्दा ते च्चेअ परिणमन्ताइं।**
**उत्तिविसेसो कव्वो भासा जा होति सा होदु॥**--कर्पूर० १-७.

[ अर्थनिवेशास्त एव शद्बास्त एव परिणमन्तोऽपि ।
उक्तिविशेषः काव्यं भाषा या भवति सा भवतु ॥ ]

इति राजशेखरीयं वचनं सर्वेषामस्माकं प्रमाणीभवितुमर्हति ।

अन्ततश्चेदमवश्यं प्रतिभासते विज्ञाप्यं वाचकमहाभागानां यद्यपि नाम्न मयूरो गैर्वाण्यां महाकविपदवीमर्हति तथापि नैतावतायं जनो विदुषां मानार्हो न भवतीति । महाराष्ट्रीविषये तु कविधुरीणत्वमस्य सर्वैरभ्युपगम्येतैव । अनेन च यथोपकृतं देशभाषाणां न तथा केनापि । कोऽप्यक्षुण्णश्च अभिनवश्च सरसमनोहरश्च पन्था महाराष्ट्र्याः प्रदर्शितः । उपगमिता चानेनैव महाराष्ट्री प्रौढतां च विदग्धजनादरणीयतां च । सुसंस्कृता च स्वलङ्कृता च भाषेयमनेनैव विदुषां मूर्धन्येन । अभिनवाश्च केचनालङ्कारा अनेनैवोपयुक्ताः । नैतादृशमलङ्कारयोजने प्रतिभानवत्त्वं केनाप्याधुनिकेन गैर्वाण्यां वा देशभाषायां वा प्रदर्शितं कुत्रापि वयं प्रपश्यामः । तद् ये केचनान्यदेशीया आत्मनो देशभाषायाः समुन्नतिमभिलष्यन्तो ग्रन्थमेतमालोचयेयुस्तैर्महाराष्ट्रभाषाया अध्ययनेन कवेरस्य परिचयेन च यथायोगमस्य रीतिः समभ्यसनीया च समादरणीया च समनुसर्तव्या चेति गरीयसी नः प्रत्याशा । एतावानेव विभवोऽस्य ग्रन्थस्य, इदमेव च परमं प्रयोजनमस्य संस्कृतकाव्यानामेकत्र संकलने च प्रकाशने च प्रकाशयितुरिति निवेद्य विरमामः ।

**वैद्यश्रीपरशुरामशर्मा ।**



महाराष्ट्र्यां कविसुहृदः "विठोबादादा चातुर्मासे" इत्यस्य स्तुतिपरं किमपि प्रकरणं विद्यते । तस्यादौ—

**वंदेऽहं विठ्ठलं दातुं शं देहं धृतवान्प्रभुः ।**
**संदेहं हंतुमुदितो मंदेहं योंऽशुमानिव ॥ १ ॥**

श्लोकोऽयमुपलभ्यते ।

# निवेदनम्



**श्रीमयूर**कविविरचितकाव्यसंग्रहग्रन्थमालाया नवमोऽयं खण्डः । मुद्रणसौकर्यार्थं व्यवहारसौकर्यार्थं चास्य कवेः काव्योदधिरस्माभिश्चतुर्षु विभागेषु विभक्तः । प्रतिविभागं च खण्डत्रयमित्यनया रीत्या अद्य यावद्विभागत्रयं च नव खण्डाश्चास्माभिः प्राकाश्यन्त । तत्र तावदादिमे विभागे खण्डत्रयेणार्याभारतम्, द्वितीये च हरिवंशः, मन्त्रभागवतम्, श्रीकृष्णविजयश्चेति ग्रन्थाः सम्मुद्रिताः । अस्मिंश्च तृतीये कवेरस्याष्टोत्तरं शतं रामायणानि मुद्र्यन्ते । अतश्चावश्यकमासीद् गैर्वाणीमयानां मन्त्ररामायणस्य श्रीरामनामाष्टोत्तरशतरामायणस्य मुक्तामालायाश्च मुद्रणमस्मिन्नेव विभागे । अवशिष्टानां तु काव्यानामतिस्वल्पत्वात्सर्वेषामेव गैर्वाणीमयानां काव्यानामेकस्मिन्नेव खण्डे मुद्रणं वयं समुचितममंस्महि । महाराष्ट्रप्रदेशे परां ख्यातिमुपगतस्य कवेरस्य गीर्वाणवाणीरसिकैः परिचिचीषाप्यपश्चिममस्माकं प्रयोजनम् । तदनुरोधेन च सर्वोऽप्यस्य देववाणीमयः काव्यसंग्रहोऽत्र सम्मुद्रितः ।

अस्मत्सुहृद्भिः धूलिनगरस्थांग्लपाठशालासंस्कृताध्यापकैः खुपेरकरोपाह्वैर्बालकृष्णाचार्यैस्तथा जलग्रामस्थसंस्कृतपाठशालाध्यापकैः 'लेले' इत्युपाह्वैः श्रीदत्तात्रेयशर्मभिस्तथा च पुण्यपत्तनस्थाभिनवांग्लपाठशालाध्यापकैर्वैद्यश्रीपरशुरामशर्मभिरत्र टिप्पण्यादिकं यथावत्संयोजितम् । श्रीमन्तो वैद्यपरशुरामशर्माणश्च कविकाव्यविमर्शात्मकेनोपोद्घातेन खण्डमेनं परं समभूषयन् । तदेतेभ्यो महोदयेभ्यः सुबहु धारयति कार्तज्ञं चैनान् वहति

सम्पादकः

**पराडकरश्रीरामकृष्णशर्मा ।**



# अनुक्रमणी




| | पृ० | प. सं. |
|---|---|---|
| १ मंत्ररामायणम् | | |
|     १ मङ्गलाचरणम् ... ... ... | १ | १३ |
|     २ कथाप्रस्तावः ... ... ... | ३ | १३ |
|     ३ बालकाण्डम् ... ... ... | ४ | २९९ |
|     ४ अयोध्याकाण्डम् ... ... ... | २६ | २६० |
|     ५ अरण्यकाण्डम् ... ... ... | ४७ | ३९० |
|     ६ किष्किन्धाकाण्डम् ... ... | ७७ | ३९० |
|     ७ सुन्दरकाण्डम् ... ... ... | १०७ | ४६८ |
|     ८ युद्धकाण्डम् ... ... ... | १४३ | १११८ |
|     ९ उत्तरकाण्डम् ... ... ... | २३० | १०२७ |
|    १० मंत्रगणना ... ... ... | ३०८ | १४ |
| | | ३९९२ |
| २ रामनामाष्टोत्तरशतरामायणम् ... ... | ३०९ | ३० |
| ३ रामस्तुतिः ... ... ... ... | ३१३ | ७२ |
| ४ रामनाममहिमा ... ... ... ... | ३२० | ११ |
| ५ रामाष्टकम् ( प्रथमम् ) ... ... | ३२१ | ८ |
| ६ ,, ( द्वितीयम् ) ... ... ... | ३२२ | ८ |
| ७ रामप्रार्थना ... ... ... ... | ३२३ | २ |
| ८ अम्लानपंकजमालाबन्धपञ्चकम् ... ... | ३२४ | ५ |
| ९ मुक्तामाला ... ... ... ... | ३२५ | ११५ |
| १० श्रीकृष्णस्तवनम् ... ... ... ... | ३४३ | १११ |
| ११ रामकृष्णस्तुतिः ... ... ... ... | ३५३ | ५० |
| १२ पांडुरंगस्तोत्रम् ( प्रथमम् ) ... ... ... | ३६१ | ३४ |
| १३ ,, ( द्वितीयम् ) ... ... ... | ३६४ | ५ |

| | | पृ. | प. सं. |
|---|---|---|---|
| १४ | पांडुरंगस्तोत्रम् (तृतीयम्) ... ... ... | ३६५ | २३ |
| १५ | ,, (चतुर्थम्) ... ... ... | ३६७ | २४ |
| १६ | ,, (पंचमम्) ... ... ... | ३७१ | ११ |
| १७ | शंकरस्तोत्रम् ... ... ... ... | ३७३ | २६ |
| १८ | हरिहरप्रार्थना ... ... ... ... | ३७७ | १० |
| १९ | श्रीकाशीक्षेत्रस्थप्रार्थना ... ... ... | ३७९ | २१ |
| २० | गंगाविज्ञप्तिः ... ... ... ... | ३८१ | २२ |
| २१ | मनःप्रार्थनाष्टकम् ... ... ... ... | ३८३ | ८ |
| २२ | दशमस्कंधमुख्यार्थगीतिः ... ... ... | ३८४ | *५२ |
| २३ | पद्यानि ... ... ... ... | ३८७ | ५ |
| २४ | आर्तिक्यानि ... ... ... ... | ३८९ | १० |
| २५ | शिवार्याशतकम् ... ... ... ... | ३९६ | १०३ |
| २६ | शिवाष्टोत्तरशतनामावलिः ... ... ... | ४०४ | १२ |
| २७ | श्रीराधानामावलिः ... ... ... | ४०५ | ९४ |
| २८ | श्रीकृष्णनामावलिः... ... ... ... | ४१२ | ३ |
| २९ | पद्यपरिशिष्टम् ... ... ... ... | ४१३ | ३ |
| ३० | स्फुटश्लोकाः ... ... ... ... | ४१४ | ४८ |
| | | | ४९१८ |


---

* इयं पद्यसंख्या कविमातृकामनुसृत्यैवात्र निर्दिष्टा। अस्माभिस्तु तत्र पज्झटिकावृत्तानुरोधेनैव २६ इति मुद्रितेति बोध्यम्।

# श्रीमयूरकृतेषु संस्कृतकाव्येषु

## मंत्ररामायणम्

### मंगलाचरणम्

( अनुष्टुभ्वृत्तम् )

**श्रीरामं मुदिरश्यामं वंदेऽहं देवनायकम्**
**सदा वदान्यप्रवरं प्रणतेप्सितदायकम्** १
**राकापतिमुखीं देवीं वंदे सीतां महासतीम्**
**यस्याः सद्रतसामर्थ्याच्छमिता अमिता द्विषः.** २
**महामतीन्सदा वंदे लक्ष्मणादीन्रघूद्वहान्**

---

श्रीगणेशाय नमः, श्रीसीतारामचन्द्राभ्यां नमः, नमः श्रीमते बलभीमाय. अथ मयूरनामा महाकविः मंत्ररामायणं नाम महाकाव्यं चिकीर्षुर्ग्रंथादौ आशीर्नमस्क्रियाद्यन्यतमं नमस्काररूपं मङ्गलं शिष्यशिक्षार्थं विघ्नप्रचयविनाशपूर्वकग्रन्थसमाप्तिफलप्राप्त्यर्थञ्चाचरति श्रीरामेति. १. श्रीयुक्तः रामः तम्, किं वा श्रियः पतिः =लक्ष्मीरमणः "श्रियः कमलवासिन्या रमणोऽयं मतो हरिः । तस्मात् श्रीराम इत्यस्य नाम सिद्धं पुरातनम् " इति पद्मपुराणे. २. मोदन्ते अनेनेति मुदिरः मेघः तद्वत् श्यामः तम्. ३. वदान्येषु दातृषु प्रवरं श्रेष्ठम्. ४. भक्तजनमनोरथपूरकम्. ५. राति सुखं सा राका तस्याः पतिः पूर्णचन्द्रः तद्वत् मुखं यस्याः ताम्. ६. सीता लाङ्गलपद्धतिः तदुद्भवत्वात् जनकेन राज्ञा स्वपुत्र्याः सीतेति नाम कृतम्. ७. 'यस्याः' इत्येवंरूपस्य पदस्य पुरःस्थितसामासिकपदवर्तिसद्व्रतशब्देन नियतसंबन्धेऽपि भाष्योदाहृतप्रामाण्यात् समासाभावः. अस्मिन् काव्ये बहूनि सन्त्येवैतादृशानि स्थलानि. न सर्वत्रास्माभिः स्फुटीक्रियंते तानि वाचकैः स्वयमेवोत्प्रेक्ष्यावगन्तव्यानि. ८. ऊर्ध्वं वहंति पितॄन् इति उद्वहाः पुत्राः. रघोः राघवस्य दशरथस्य उद्वहाः पुत्राः तान्.

येषां पुंमर्थाः[1] स्वप्नेऽपि परमा न रमाधवात्. ३

जगद्गुरुगुरुं वंदे वसिष्ठं तपसां निधिम्
द्विजराज इति प्राहुर्यं सर्वे ब्राह्मणाः सुराः[2]. ४

यस्तपस्वीश्वरः साक्षान्महादेव इव प्रभुः
वंदे तं गाधिजं तेजोनिधिना विधिना समम्. ५

राशिं सुतपसां शुद्धज्ञानदानविशारदम्
नारदं सन्मुनिं वंदे भवाब्धेः परपारदम्. ६

मनोज्ञं रामचरितं येन गीतं सविस्तरम्
वाल्मीकिं तमहं वंदे मंदेष्टशतसाधकम्[3]. ७

जगत्प्राणसुतं[4] वंदे हनूमंतं महौजसम्
यः श्रीरामकथासिंधौ चेतसा वेतसायितः[5]. ८

यशस्विप्रवरं वंदे सुग्रीवं वानरेश्वरम्
संप्राप्तौ हेतुरार्याया भार्याया राघवस्य यः. ९

जलधौ येन रचितः सेतुर्हेतुर्जयश्रियः
तं नलं वानरं वंदे यं देवा धन्यमूचिरे. १०

यत्नं ये चक्रुरनिशं जांबवत्प्रमुखा भृशम्
तानृक्षानंगदादींश्च[6] वंदे रामानुगान्कपीन्. ११

राजश्रेष्ठं दशरथं कौसल्याद्याश्च तत्प्रियाः
जनकं च महाराजं वंदे श्रीरामवंदितम्. १२

महीसुरान्[7]वामदेवप्रमुखानृत्विजः प्रभोः
श्रीकेशवं श्रीगणेशं वंदे विद्यागुरुं[8] हरिम्. १३

---

१. धर्मार्थकाममोक्षाः २. सुरा मदिरा अस्य अस्ति सुरः अर्श आदिभ्यो अच्. (समुद्रमंथनसमये देवैः सुरायाः स्वीकारः कृतस्तस्मात्तान् तदाप्रभृति सुरा इति वदन्ति). ३. मंदा अज्ञाः तेषां मनोरथशतानि साधयति तम्. ४. वायुपुत्रम्. ५. वेतसवत् कृताचरणः. वेतसायितः. (श्रीरामकथाश्रवणे सोत्कण्ठं प्रह्वीभूतचेता इति यावत्). ६. वानरविशेषान्. ७. भूदेवान् ब्राह्मणानित्यर्थः ८. एते किल कवेर्विद्यागुरवः इति प्रसिद्धिः.

## कथाप्रस्तावः

श्रीरामचरितं पुण्यं संक्षेपान्नारदो मुनिः
पृच्छते प्रथमं प्राह प्रेम्णा वाल्मीकये सते. १४
राशिरत्यच्छतपसां वाल्मीकिर्ब्रह्मणो वरात्
चक्रे रामायणं नाम महाकाव्यं[1] महाकविः. १५
महाकाव्यं पठन्त्सभ्यांश्छ्रावयेत्कः[2] सभास्विदम्
इति चिंतयतस्तस्य पादग्रहणमादृतौ[3] १६
जनकस्य[4] सुतापुत्रौ कृतवंतौ गुणार्णवौ
शिष्यौ कुशलवौ यौ तत्तावग्राहयत प्रभुः १७
यदा वचोविधेयं[5] तत्कृत्वा ताभ्यां मुनिव्रजे[6]
गीतं प्रीतं तयोस्तेषां चित्तं सर्वतपस्विनाम्. १८
राकापतिः स्वामृतेन चकोरानिव तानृषीन्
अर्थेन पौलस्त्यवधप्रबंधः[7] समतर्पयत्. १९
मधुरेणादिकाव्यस्य[8] स्वच्छेन मुनयोऽखिलाः
रसेनांबुमुचोऽत्यर्थं चातका इव तर्पिताः. २०
जगन्मनोहरं धीरौ तौ वीणास्वरमिश्रितम्
चतुर्मुखवरोद्भूतं महाकाव्यमगायताम्. २१
यच्छ्रुत्वा मुनयस्ताभ्यां ते प्रेमाश्रुपरिप्लुताः
वल्काजिनबृषीदंडकमंडलुकुशान्ददुः. २२
जनात्कथयतः श्रुत्वा गंधर्वाविव गायनौ[10]
नीतौ सदसि रामेण साकेते श्रोतुमुत्तमम्. २३
यथोपदेशं वाल्मीकेः कृतिं सुकृतिनां वरौ

---

१. सर्गबन्धात्मकं काव्यम्. २. 'नश्छे' त्यनेन पाणिनिसूत्रेणात्र धुडागमः ३. आदरयुक्तौ. ४. सापेक्षत्वेपि गमकत्वात् समासः ५. वचसः विधेयं=अनुकूलं मुखपाठमित्यर्थः ६. मुनिसमुदाये. ७. रामायणस्यैवेदं द्वितीयं नाम. ८. मधुरादयोऽत्रत्याः केचित् शब्दाः श्लिष्टा वर्तन्ते. ९. दर्भासनम्. १०. गानं कुर्वन्तौ.

आदितः कृतिनौ रामं श्रावयामासतुर्मुदा. २४

रावणारिर्वसिष्ठाद्यैर्ब्राह्मणैर्भ्रातृभिः प्रियैः
सचिवैः सह शुश्राव स्वं माहात्म्यं सभां गतः. २५

महर्षिणा स्वयं गीतमिति माहात्म्यमात्मनः
अपूर्वमिव लोकेशः श्रुतवानित्थमादरात्. २६

---

## बालकाण्डम्

श्रीमान्दशरथः सूर्यवंश आसीन्नृपोत्तमः
समस्तसत्पालनतो यः साक्षाद्विष्णुना समः. २७

राजधान्यामयोध्यायामुवास नयवित्कविः
रविः स्वशत्रुतमसः पुण्यात्मानुपमच्छविः. २८

महिषी तस्य कौसल्या कैकेयी दयिता भृशम्
सुमित्रा विनयोपेता पत्यौ यत्प्रेम नो कृशम्. २९

जन्म स्वमफलं मेने सोऽनपत्योऽतिचिंतया
नाभ्यनंदच्छ्रियं गुर्वीं, योऽपुत्रस्तस्य किं तया ? ३०

यष्टुं तुरगमेधेन संतत्यर्थं गुरुं मुनिम्
पृष्ट्वा नृपो मनश्चक्रे शक्रेष्टकृदुदारधीः. ३१

राजा सनत्कुमारोक्तं विभांडकमुनेः सुतम्
आनिन्ये स्वेष्टसिद्ध्यर्थं सुमंत्रात्सचिवाच्छ्रुतम्. ३२

महर्षिं लोमपादस्य सख्युर्जामातरं प्रियम्
शांतया कांतया साकमृश्यशृंगं तपोनिधिम्. ३३

जपतां वर आयाते तस्मिन्त्सर्वस्वदाक्षिणः
अश्वमेधोऽभवद्राज्ञः सर्वेषां विस्मयावहः ३४

यज्ञादनंतरं चक्रे पुत्रीयामिष्टिमस्य सः
स्वभागग्रहणायास्यां सुराः सर्वे समागताः ३५

---

१. तुरगः मेध्यते ( हिंस्यते ) अत्र स यज्ञस्तुरगमेधः.

जगतां पीडकं हंतुं रावणं वरदर्पितम्
ब्रह्माणं प्रार्थयामासु'रुपायं चिंतये'ति तम्. ३६
यदैवं प्रार्थितो धाता संचिंत्योपायमब्रवीत्,
'वरेऽभयं न मर्त्येभ्योऽवज्ञया दशकंधरः ३७
राक्षसेंद्रो नरात्तस्मान्नाशं प्राप्स्यति सर्वथा.'
विधाविस्थं वदत्यग्रायये विष्णुर्महायशाः ३८
'मनुष्यस्त्वं भवे'त्यूचुः प्रणतास्त्रिदशाः प्रभुम्
'राज्ञो दशरथस्यास्य स्त्रीषु हंतुं निशाचरम्.' ३९
श्रीशः सुरांस्तथेत्युक्त्वा गतोऽतर्धानमाश्रितः
पुमान्प्रादुरभूदिष्ट्यां पुत्रियायां महाद्भुतः. ४०
राज्ञे ददौ स्वर्णपात्रीं दिव्यपायससंभृताम्
'देहि दारेभ्य' इत्युक्त्वा तत्रैवांतर्हितोऽभवत्. ४१
महिष्यै तद्ददावर्धं पायसं संततिप्रदम्,
अर्धादर्धं सुमित्रायै दत्तवान्रघुनंदनः ४२
जगतीशश्चरोरर्धं कैकेय्यै प्रददावथ,
अवशिष्टं सोऽष्टमांशं सुमित्रायै पुनर्ददौ. ४३
यज्वनस्तस्य तास्तिस्रः पत्न्यो गर्भान्प्रपेदिरे.
अत्रांतरेऽब्रवीद्ब्रह्मा सुरान्सर्वान्समागतान्, ४४
'रावणं राक्षसं हंतुमवतीर्णस्य मापतेः
सहायान्वानरानृक्षान्सृजध्वमुरुविक्रमान्. ४५
मम वक्त्रादभूत्पूर्वं जृंभमाणस्य बुद्धिमान्
ऋक्षराड् जांबवान् विष्णोः स सहायो भविष्यति.' ४६

---

१. महिष्यै कौसल्यायै प्रथमं चरोरर्धभागो दत्तः, ततश्चार्धादर्धभागः ( चतुर्थांशभाग इत्यर्थः ) सुमित्रायै. ततः कैकेय्यै अवशिष्टचरोरर्धभागो अष्टमांश इत्यर्थः ( कैकेय्यपेक्षया ज्येष्ठत्वं कौसल्यापेक्षया कनिष्ठत्व च सुमित्राया विचार्य पादोनांशार्धदानम्. तस्यै कनिष्ठत्वाच्च कैकेय्यै अष्टमांशदानम्. वल्लभायां संभोगकर्मणि पक्षपातो न तु धर्मविभागकर्मणि इति तिलककृतो निर्णयःप्रमाणत्वेनात्रावधार्यः ).

जलजप्रभवाज्ञप्ताश्चक्रुर्देवास्तथैव ते;[1]
शक्रसूनुरभूद्वाली सुग्रीवः सूर्यनंदनः ४७
यशस्विनं बुद्धिमंतं तारं नाम महाकपिम्
धिषणोऽजनयत्पुत्रं देवानां कार्यसिद्धये.[2] ४८
जज्ञे धनपतेः पुत्रः स नाम्ना गंधमादनः,
अग्नेर्नीलो, नलः कीशप्रवरो विश्वकर्मणः[3] ४९
यथाश्विनौ तथा मैंदद्विविदावपि तत्सुतौ;
पर्जन्यपुत्रः शरभः सुषेणो वरुणात्मजः. ५०
राक्षसांतकरः श्रीमान्हनूमान्मारुतात्मजः
वज्रसंहननः साक्षाद्रुद्रतुल्यपराक्रमः[4] ५१
महांतो जज्ञिरेऽसंख्याः सुरांशाः सत्यविक्रमाः
ऋक्षवानरगोपुच्छास्तुच्छा येषां पुरः परे.[5] ५२
श्रीमती द्वादशे मासे चैत्रे शुक्ले पुनर्वसौ[6]
कौसल्या जनयद्रामं नवम्यां कर्कटे शुभे. ५३
राजप्रियायां कैकेय्यां जज्ञे सत्यपराक्रमः
पुष्ये मीने शुभे लग्ने भरतः सद्गुणाकरः. ५४
माहिते समये सार्पे कुलीरे शुभलक्षणौ[7][8]
पुत्रौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ.[9] ५५
जज्ञिरे नृपतेः पुत्राश्चत्वारः सद्गुणाकराः
सुरूपाः सुमहात्मानो रुच्या प्रोष्ठपदोपमाः[10] ५६
यदैषां संभवो दव्यो गंधर्वा ननृतुर्जगुः
नेदुर्दुंदुभयो दिव्याः पेतुः सुमनसश्च खात्.[11] ५७

---

१. कमलजन्मा—ब्रह्मा तेन. २. बृहस्पतिः ३. वानरश्रेष्ठः ४. वज्रदेही. (संहननं—शरीरं ). ५. कृष्णमुखो वानरविशेषः ६. यद्यपि प्रजननमासो नवम एव भवति तथाप्यत्र पुत्रेष्टिमारभ्य द्वादशमासो ग्रहीतव्यः ७. सर्पदेवताकाश्लेषानक्षत्रे. ८. कर्कलग्ने. ९. युग्मौ. १०. तारकाचतुष्टयत्वादिदं नक्षत्रं चतुर्णामेतेषां पुत्राणामुपमानभूतम्. ११. पुष्पाणि. (' सुमनस् 'शब्दोऽयं प्रायः स्त्रियां भूम्नि च वर्तते).

राजा महोत्सवे तस्मिन्विप्रादिभ्यो धनं मुदा
नानाविधं भूरि ददौ तदौदार्यं सुनिस्तुलम्. ५८

महो[2] महानयोध्यायामासीद्दशरथो यदा
चकार नामकरणं तेषामह्नि त्रयोदशे[3]. ५९

जना जगुः श्रुतं[4] राज्ञः सूनोर्ज्येष्ठस्य यत्कृतम्
नाम राम इति प्रेम्णा वसिष्ठेन पुरोधसा. ६०

यच्च पुत्रस्य कैकेय्या भरतेति तथा द्वयोः
लक्ष्मणेति सुमित्रायाः शत्रुघ्नेति च पुत्रयोः. ६१

जगृहुः कृतसंस्कारा विद्याः सर्वाः कलाश्च ते,
श्रीरामस्त्वधिकस्तेषां ग्रहाणामिव भास्करः. ६२

यथान्योन्यमतिस्निग्धौ कुमारौ रामलक्ष्मणौ
तथा भरतशत्रुघ्नौ क्षणार्धविरहासहौ. ६३

राघवो[5]ऽथ महाभागस्तेषां दारक्रियां प्रति
चिंतयामास धर्मात्मा सोपाध्यायः सबांधवः. ६४

महात्मनश्चिंतयतो मंत्रिमध्येऽस्य तत्क्षणम्
गाधिजोऽभ्यगमद्राज्ञे द्वास्थैरावेदितो द्रुतम्. ६५

श्रीमंतं तं मुनिं राजा प्रत्युद्गम्य यथाविधि,
पूजयामास पूजार्हं ब्रह्माणमिव वासवः. ६६

राजर्षिस्तमुवा' चार्य ! यदर्थं त्वमिहागतः
तत्कार्यं ब्रूहि कर्ताहं[6], दैवतं हि भवान्मम.' ६७

महर्षिस्तद्वचः श्रुत्वा हृष्टरोमाऽभ्यभाषत,
'निश्चयं कुरु कार्यस्य भव सत्यप्रतिश्रवः[7] ६८

जनेंद्र ! शृणु मारीचः सुबाहुश्च निशाचरौ
यज्ञविघ्नकरौ शप्तुं तावहं नोत्सहे व्रती. ६९

---

१. अतिशयेन तुलाया निर्गतममर्यादमित्यर्थः २. उत्सवः ३. क्षत्रियस्य द्वादशाहं सूतकमिति श्रुतेः त्रयोदशे इत्युक्तिः ४. शास्त्रज्ञानम्. ५. दशरथः ६. करिष्यामि. ७. सत्यप्रतिज्ञः.

यमस्य[1] विषयं नेतुं तौ खलौ ब्राह्मणद्विषौ
काकपक्षधरं[2] रामं पुत्रं मे दातुमर्हसि. ७०
रात्रिंचरवधे देव ! दिव्येन स्वेन तेजसा
मयाभिगुप्तः शक्तस्ते रामः कामप्रभाहरः. ७१
मनुजेश ! प्रदास्यामि श्रेयश्चास्मै महत्तरम्,
येन त्रिष्वपि लोकेषु परां ख्यातिं प्रयास्यति.' ७२
जगाद गाधिजं राजा पुत्रविश्लेषकातरः
'ऊनषोडशवर्षो मे रामो राजीवलोचनः. ७३
धर्मीद्र ! राक्षसैरस्य न पश्याम्याजियोग्यताम्,
त्वं मे बहिश्चरप्राणं न रामं नेतुमर्हसि. ७४
जन्यं[3] कर्ताहमेवार्य ! राक्षसैस्तैः सह स्वयम्
अक्षौहिण्यानया सार्धं मां दासं नेतुमर्हसि. ७५
यदि वा राघवं ब्रह्मन् ! नेतुमिच्छसि सुव्रत !
चतुरंगसमायुक्तं मया सह च तं नय. ७६
राक्षसौ कस्य तौ पुत्रौ किंवीर्यौ कं समाश्रितौ
सर्वं मे शंस भगवन् ! वृत्तं ब्रह्मद्विषोस्तयोः. ७७
महर्षिः कथयामास, 'रावणानुचरौ खलौ
तौ मारीचसुबाहू द्वौ पुत्रौ सुंदोपसुंदयोः. ७८
श्रीमतागस्त्यमुनिना शप्तौ राक्षसतां गतौ
रावणप्रहितौ कर्तुं यज्ञविघ्नं महाबलौ.' ७९
राजा प्रोवाच, 'भगवन् ! ब्रह्मदत्तवरः[4] परः
नाहं तत्पुरतः स्थातुं शक्तः संग्राममूर्धनि. ८०
महेंद्रप्रमुखा देवाः सोढुं शक्ता न रावणम्,
मानवानां कथा कैव स दुरात्मा श्रुतो मया. ८१

---

१. यमस्य प्रदेशं—यमनगरं हन्तुमित्यर्थः २. मस्तकपार्श्वद्वयस्थः केशरचनाविशेषः—'झुलपे' इति महाराष्ट्रभाषायाम्. ३. युद्धम्. ४. "नानाविधेभ्यो भूतेभ्यो भयं नान्यत्र मानुषात्" इत्येवंरूपस्तस्योऽय वरः.

जगत्कर्त्रा ब्रह्मणा योऽनुगृहीतिः स दानवः
हिरण्यकशिपुर्दैत्यस्तेजसार्यं सदा नवः. ८२
यस्मात्क्रूरतरः स्पष्टं रावणो लोकरावणः
मर्त्यस्तेन विरोधं कः कर्ता नाहं क्षमो मुने!' ८३
राज्ञि तस्मिन्ब्रुवत्येवं संक्रुद्धः कौशिकोऽब्रवीत्
'अलं, गच्छाम्यहं राजन्! सुखी भव सुहृद्वृतः.' ८४
मन्[१]योस्तस्य प्रभावज्ञो वसिष्ठो भगवान्नृपम्
उवाच, 'नैनं राजर्षे! प्रत्याख्यातुं त्वमर्हसि. ८५
जन्मनस्तेऽस्तु साफल्यं क्षिप्रं रामं विसर्जय,
कृतास्त्रमकृतास्त्रं वा गुप्तं कुशिकसूनुना. ८६
यत्नवंतोऽपि नालं ते रामं धर्षयितुं परे.
कृशाश्वपुत्रास्त्रशतं दत्तमस्मै पिनाकिना. ८७
जयायायमलं तेषां विश्वामित्रो महायशाः.
तव पुत्रहितार्थाय त्वामुपेत्याभियाचते.' ८८
यशस्करं गुरोर्वाक्यं स्वीकृत्य प्रकृ[२]तिं गतः
राजा दशरथो राममाजुहाव सलक्ष्मणम्. ८९
राजमानं विशेषेण जनन्या समलंकृतम्
कृतस्व[३]स्त्ययनं नत्वा तं तस्मै मुनये ददौ. ९०
महोत्सवोऽभवद्वायुः सुखस्पर्शस्तदा ववौ
पुष्पवृष्टिर्महत्यासीद्देवदुंदुभिनिः[४]स्वनः. ९१
श्रीमान्मुनिर्ययावग्रे ततो रामो महायशाः
काकपक्षधरो धन्वी तं च सौमित्रिरन्वगात्. ९२
राजपुत्रौ धनुष्पाणी चारुरूपौ महामुनिम्
अनुजग्मतुरक्षुद्रौ पितामहमिवाश्विनौ. ९३
महर्षिमनुयातौ तौ महासत्त्वावनिंदितौ

---

१. क्रोधस्य. २. स्वास्थ्यम्. ३. 'स्वस्त्यस्तु ते' 'स्वस्त्यस्तु ते' इत्युच्चार्य क्रियमाणो विधिः स्वस्त्ययनम्. ४. देवदुन्दुभिनिःस्वनश्च महानासीदित्यर्थः.

स्थाणुं देवमचिंत्यं तं कुमाराविव पावकी[1]. ९४
जनार्दनाय गत्वासौ मुनिरध्यर्धयोजनम्
बलां चातिबलां विद्यां ददौ क्षुत्तृट्श्रमापहाम्. ९५
यतात्मोवास सरयूतीरे ताभ्यां[2] विभावरीम्[3]
स्थाणोरथाश्रमं गंगासरय्वोः संगमेऽगमत्. ९६
राघवौ श्रीगुरोस्तत्र रुद्रनेत्राग्निना कृतम्
श्रुत्वा कृतागसो दाहं कामस्य मुदमापतुः. ९७
महेशशिष्यैर्मुनिभिः पूजितौ गुरुणा सह
उषित्वा रजनीं तत्र गंगातीरमुपागतौ. ९८
जन्हुकन्यामुत्तरंतौ नावा मुन्युपनीतया
मानसात्[4]सरयूत्पत्तिं पुण्यां शुश्रुवतुर्गुरोः. ९९
यद्दारुणं वनं दृष्टं पृष्ट'मीदृक्कथं न्वि'ति.
कौशिकः प्राह, 'वत्सैतच्छृणु त्वां कथयाम्यहम्. १००
जलजाक्ष! पुरा वृत्रहंतुर्हत्याहतद्युतेः[5]
प्रायश्चित्तेन संत्यागस्तनोर्मलकरूशयोः. १०१
यस्माद्राघव! भद्रं ते, नाम्नेंद्रवरदानतः
मलदश्च[6] करूशश्च[6] जातौ जनपदाविमौ. १०२
राघवास्ते सुंदभार्या यक्षिणी कामरूपिणी
बलं नागसहस्रस्य धारयंती सुदारुणा. १०३
मदिरामांसनिरता ताटका नाम दुर्मतिः
मारीचमाता तातास्मिन्कानने ऽध्यर्धयोजने. १०४
श्रीमंस्त्वमागतां दुष्टां तामस्मद्वचनाज्जहि,
भविष्यति यशः पुण्यं पापमण्वपि ते न हि.' १०५
'राक्षस्येषा कथं जाता, बलं चास्यामियत्कथम्?'

---

१. स्कंदः २. रामलक्ष्मणाभ्यां सह. ३. रात्रिं—"कालाध्वनोरत्यन्तसंयोगे" इत्यनेन द्वितीया. ४. कैलासपर्वते राम मनसा निर्मितं परं । ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः. ५. ब्रह्मपुत्रस्य वृत्रस्य वधेन नष्टकान्तेरिन्द्रस्य. ६. देशभेदः.

इति पृष्टो मुनिः प्राह, 'वत्सैतदपि मे शृणु. १०६
महत्तपश्चकारैकः सुकेतुर्यक्षनायकः
ब्रह्मणास्मै सुता दत्ता बकवत्यतिरूपिणी. १०७
जलजासनलब्धां तां ताटकां नाम कन्यकाम्
जंभपुत्राय सुंदाय प्रादादतिबलां पिता. १०८
यक्षी मारीचनामानं सुतं लेभे महाबलम्.
कृतापराधोऽगस्त्येन हतः सुंदो महात्मना. १०९
राक्षसत्वमियं प्राप्ता सपुत्रा ताटका कुधीः
पतिघ्नं हंतुमिच्छंती शापात्तस्यातितेजसः ११०
मन्नियोगात्त्वया राम! हन्तव्यैषातिदारुणा.
जातुचिल्लङ्घितो नाग्निः सुदृढेनापि दारुणा.' १११
जलदश्यामलो रामः 'श्रुतिराज्ञा तवार्य! मे.'
इत्युक्त्वा सज्जकोदंडो ज्यानिनादं तदाकरोत्. ११२
यक्षी श्रुत्वा महानादं वात्येवाभ्यद्रवद्रुषा
चकार गर्जनां घोरां लयमेघघटेव सा. ११३
जघान रामस्तां मायां कुर्वतीं विकृताकृतिम्
लक्ष्मणेनाशुगैरुग्रैश्छिन्नकर्णाग्रनासिकाम्. ११४
यशस्विनं मुनिं रामं तुष्टावाभ्येत्य वासवः
ववर्ष दिव्यैः कुसुमैर्जगुर्गंधर्वसत्तमाः. ११५
'रामायास्त्रशतं देही' त्युक्त्वेंद्रो गाधिनंदनम्
ययौ हृष्टैः सुरैः स्वर्गं भर्गो हृष्टेव तुष्टधीः. ११६
महामना मुनी रामलक्ष्मणाभ्यां समन्वितः
उवासैकां वने तस्मिञ्शर्वरीं शर्वरीतिभृत्. ११७
श्रीकंठ इव सुप्रीतो मूर्ध्न्युपाघ्राय कौशिकः
दण्डचक्राद्यस्त्रशतं ददौ रामाय धीमते. ११८

---

१. चक्रवात इव. २. प्रलयकालीनो मेघः ३. शर्वस्य रीतिं बिभर्ति इति शंकर-सदृश इत्यर्थः.

[1]रागवान्यत्र तपसि चिरं सिद्धाश्रमे प्रियम्
कश्यपादितिशक्राणां कर्तुं हर्तुं बलेः श्रियम् ११९
महर्षिः पाययित्वा तद्वामनस्य यशोमृतम्
निन्ये तमाश्रमं रामं विष्णुभक्त्यात्मना वृतम्. १२०
जहृषुस्तापसा दृष्ट्वा गाधिजं रामलक्ष्मणौ
सोत्साहौ षडहोरात्रं तपोवनमरक्षताम् १२१
'यष्टुमद्यैव दीक्षां त्वं प्रविशे'ति कृतांजली
राघवौ मुनिशार्दूलमूचतुस्तावरिंदमौ. १२२
राजपुत्रौ समाश्लिष्य प्रहृष्टो मुनिपुंगवः
प्रविवेश तदा दीक्षां नियतो नियतेंद्रियः. १२३
मर्दितुं राक्षसान् यत्तावनिद्रौ रामलक्ष्मणौ
सोत्साहौ षडहोरात्रं तपोवनमरक्षताम्. १२४
जलदाविव मारीचसुबाहू नभसि[2] स्थितौ
वेदीममेध्यवर्षेण[3] दूषयामासतुः क्रतोः. १२५
यत्तेन रामभद्रेण मारीचः शतयोजनम्
क्षिप्तोऽब्धौ मानवास्त्रेण वातेनेव तरुच्छदः[4]. १२६
जवेनोत्सार्य मारीचं सुबाहुं कुणपाशनम्
ददाह रामोऽग्न्यस्त्रेण स्वनाग्नेवाचपर्वतम्. १२७
यशस्विप्रवरः शीघ्रं तयोरनुचरान्खलान्
शेषान्वायव्यमादाय निजघान रघूद्वहः. १२८
राशिभिः पुण्यतपसां सर्वैराश्रमवासिभिः
ऋषिभिः पूजितो रामो यथेंद्रो विजये पुरा. १२९
'मम सिद्धाश्रमो राम! कृतोऽन्वर्थस्त्वये'त्यमुम्

---

१. अन्वयार्थः—यत्र सिद्धाश्रमे कश्यपादितिशक्राणां प्रियं कर्तुं बलेः श्रियं हर्तुं चिरं तपसि रागवान् आसीत् तत् वामनस्य यशोमृतं महर्षिः पाययित्वा विष्णुभक्त्यात्मना वृतं रामं तं आश्रमं निन्ये. २. आकाशे. ३. अमंगलरक्तमांसादीनां वृष्ट्या. ४. वृक्षपर्णम्.

प्रशस्य गाधिजस्ताभ्यां सायंसंध्यामुपागमत्. १३०

श्रीरामः सानुजः प्रातर्विधिं कृत्वा कृतांजलिः
'किंकरः किं करोमी'ति गुरुं गाधिजमब्रवीत्. १३१

राजर्षिपुत्रं तं प्राह मुनि'र्जनकभूभुजः
यज्ञो भविष्यत्यचिरात्तत्र यास्यामहे वयम्. १३२

मखं द्रष्टुं त्वमस्माभिः सह राम! गमिष्यसि
तत्र शंभोर्धनुर्दिव्यं द्रक्ष्यस्यमितविक्रम! १३३

जनकस्य सभायां तद्ध्रियतेऽरिनिबर्हणम्
पादपद्मामिवेशस्य सदा सद्भिः समर्चितम्. १३४

यत्सुरासुरगंधर्वराक्षसैर्वसुधाधिपैः
अशक्यारोपणं राम! धनूरत्नं प्रयत्नतः.' १३५

राममुक्त्वैवमामंत्र्य कौशिको वनदेवताः
सर्षिसंघः सकाकुत्स्थः स जगामोत्तरां दिशम्. १३६

महर्षिमनुजग्मुस्तं मृगाणां पक्षिणां गणाः
निवर्तयामास स तान्त्सर्वसत्त्वसुहृत्स्वयम्[1]. १३७

जनितप्रमुदे[2] शोणातीरे रामाय पृच्छते
कथयामास पूर्वेषां मुनिर्माहात्म्यमात्मनः. १३८

ययावथ ततो देशाद्गंगायास्तटमुत्तमम्
तत्राप्यकथयद्गंगामाहात्म्यमखिलं मुनिः. १३९

जन्म स्कंदस्य चरितं सगरस्य च विस्तरात्
गंगावतरणं पुण्यं कौशिकोऽकथयत्स्वयम्. १४०

यमुनायाः सखीं गंगामुत्तीर्य स तपोनिधिः
विशालां नगरीं प्राप्य तत्रोवास महायशाः. १४१

राघवेणा'र्यं कस्येयमि'ति पृष्टे प्रसंगतः
क्षीरोदमथनं प्रोक्तं युद्धं देवासुरोद्भवम् १४२

---

१. सर्वसत्त्वानां सुहृत्–विश्वामित्र इत्यर्थः. २. जनिता प्रमुत् यस्य–तस्मै जनितप्रमुदे.

मरुतां[1] जन्म च दितेस्तत्तपःस्थान उत्तमे
पुर्यां इक्ष्वाकुवंश्येन विशालेन निवेशनम्. १४३
श्रीमता गाधिजेनेदं प्रोक्तं रामाय सादरम्
विशालाधिपती राजा सुमतिस्तानपूजयत्. १४४
रात्रिं तत्रातिवाह्यायं मिथिलोपवनं ययौ
तत्र दृष्ट्वाश्रमं रम्यं निर्जनं मुनिपुंगवम् १४५
मधुरं मधुराभाषी मनुजेश्वरनंदनः
रामः पप्रच्छ, 'कस्येदं स्थानमीदृक् कथं प्रभो!' १४६
जगद्गीततपाः प्राह, 'वत्सासीदत्र गौतमः
सोऽहल्यया सहातिष्ठत्तपः सुचिरमात्मवान्. १४७
यत्नादहल्यां बुभुजे शक्रो गौतमरूपभाक्
तया 'त्वं मां च रक्षे'ति प्रोक्तोऽगादुटजाद् द्रुतम्. १४८
राजानं द्युसदां[2] ज्ञात्वा मुनिर्वेषं कृतागसम्
'अफलस्त्वं[3] भवे'त्येवं मुनिवर्योऽशपद्रुषा. १४९
महेंद्रस्यार्षिशप्तस्य पेततुर्वृषणौ भुवि
तथा शप्त्वा स देवेशं भार्यामपि च शप्तवान्. १५०
जयंतजनकेनासि यत्त्वं ज्ञात्वापि संगता
अदृश्या सर्वभूतानां वाताहारा भविष्यसि. १५१
यदैतच्च वनं घोरं रामो दशरथात्मजः
आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि. १५२
जगदेकपवित्रस्य रामस्याद्भुतकर्मणः
करिष्यसि यदातिथ्यं मत्संगं त्वं तदाप्स्यसि.' १५३
यथोक्तं तत्तथा जातं स गतस्तुहिनाचलम्
मेषस्य वृषणौ दत्तौ जिष्णोरग्निपुरोगमैः १५४
साद्गुणेवामृतरुचेर्मंडलं राम! सन्मुनेः

---

१. 'मा रुदः' 'मा रुदः' इति इंद्रेणाश्वासितत्वात् ते दितेः पुत्राः 'मरुत्' इति संज्ञां प्राप्नुवन्ति स्म. २. देवानां. ३. गतवृषणः

कलत्रं ग्रस्तमत्रास्ते दोषेण त्वं विमोचय १५५
मया सहाश्रमे तत्त्वं प्रविशाशु रघूत्तम !'
इत्युक्तोऽसौ तथा चक्रे वक्रेतरसुहृन्मणिः १५६
श्रीराम आश्रमे तस्मिन्प्रविष्टे गुरुणा सह
सतां सात्त्विकवृत्त्यासौ साकं प्रादुरभूत्क्षणात्. १५७
राहित्येनैनसो यस्य साहित्येनाशु सा सती
शापस्यांतमुपागम्य तेषां दर्शनमागता. १५८
महाविनयसंपन्नौ महन्महद्दर्शनौ
राघवौ तु तदा तस्याः पादौ जगृहतुर्मुदा. १५९
'जये'त्युक्त्वा रामपादौ नत्वाहल्या सुदर्शना
अर्घ्यं पाद्यं तथातिथ्यं चकार सुसमाहिता. १६०
यतिभिः स्वांतमध्ये यो ध्येयो वेदांतवेदिभिः
प्रतिजग्राह काकुत्स्थः प्रेम्णा पूजां तया कृताम्. १६१
रामायां मुनिवर्यस्य रामे च रघुनंदने
पुष्पवृष्टिर्महत्यासीद्दिव्यदुंदुभिनिःस्वनैः. १६२
महान्समुत्सवो ह्यासीद्गंधर्वाप्सरसां तदा,
'साधु साध्वि'ति देवास्तामहल्यां समपूजयन्. १६३
जगाम मिथिलां रामो गौतमेनाभिपूजितः
अहल्यां प्राप्य परमां कीर्तिं च मुदितात्मना. १६४
यजमानो मुनिं प्राप्तं श्रुत्वा सह पुरोधसा
शतानंदेन ऋत्विग्भिर्हृष्टः प्रत्युज्जगाम तम्. १६५
जनकः पूजयामास गाधिजं परमादृतः
तौ रामलक्ष्मणौ दृष्ट्वाऽपृच्छत्'कस्यात्मजावि'ति. १६६

---

१. वक्रेभ्यः (दुर्जनेभ्यः) ये इतरे अर्थात् सरलाः-सज्जनाः तेषां सुहृदः तेषु च मणिरिव. २. येषां साहित्येन आशु शापस्य अन्तं उपागम्य [एनसो राहित्येन] उपलक्षिता सा सती [जाता] तेषां दर्शनमागता. ३. महतां महः उत्सवः तं ददातीत्येतादृशं दर्शनं ययोस्तौ. ४. स्वनयति ध्यायति ब्रह्मरूपं यस्मिन् तत्स्वान्तं, तन्मध्ये.

'यदृच्छया भुवं प्राप्तावाश्विनाविव सुन्दरौ
भूषयन्ताविमं देशं चंद्रसूर्याविवांबरम्.' १६७

राजर्षि गाधिजः प्राह, 'प्रियौ दशरथात्मजौ
इमौ मया समानीतौ, महाभागौ महाबलौ. १६८

मद्यज्ञविघ्नशमनावहल्यागौतमार्चितौ
द्रष्टुं तव क्रतुं प्राप्तौ शैवं चात्यद्भुतं धनुः' १६९

श्रीमाञ्ज्येष्ठः शतानंदो गौतमस्यात्मजो मुनेः
श्रुत्वा मातुः समुद्धारं प्रहृष्टो राममब्रवीत्. १७०

'राजपुत्र ! महाप्राज्ञ ! राजवंशविभूषण !
स्वागतं ते नरश्रेष्ठ ! दिष्ट्या प्राप्तोऽसि राघव ! १७१

मह्यां धन्यतरो राम ! त्वत्तो नास्तीह कश्चन,
गोप्ता कुशिकपुत्रस्ते येन तप्तं महत्तपः. १७२

जगत्यधिपतिः पूर्वमेष आसीन्महाबलः
जहार लोभात्सुरभिं वसिष्ठस्य महात्मनः १७३

यवनैर्निर्जितः क्रूरैः कल्माषीनिर्मितैरयम्
हुंकारेण वसिष्ठस्य दग्धसैन्योऽप्रभोऽभवत्. १७४

रामैष रुद्रमाराध्य प्राप्यास्त्राण्यद्भुतान्यपि
वसिष्ठब्रह्मदंडेन भग्नदर्पोऽभवत्पुनः, १७५

मत्वा ब्राह्मं बलं श्रेष्ठं तुच्छं क्षात्रमयं तदा
ब्रह्मत्वकारणं घोरं चकार सुमहत्तपः. १७६

जगत्कर्ता जगामाब्दसहस्रांते सुरैर्वृतः
'मन्ये गाधिज! राजर्षिं त्वामि'त्युक्त्वा दिवं ययौ. १७७

यत्कृतं तद् वृथा मत्वा भूय एव महातपाः
तपश्चचार रामायं ब्रह्मर्षित्वाप्तये भृशम्. १७८

जगत्प्रथित इक्ष्वाकुवंशजो नृपसत्तमः
त्रिशंकुरिति यन्नाम वसिष्ठेन महात्मना १७९

---

१. कल्माषी शबला=चित्रवर्णा होमधेनुः, तया निर्मितैः.

यस्त्यक्तो गुरुपुत्रैश्च नीतश्चांडालतां हठात्
स एनं शरणं प्राप्तोऽमुना संप्रेषितो दिवम्. १८०
रामान्यामद्भुतां सृष्टिं कर्तुमेष समुद्यतः
प्रार्थितस्त्रिदशैः सर्वैर्विरराम महायशाः. १८१
'महान्विघ्नः प्रवृत्तोऽत्र' इति मत्वायमीश्वरः
पुष्करेषु तपस्तेपे रामभद्र! महातपाः. १८२
श्रीमानयं शुनःशेपं मृत्युपाशादमोचयत्
अंबरीषाध्वरे राम! यत्कृते शप्तवान्सुतान्. १८३
राघवायं तपस्तेपे दश वर्षशतान्यमुम्
'ऋषिस्त्वमसि भद्रं त' इति ब्रह्माब्रवीत्पुनः. १८४
महत्तपः पुनश्चक्रे तत्रापि स्नातुमागताम्
दृष्ट्वैव मेनकां देवीमभजद्दश वत्सरान्. १८५
जनाधिपैष तत्रापि ज्ञात्वा देवैस्तपो हृतम्
कौशिकीतीरमासाद्य तपस्यामकरोत्पराम्. १८६
यतात्माब्दसहस्राणि तपः पर्वत उत्तरे
घोरं चकार रामास्माद्देवतानामभूद्भयम्. १८७
राजीवासन[1] एत्याह, 'महर्षे! वत्स! कौशिक!
महत्त्वमृषिमुख्यत्वं ददामि तव तोषितः.' १८८
महादेवमुवाचायं भवान्यपि पितामह!
महर्षिरिति मां नाह किमहं न जितेंद्रियः?' १८९
जगत्स्रष्टामुमाह, 'त्वमद्यापि न जितेंद्रियः
जितेंद्रियत्वं दुष्प्रापमिति मन्यामहे वयम्. १९०
यतस्व वत्स! तत्प्राप्तुमित्युक्त्वा त्रिदिवं गतः.
ऊर्ध्वबाहुर्वायुभक्ष्यः पुनर्घोरं तपोऽचरत्. १९१
जगत्युग्रतपस्यस्ते रंभा जंभारिणा बलात्
प्रेषिता लोभनं कर्तुं मुनेरस्य रघूत्तम! १९२

---

१. कमलासनो ब्रह्मा.

यदुक्तमात्मना कार्यं महेंद्रस्तस्य सिद्धये
पिकभावमुरीकृत्य तस्याः पार्श्वमुपागमत्. १९३
रामया राम! याश्चेष्टा मनसो लोभनोचिताः
आरब्धाः सन्निधावस्य [1]समधुस्मरया तया. १९४
मन्युना तां शशापायं, '[2]शैली स्थास्यसि दुर्भगे!
वर्षायुतमिति ज्ञात्वा शक्रकृत्यमिति प्रभो! १९५
'श्रीमान्ब्राह्मण एतस्माच्छापात्त्वामुद्धरिष्यति.'
इत्थं चकार भगवानयं तस्यामनुग्रहम्. १९६
राजा सुराणामेतस्य तपोपहरणे कृते
निर्गतः स च कंदर्पस्ततसोयमपि तद्दिशः. १९७
[3]महामुनिरयं पूर्वां दिशं प्राप्य सुदारुणम्
सहस्रवर्षपर्यंतं [4]काष्ठमौनं व्रतं श्रितः. १९८
जपतां वर एतस्मिन्व्रतांते भोक्तुमिच्छति,
शक्रो ब्राह्मणरूपेण सिद्धमन्नमयाचत. १९९
यद्यप्यन्नमशेषं तद्भक्षितं राम! जिष्णुना
न किंचिदवदद्विप्रं मौनव्रतमुपाश्रितम्. २००
रात्रिंदिवमनुच्छ्वासं मौनमासीत्पुनस्तथा
अस्यानुच्छ्वसमानस्य मूर्ध्नि धूमो व्यजायत. २०१
महता तपसा राम! सर्वेऽस्य त्रिदिवौकसः
मोहिताः कौशिकस्यार्थे पितामहमथाब्रुवन्, २०२
'जगद्योने! प्रभो!ऽस्माभिर्लोभितः कोपितोऽप्यलम्,
न ह्यस्य [5]वृजिनं किंचिद्दृश्यते सूक्ष्ममप्युत. २०३
यद्यस्याभीप्सितं देव! कौशिकस्य न दीयते
त्रैलोक्यनाशो भविता न चिरादेव निश्चयात्.' २०४
जलजप्रभवो देवैः सहागत्यैनमब्रवीत्.

---

१. वसन्तकामाभ्यां सहितया तया. २. शिलाभावेन परिणता. ३. विश्वामित्रः. ४. काष्ठवत् मूकभावम्. ५. पापम्.

'ब्रह्मर्षे! स्वागतं तेऽस्तु तपसा स्म सुतोषिताः, २०५
यत्तेऽभिलषितं सर्वं दत्तं कौशिक! तन्मया
दीर्घायुर्भव भद्रं ते, गच्छ सौम्य! यथासुखम्.' २०६
रामायं मुदितो नत्वा व्याजहार महामतिः
'ब्राह्मण्यं यदि मे प्राप्तं त्वया दत्तं पितामह! २०७
ममायं परमः कामः सत्योऽस्त्वद्य नमोऽस्तु ते.
ब्रह्मपुत्रो वसिष्ठो मामेवं वदतु सत्यदृक्.' २०८
श्रीमान्वसिष्ठस्त्रिदशैः सर्वैरेत्य प्रसादितः
'ब्रह्मर्षिस्त्वमसीत्येवं प्राहैनं गाधिजं स्वयम्. २०९
राघवैवंप्रभावोऽयं विश्वामित्रो गुरुस्तव
वसिष्ठं पूजयामास ब्राह्मण्यप्राप्तिकारणम्. २१०
महिमा गाधिजस्यैवं शतानंदेन वर्णितः
यं श्रुत्वाभूत्प्रमुदितो रामः सौमित्रिणा सह. २११
जनकः प्रांजलिर्वाक्यमुवाच कुशिकात्मजम्
'धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुंगव! २१२
यज्ञं काकुत्स्थसहितः प्राप्तवानासि कौशिक!
पावितोऽहं त्वया ब्रह्मन् दर्शनेन महामुने!' २१३
राजर्षिर्गाधिजेनापि प्रशस्य स विसर्जितः
मुनिं प्रदक्षिणं कृत्वा यज्ञशालामुपाययौ. २१४
महात्मा मैथिलः प्रातः कृतकर्मा सराघवम्
तमाजुहाव स ब्रह्मसमाजं मुनिसत्तमम्. २१५
जनकः प्राह सत्कृत्य सरामं कौशिकं मुनिम्
'स्वागतं तेऽस्तु भगवन्नाज्ञापय करोमि किम्?' २१६
यज्वानं तं मुनिः प्राह द्रष्टुमैशं समागतौ
इमौ दाशरथी वीरौ क्षत्रियौ लोकविश्रुतौ. २१७

---

१. कुशलं. सुष्ठु आगतं, तदस्यास्तीति—स्वागतम्. २. अयञ्च प्रयोगो यद्यपि प्रामादिकस्तथापि कविना मूलरामायणादेवोद्धृतत्वादार्षत्वेन न दुष्टः.

जनक ! क्षत्रियश्रेष्ठ ! रामलक्ष्मणयोर्धनुः
तद्दर्शयानयोर्दृष्ट्वा प्राप्तकामौ प्रयास्यतः.' २१८
यज्वोवाच, 'मुने ! शर्वप्रमुखैरमरैर्धनुः
न्यस्तं दक्षाध्वरध्वंसे देवराते निमेः सुते. २१९
राजभिर्देवताबुद्ध्या पूजितं निमिवंशजैः.
अथ क्ष्मां कर्षता लब्धा सा सीता नाम मत्सुता २२०
मयापि वीर्यशुल्केति[1] स्थापितेयमयोनिजा
वरयामासुरागत्य नृपा मे कन्यकां वराम्. २२१
श्रीमंस्तेभ्यो न मे[2] दत्ता वीर्यशुल्केति दारिका
शैवं सज्यं[3] धनुः कर्ता भर्ता स दुहितुर्मम. २२२
राजानस्ते धनुर्वीर्यं जिज्ञासव इहागताः
न शेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि च. २२३
मया ततो नृपाः सर्वे प्रत्याख्याता मुने ! बलाः
मिथिलां रुरुधुः क्रुद्धा युद्धायाभ्युद्यता बलात्. २२४
जन्ये भग्नाः सुरैर्दत्तचतुरंगबलेन ते
तदेतद्दर्शयिष्यामि रामलक्ष्मणयोर्धनुः. २२५
यद्यस्य धनुषो रामः कुर्यादारोपणं मुने !
सुतामयोनिजां सीतां दद्यां दाशरथेरहम्. २२६
राजानं कौशिकः प्राह, 'तर्हि दर्शय मा चिरम्.'
तेनाज्ञप्ताः स्वसचिवा 'धनुरानीयता'मिति. २२७
मनुष्याणां सहस्राणि पंचलोहमयीं पुरः
तन्मंजूषामष्टचक्रां युक्त्याप्यूहुः कथंचन. २२८
जनकं मंत्रिणः प्रोचु'रानीतं धनुरैश्वरम्.'
प्रांजलिः स मुनिं प्राह, 'भगवन् ! दर्शयानयोः २२९
यस्य शेकुः सुरा दैत्या राक्षसा नैव पूरणे

---

१. धनुःसज्जीकरणादिक्षमं वीर्यमेव शुल्कं (मूल्यं) यस्याः सा. २. मया. (विभक्तिप्रतिरूपकमव्ययम्) ३. अधिज्यम्. ४. धनुर्ज्याकर्षणे.

आरोपणे[1] समायोगे[2] वेपने[3] तोलने[4] तथा.' २३०
जनकस्य वचः श्रुत्वा विश्वामित्रो महायशाः
'वत्स राम! धनुः पश्य' इति राघवमब्रवीत्. २३१
यथान्यायं गुरोः पादौ नत्वा रामो महाबलः
तां मंजूषां समुद्घाट्य दृष्ट्वा माहेश्वरं धनुः, २३२
राघवोऽपृच्छ'देतस्य तोलनं पूरणं प्रभो!
कर्तुमिच्छामि संस्पृश्य यथाज्ञा भवतोरिह.' २३३
महर्षिः कौशिको 'बाढं' नृपश्च समभाषत
लीलया स धनुर्मध्ये जग्राह वचनान्मुनेः. २३४
श्रीमान्नरसहस्राणां पश्यतां रघुनंदनः
आरोपयत्स धर्मात्मा सलीलमिव तद्धनुः. २३५
राम आरोपयित्वा ज्यां पूरयामास तेजसा
तद्बभंज धनुर्मध्ये नरश्रेष्ठो महायशाः. २३६
महानासीद् ध्वनिस्तस्य निर्घात[5] इव दारुणः
निपेतुर्मानवा भूमौ तेन नादेन मोहिताः. २३७
जनकं गाधिजं वीरौ वर्जयित्वा च राघवौ
धनुर्ध्वानेन सहसा सर्वेऽपि व्याकुलीकृताः. २३८
यथास्थिते जने तस्मिन्विमोहे प्रकृतिं गते
उवाच प्रांजलिर्वाक्यं जनको मुनिपुंगवम्. २३९
'रामोऽयं दृष्टसामर्थ्यो भगवन् गाधिनंदन!
अत्यद्भुतमचिंत्यं च धनुरारोपणादि यत्. २४०
मम सत्या प्रतिज्ञा सा वीर्यशुल्केति कौशिक!
सीता प्राणैर्बहुमता देया रामाय मे सुता. २४१
जवेन मंत्रिणो यांतु भवतोऽनुमतेन मे
नृपं दशरथं शीघ्रमानयंतु पुरीं मम.' २४२

---

१. सज्जीकरणे. २. शरेण योजने. ३. ज्यास्फालने. ४. भारावलोकनार्थं हस्तेनांदोलने. ५. वज्रनिर्घोष इव.

'यत्तेऽभिलषितं राजंस्तदस्त्वि'त्यब्रवीन्मुनिः
अयोध्यां प्रेषयामास सचिवान्दत्तशासनान्. २४३

जनकप्रेषिता दूतास्त्रिरात्रमुषिताः पथि
अयोध्यां प्राविशन्हृष्टा नत्वा दशरथं प्रभुम्. २४४

यथावृत्तं समाचख्युस्तच्छ्रुत्वा मुदितो नृपः
वसिष्ठवामदेवादीन्पुरस्कृत्य विनिर्ययौ. २४५

राज्ञा संप्रार्थिता विप्रा मार्कंडेयादयो रथैः
निर्ययुर्हृष्टचित्तास्ते नागराः सूतमागधाः[1]. २४६

महती मुदिता सेना संपन्ना चतुरंगिणी
राजानमृषिभिः सार्धं व्रजंतं पृष्ठतोऽन्वगात्. २४७

श्रीमंतमागतं श्रुत्वा सामात्यं सपुरोहितम्
मैथिलः पूजयामास प्रत्युद्गम्य रघूत्तमम्. २४८

राजोवाच, 'स्वागतं ते, दिष्ट्या प्राप्तोऽसि राघव!
दिष्ट्या वसिष्ठो जाबालिरागतः काश्यपोऽप्ययम्. २४९

मत्कुलं पूजितं लोके संबंधाद्राघवैः सह
श्वःप्रभाते विवाहं त्वं निर्वर्तयितुमर्हसि.' २५०

जनकस्य वचः श्रुत्वा साकेतेशोऽप्युवाच तम्,
'प्रतिग्रहो दातृवशः श्रुतमेतन्मया पुरा. २५१

यथा वक्ष्यसि धर्मज्ञ! तत्करिष्यामहे वयम्.'
तच्छ्रुत्वा स विदेहेशः परं विस्मयमागतः. २५२

राजाज्ञया शतानंदो दूतान्प्रस्थाप्य शीघ्रगान्
आनयामास सुपुरः सांकाश्यायाः कुशध्वजम्. २५३

मतिमान्मैथिलः प्राह मंत्रिश्रेष्ठं सुदामनम्,
'आनयस्व सुतैः सार्धं राघवं सपुरोहितम्.' २५४

जनकप्रेषितो मंत्री राजानं प्रणतोऽब्रवीत्,
'स त्वां व्यवसितो द्रष्टुं वैदेहः सपुरोधसम्. २५५

---

१. बन्दिनः, स्तुतिपाठकाः.

य एते ब्राह्मणाः सर्वे सचिवास्तव बांधवाः
  तनुजा मनुजाधीश! सहैभिस्त्वां दिदृक्षति.[1]' २५६
जनेंद्रस्तद्वचः श्रुत्वा हृष्टः सर्षिगणस्तदा
  सबंधुरगमत्तत्र जनको यत्र वर्तते. २५७
यशस्विनं नृपं प्राह राजा दशरथस्तदा,
  'विश्वामित्राभ्यनुज्ञातो वसिष्ठो भगवान्गुरुः २५८
राजन्वक्ता च कर्ता च सर्वमेभिर्द्विजैः सह.'
  एवमुक्त्वा दशरथे तूष्णींभूते स्वयं मुनिः २५९
महांतं कीर्तयामास रघोरन्वयमादितः,
  'अस्मिन्रघोरजस्तस्य पुत्रो दशरथो नृपः २६०
श्रीरामलक्ष्मणावस्याप्यनयोरर्थ आत्मजे
  सीतोर्मिले ते वरये सदृशोः सदृशे प्रभो!' २६१
राजोवाच, 'निमेर्वंशं कीर्तयित्वा निजात्मजे
  वध्वौ ददामि ते ब्रह्मंस्त्रिर्वदामि न संशयः. २६२
महानुभाव! गोदानं[2] पितृकार्यं[3] च कारय,
  रामलक्ष्मणयो राजंस्ततो वैवाहिकं कुरु.' २६३
जनकं गाधिजः प्राह, 'कुशध्वजसुताद्वयम्
  राजन्! भरतशत्रुघ्नपत्न्यर्थे वरये पुनः.' २६४
यदुक्तं भवता ब्रह्मंस्तदस्तु च्छात्र एष ते
  एतदुत्तरफल्गुन्यां चतुर्णामस्तु मंगलम्.' २६५
राजैवमुक्त्वा जनको स वसिष्ठं सकौशिकम्
  विसर्जयामास मुदा स्तुत्वा दशरथं नृपम्. २६६
महामना रघूत्तंसस्तद्गोदानविधौ गवाम्
  ददौ चत्वारि लक्षाणि ब्राह्मणेभ्यो यथाविधि. २६७
जनकस्य पुरीं प्राप्तस्तदा भरतमातुलः

---

१. द्रष्टुं इच्छति. (आर्षं परस्मैपदम्). २. केशान्ताख्यं कर्म. (गावः केशाः दीयन्ते खण्डयन्ते अत्रेति) ३. नान्दीश्राद्धम्.

युधाजिद्भागिनेयं स्वं गृहं नेतुं पितुर्गिरा. २६८
य उक्तः समयस्तस्मिन्सीतां रामाय मैथिलः
ऊर्मिलां लक्ष्मणायादाद्विधिवद्भूरिदक्षिणः. २६९
जनकस्यानुजः प्रादाद्भरतायापि मांडवीम्
शत्रुघ्नाय च सत्कृत्य श्रुतकीर्तिं कुशध्वजः. २७०
यस्मिन्मुहूर्ते विजये विवाहोऽभून्महात्मनाम्.
पुष्पवृष्टिरभूद्दिव्या दिव्यदुंदुभिनिस्वनः. २७१
राघवाणां विवाहेऽभून्नृत्यमप्सरसामपि
गंधर्वपतयस्तत्र समागत्य जगुः कलम्. २७२
महः सोऽत्यद्भुतस्तत्र सदारा जनकार्चिताः
गताः स्वशिबिरं वीराः सर्वे रामपुरःसराः. २७३
श्रीमंतावाप्तकल्याणावयोध्यामिथिलापती
आपृच्छय गाधिजस्तप्तुं ययावुत्तरपर्वतम्. २७४
राजा दशरथो, याते गाधिजे मिथिलाधिपम्
आपृच्छय ससुतो गंतुमुद्यतोऽभून्निजां पुरीम्. २७५
महात्मा जनकः कन्याधनं बहुविधं मुदा
गवां शतसहस्राणि बहूनि स्वंबराणि च २७६
जनुः स्वं सफलीकर्तुं पत्त्यश्वरथकुंजरम्
कन्याशतं च प्रत्येकं दासीदासान्वरान्मणीन्. २७७
यक्षेश इव हेम्नश्च रजतस्य महामनाः
बह्वीः कोटीः प्रसन्नात्मा ददौ यद्यदनुत्तमम्. २७८
राघवं ससुतं सार्धं समनुज्ञाप्य सानुगम्
प्रविवेश स्वनिलयं मिथिलां मिथिलेश्वरः. २७९
महीपतिरथायोध्यामागच्छन्नात्मजैः सह
ददर्श दुर्निमित्तानि सुनिमित्तानि कानिचित्. २८०
जनितत्रास उर्वीशः पप्रच्छ गुरुमात्मनः
'हृदयोत्कंपि किमिदं दृश्यते भगवन्नि'ति. २८१

'यद्यप्यस्ति भयं राजन्नैव स्थास्यति तच्चिरम्
मा भैर्भद्रं त' इत्युक्तो वसिष्ठेन महात्मना. २८२
जमदग्निसुतं राजा ददर्श क्षत्रियांतकम्,
वाते शांते समुन्मूल्य गुरूनपि तरूंक्षणात्. २८३
यमात्क्रूरतरं रामं जामदग्न्यं निरीक्ष्य ते
वसिष्ठप्रमुखा विप्राः पूजयामासुरानताः. २८४
रामं दाशरथिं रामो जामदग्न्योऽब्रवीद्रुषा
'शैवं भग्नं श्रुतं सज्यं[1] त्वमिदं वैष्णवं कुरु.' २८५
मन्युं शमयितुं प्रह्वं[2] वृद्धं दशरथं स्थितम्
अनादृत्य वसिष्ठादीन्वदंतं दारुणा गिरः. २८६
श्रीमान्दाशरथी रामस्तत्कराद्वैष्णवं धनुः
आदाय लीलयारोप्य सज्यं[1] कृत्वा महाशरम्. २८७
राज्ञां कालमुवाचेदं वचनं 'शृणु भार्गव!
ब्राह्मणोऽसीति पूज्यो मे विश्वामित्रकृतेन च २८८
मनो मे त्वद्वधे नास्ति, जामदग्न्य! वद द्रुतम्
गतिं वा तव धर्मं वा हन्म्यमोघो ह्ययं शरः.' २८९
जमदग्निसुतः प्राह, 'गतिं हंतुं न मेऽर्हसि
जहि त्वं शरमुख्येन धर्ममप्रतिमं मम. २९०
यदहं विश्वनाथेन त्वयाद्य विमुखीकृतः[3]
न चेयं मम काकुत्स्थ! व्रीडा भवितुमर्हति.' २९१
रामो दाशरथिः श्रीमांश्चिक्षेप शरमद्भुतम्.
दृष्ट्वा धर्मं हतं नैजं वैष्णवेन महेषुणा. २९२
महेन्द्रं पर्वतश्रेष्ठं रामं कृत्वा प्रदक्षिणम्
पूजितो भार्गवः पृष्ट्वा जगामात्मगतिं प्रभुः. २९३
जलेशहस्ते श्रीरामो ददौ तद्वैष्णवं धनुः
ऋषींश्नत्वा ततः प्राह पितरं विह्वलं प्रभुः. २९४

---

१. सज्जम्. २. नम्रम्. ३. अविमुखः विमुखत्वेन संपादितः विमुखीकृतः.

यथागतं गतस्तात! भार्गवस्तव वाहिनी
प्रयात्वयोध्याभिमुखी त्वया नाथेन पालिता.' २९५
जग्राह रामं बाहुभ्यां मूर्ध्न्युपाघ्राय चासकृत्
पुनर्जातं नृपो मेने पुत्रमात्मानमेव च. २९६
ययावयोध्यां मुदितो मुदितां ध्वजमालिनीम्[1]
पुत्रैरनुगतः श्रीमान् श्रीमद्भिः स महायशाः. २९७
राजा भरतशत्रुघ्नौ द्रष्टुं मातामहं ततः
युधाजिता मातुलेन सह प्रेषितवान्मुदा. २९८
मनांसि रामः सर्वेषां रंजयामास सद्गुणैः
स वारिदो, जनौघस्तु मयूरः[2] इव तत्परः. २९९

इति श्रीमन्मंत्ररामायणे बालकांडे श्रीरामनंदनमयूरविरचिते त्रयोविंशो मंत्रः ।

---

## अयोध्याकांडम्

स श्री दशरथो राजा रामाय गुणशालिने
उद्यतोऽभूद्यौवराज्यं दातुं गुर्वनुमोदितः. १
प रा भ्युदयसङ्केतावभिषेकेऽपि वल्लभा
विघ्नं चकार कैकेयी मंथराभिन्नधीर्बलात्. २
स म र्थोऽपि नृपः सत्यपाशबद्धोऽबलोऽभवत्,
निर्बंधात्पूर्वदत्तौ सा वरौ जग्राह निर्घृणा. ३
' भ ज तामद्य भरतो यौवराज्यमकंटकम्
रामश्चतुर्दश समाः[3] श्रीराजिनधरो वनम्.' ४
अ य शस्करमेवं तत्तस्या आकर्ण्य भाषितम्
राजोवाच, ' सुदुर्बुद्धे! किमिदं ते चिकीर्षितम्? ५
नि रा गसं प्रियं रामं देवि! न त्यक्तुमर्हसि

---

१. ध्वजैः शोभमानाम्. २. मह्यां रौति सः मयूरः. (प्रतिकांडमन्ते विद्यमानः श्लोकः ' मयूर ' इति स्वनामसूचकेन शब्देनांकितो वर्तते ). ३. वर्षाणि.

मूर्ध्ना स्पृशामि ते पादावि'त्यप्यार्ततरोऽब्रवीत्. ६

सा म ध्यर्थमभूद्राजा मूर्च्छामसकृदागतः
कैकेयीसदने रात्रिं सर्वां दुःखेन सोऽनयत्. ७

द्वि ज श्रेष्ठो वसिष्ठोऽथ सुमंत्रं सचिवोत्तमम्
प्रातः प्रोवाच, 'राजानमभिषेकार्थमानय.' ८

स य यावाशु कैकेयीसदने तं नृपोत्तमम्
ददर्श भूमावस्वस्थं पतितं शोकविह्वलम्. ९

प्रां ज लिः स सुमंत्रस्तं स्तुत्वोवाच प्रबोधयन्,
'गुरू रामाभिषेकार्थं राजेंद्र! त्वां प्रतीक्षते.' १०

प्रि य मप्याह तं राजा शोकरक्तेक्षणस्तदा,
'वाक्यैस्तु खलु मर्माणि मम भूयो निकृंतसि.' ११

स रा जवाक्यं करुणं श्रुत्वा दीनं च तं प्रभुम्
दृष्ट्वा बद्धांजलिः किंचित्तस्माद्देशादपाक्रमत्. १२

स[2] म यज्ञाथ कैकेयी प्राह, 'मंत्रिन्! समुत्सुकः
रामाभिषेकहर्षेण सुतरां जातजागरः. १३

स श्री मानयमद्यैव राजा निद्रामुपागतः
राममानय, भद्रं ते, नात्र कार्या विचारणा.' १४

न रा धिपतिपत्न्येत्थमुक्तः स सचिवोऽब्रवीत्,
'अश्रुत्वाहं प्रभोर्वाक्यं कथं गच्छामि भा[3]मिनि!' १५

तं म हीपतिरप्याह, 'गच्छ, राममिहानय'
इत्युक्तः सचिवः प्राप रामप्रासादमाशुगः[4]. १६

'त्वां ज गत्याः पतिर्द्रष्टुमिच्छती'त्याह सांजलिः
रामोऽपि सीतामापृच्छय हृष्टो राजानमभ्यगात्. १७

अ य थापूर्वरूपस्य स पूर्वं चरणौ पितुः
ववंदे राघवः पश्चात्कैकेय्याः सुसमाहितः. १८

---

१. विह्वलम्. २. समयं—स्वहितसाधनानुकूलकालं जानाति—सा समयज्ञा. ३. कोपने. ४. आशु झटिति गच्छति स आशुगः त्वरायुक्तः.

स रा जा 'राम' इत्युक्त्वा बाष्पपर्याकुलेक्षणः
शशाक दीनतामाप्तो नेक्षितुं नाभिभाषितुम्. १९

तं म नुष्येश्वरं दृष्ट्वा तथारूपं भयावहम्
रामोऽपि भयमापन्नः पदा स्पृष्ट्वेव पन्नगम्. २०

प्रां ज लिः प्राह कैकेयीं, 'मम वान्यस्य वागसा
क्रुद्धः प्रभुस्तदाचक्ष्व मातरेनं प्रसादय.' २१

स्व य माहातिधृष्टा सा, 'नायं क्रुद्धो नराधिपः
राम! व्यसनमप्यस्य न च किंचन विद्यते. २२

रा ज श्रेष्ठः कुमारायं त्वद्भयाद्वाक्ति न स्फुटम्
प्रियं त्वामप्रियं वक्तुं नास्य वाणी प्रवर्तते. २३

त्वं य न्मह्यमनेनास्ति स्वयं राम! प्रतिश्रुतम्[1]
तदवश्यं कुरु क्षिप्रं पितुरानृण्यमाप्नुहि. २४

पु रा मह्यं[2] वरं दत्वा स्वयं मामभिपूज्य च
स पश्चात्तप्यते राम! यथान्यः प्राकृतस्तथा. २५

म म राम! प्रतिज्ञाय ददानीति वरं प्रभुः
स निरर्थं गतजले सेतुं बंधितुमिच्छति.' २६

तां श्री मानब्रवीद्रामो, 'मातर्वाक्यात्प्रभोरहम्
भक्षयेयं विषं तीक्ष्णं पतेयं पावकेऽर्णवे. २७

ध रा पतेर्वचो ब्रूहि मातर्यदभिकांक्षितम्
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते.' २८

तं म हाप्रमतिः प्राह, 'राज्ञा दत्तौ वरौ मम
पुरा देवासुरे[3] युद्धे मया गुप्तेन[4] संकटे. २९

अ ज वंशप्रदीपोऽयं भरतस्याभिषेचनम्
तत्र मे याचितो राम! गमनं तव कानने. ३०

स य थासि निदेशे त्वं राज्ञानेन प्रतिश्रुतम्

१. प्रतिज्ञातम्. २. मह्यं (संबंधसामान्ये षष्ठी). ३. देवाश्च असुराश्च देवासुरं तस्येदं=देवासुरम्. ४. रक्षितेन राज्ञा.

कुर्वरण्यं प्रवेष्टव्यं चतुर्दश समास्त्वया. ३१

त्वं रा जानमृतं कर्तुं जटाचीरधरो भव,
सप्त सप्त च वर्षाणि दंडकारण्यमाश्रितः. ३२

ग म नं त्वमयोध्यातः कुर्वंथैव वनं प्रति,
युवराजोऽस्तु भरतः सत्यसंधः पिता तव.' ३३

स्व ज नप्रियकृद्रामःप्रोवा 'चांब! स्वयं कुतः
राज्ञा नाज्ञाप्यते वाचा भरतस्याभिषेचनम्, ३४

प्रि य मस्य भवत्याश्च कर्तुं मातरहं धनम्
प्राणान्सीतामपि भ्रात्रे दद्यां त्वत्प्रेरितः सुखम्.' ३५

भु ज गीवोग्ररूपा सा पुनरूचे,'ऽगते त्वयि
रामार्थं तव तातो न स्नास्यते भोक्षते[1]ऽपि वा. ३६

श य ने न्यपतद्राजा तच्छ्रुत्वाश्रुपरिप्लुतः
'धिक्कष्ट'मिति निश्वस्य कैकेय्या वाग्गिषुक्षतः. ३७

तं रा जानं समुत्थाप्य कैकेय्याभिप्रचोदितः
कशयेवाहतो वाजी रामो गंतुं कृतत्वरः. ३८

ता म ब्रवी'दर्थपरो नाहं मातरसंशयम्
विद्धि मामृषिभिस्तुल्यं विमलं धर्ममास्थितम्. ३९

या श्री मतोऽस्य प्रीतिः सा मया कार्या निजासुभिः
न ह्यतो धर्मचरणं किंचिदस्ति महत्तरम्. ४०

त्व रा वानधुनैवांब! भवत्या वचनादहम्
वने वत्स्यामि विजने वर्षाणि हि चतुर्दश. ४१

क्ष म स्व तावत्कैकेयि! यावत्तां पुत्रवत्सलाम्
कौसल्यामहमापृच्छ्य सीतां चानुनयाम्यहम्. ४२

वि ज नं दंडकारण्यं गत एवाहमाज्ञया
शुश्रूषस्व नृपं, कष्टं परमं चरमं वयः. ४३

न य विद्धर्मवित्साधुर्भरतो न रतोऽपथि

---

१. भोक्ष्यते.

शुश्रूषामस्य सततं यथा कुर्यात्तथा कुरु.' ४४
स रा मस्य वचः श्रुत्वा भृशं दुःखगतः पिता
शोकादशक्नुवन्वक्तुं प्ररुरोद महास्वनम्. ४५
न म स्कृत्वा नृपं क्षैणं कैकेयीमपि दुर्धियम्
रामः प्रदक्षिणीकृत्य मातुरंतिकमाययौ. ४६
तं ज नन्या गृहं यातं कुपितो लक्ष्मणोऽन्वगात्
कैकेयीं तद्वशं तातं हंतुकामो महाबलः. ४७
प्रि य पुत्राथ कौसल्या पतितं पादयोः सुतम्
आलिंग्य मूर्ध्न्यवघ्राय ददावाशिषमुत्तमाम्. ४८
वि ज नं दंडकारण्यं प्रस्थितो राघवोऽब्रवीत्,
'गमिष्ये वनवासाय मामनुज्ञातुमर्हसि. ४९
प्र य च्छति महाराजो भरताय वसुंधराम्,
मां पुनर्दंडकारण्यं विवासयति तापसम्. ५०
ची रा जिनधरो मातश्चतुर्दश समा वने
वन्येन वृत्तिं कर्ताहं कैकेय्याः प्रियकारणात्.' ५१
सा म हत्यप्रिये वाक्ये श्रुते राज्ञ्यतिवत्सला
सहसा महसा त्यक्ता पपात भुवि मूर्च्छिता. ५२
तां श्री मान्मातरं रामः क्षिप्रमुत्थाप्य विह्वलां
सांत्वयामास सौमित्रिमपि तातवधोद्यतम्. ५३
'प रा क्रमस्य वत्सायं न कालः पितुराज्ञया
गमिष्यामि वनं, श्रेयः पुत्रस्यैकं गुरोर्वचः.' ५४
'रा म मामहिताचारा कैकेयी दुर्वचः सदा
श्रावयिष्यति तन्नाहं सोढुं शक्ता कथंचन. ५५
व्र ज तस्तव मां त्यक्त्वा नैष्ठुर्यं भविता परम्
वत्स! त्वया विना नाहं जीविष्यामि प्रसीद मे. ५६
न य मामपि धर्मज्ञ! यशस्ते भवितानघ!'
इत्यादि करुणं श्रुत्वा रामो मातरमब्रवीत्, ५७

'त्वं रा ज्ञि! राज्ञि[1] कैकेय्या हृदि दुर्वागिषुक्षते
मयाच रहिते वृद्धे न प्रेम शिथिलीकुरु. ५८
प्र म दानां कुलीनानां पत्युर्नान्या गतिर्हिता.'
एवमुक्त्वासकृद्रामो नत्वा पादौ विनिर्गतः. ५९
स ज गामाथ निलयं सीतायाः रघुसत्तमः
कृतस्वस्त्ययनो मात्रा तां च कृत्वा प्रदक्षिणम्. ६०
'प्रि य सत्तम! न च्छत्रं न बालव्यजने सिते
कुतः स्तुतस्त्वं नासी'ति कांतं पप्रच्छ जानकी. ६१
'रा ज पुत्रि! महावंशप्रभवे धर्मचारिणि!
शृणु तत्रभवांस्तातः प्रव्राजयति मां वने. ६२
प्रि य या खलु कैकेय्या पुरा दत्तौ वरौ प्रभुः
याचितस्तत्र चैकेन भरतस्याभिषेचनम्. ६३
चीरा जिनभृतोऽन्येन मम प्रव्राजनं वने
चतुर्दश हि वर्षाणि वस्तव्यं दंडके मया. ६४
प्र म दे! काननं याते मयि तापससेविते
व्रतोपवासपरया भवितव्यं त्वयानघे! ६५
स श्री मान्कल्यमुत्थाय[2] पिता मम जनेश्वरः
वंदितव्यस्त्वया माता कौसल्याश्चान्यमातरः[3]. ६६
तौ रा जपुत्रौ भरतशत्रुघ्नौ मम सुप्रियौ
भ्रातृपुत्रसमौ देवि! द्रष्टव्यौ प्रीतये मम. ६७
न म नागपि कर्तव्यं विप्रियं भरतस्य ते,
स हि राजा च वैदेहि! देशस्य च कुलस्य च.' ६८
सा ज गत्यात्मजा क्रुद्धा प्रणयादिदमब्रवीत्
'आर्यपुत्र! पिता माता भ्राता पुत्रस्तथा स्नुषा,' ६९
नि य मादुपजीवंति स्वं स्वं भाग्यं न चेतरत्
भर्तुर्भाग्यं तु नार्येका प्राप्नोति पुरुषर्षभ! ७०

---

१. दशरथे. २. अहर्मुखे, प्रातरित्यर्थः ३. कौसल्या चान्यमातरः इति पठितव्यं भाति.

वी रा तश्चाहमादिष्टा गुरुभिस्त्वमिव ध्रुवम्
न पिता नात्मजो माता स्त्रीणामेकः पतिर्गतिः. ७१
त्व म थैव वनं दुर्गं प्रस्थितो यदि राघव!
अग्रतस्ते गमिष्यामि मृद्नती कुशकंटकान्.' ७२
'ग ज गामिनि! मा मैवं वद, दुःखतरं वनम्
इत्युवाचासकृद्रामो न नेतुमकरोन्मनः.' ७३
'न य मां वीर! विश्रब्धः[1] पापं मयि न विद्यते,
यदि नेच्छसि मां नेतुं मरिष्यामि, त्वया विना.' ७४
रा ज कन्येति शोकार्ता विलप्य करुणं बहु,
पतिमालिंग्य बाहुभ्यां कंठे चुक्रोश सस्वरम्, ७५
'आ य ताक्षि! प्रिये! त्वाऽहं सह नेष्यामि सर्वथा
त्वं हातुं न मया शक्या प्रीतिरात्मवता यथा. ७६
व रा रोहे!ऽद्य सर्वस्वं क्षिप्रं ब्राह्मणसात्कुरु.'
इत्युक्ता जानकी पत्या कृतवत्यखिलं तथा. ७७
प्र म थाधिपतेः साक्षाद्भुनेश इव भक्तिमान्
रामस्य चरणौ गाढं निपीड्योवाच लक्ष्मणः ७८
'भोः श्री मन् रामभद्रार्य! स्वानुगं नय मामपि.'
इत्युक्तवंतं सौमित्रिं कौसल्येयोऽब्रवीदिदम् ७९
'धीरा र्यंव्रत! वत्स! त्वं मम प्राणसमः सखा
कौसल्यां च सुमित्रां च वद कोऽत्र भरिष्यति?' ८०
त म यं प्राह, 'कौसल्यां सुमित्रां भरतः स्वयम्
तवैव तेजसा राम! पूजयिष्यत्यसंशयम्. ८१
ते ज सा तं वधिष्यामि नो चेदत्र न संशयः
कौसल्या बिभृयादार्या सहस्रं मद्विधानपि. ८२
न य ज्ञा स्वस्य मातुश्च मम सा भरणक्षमा,
यस्याः सहस्रं ग्रामाणां संप्राप्तमुपजीविभिः ८३

---

१. विश्वस्तः [ मयि ].

खा रा सनं समादाय खनित्रपिटकाधरः
अग्रतस्ते गमिष्यामि पंथानं तव दर्शयन्. ८४
भ्र म आर्य! न मेऽरण्ये भविता दुयया तव
अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते.' ८५
'व्र ज वत्साशु पृच्छ त्वं सर्वमेवं सुहृज्जनम्
ये च राज्ञो ददौ दिव्ये महात्मा वरुणः स्वयम् ८६
सा य कासनरत्नेसी कवचेऽक्षयसायकौ
तूणावाचार्यगेहस्थमानयैतद्धनं वरम्.' ८७
स ज ग्राह्यायुधं सर्वं गुरुमागत्य लक्ष्मणः
रामाय दर्शयामास पुनस्तं राघवोऽब्रवीत् ८८
'स्वयं मम धनं यन्मे त्वया सह परंतप!
द्विजेभ्यो दातुमिच्छामि लक्ष्मणानुमतेन ते ८९
ध रा सुरवरं वत्स! सुयज्ञं गुरुनंदनम्
त्वमानयान्यांश्चाश्विन्र सर्वान् वत्सोपजीविनः' ९०
तं म हार्षिसुतं गत्वा सौमित्रिः प्राह, 'मंदिरम्
सखे! सुयज्ञ! रामस्य पश्य दुष्करकारिणः.' ९१
स श्री मत्सदनं प्राप्तः शीघ्रं सौमित्रिणा सह
तं नत्वा पूजयामास ससीतो लक्ष्मणाग्रजः. ९२
हा रा दिभिरलंकारै रामस्तं प्रत्यपूजयत्
तत्पत्न्यै प्रददौ सीता स्वभूषाः शीलभूषणा. ९३
स म स्तमन्यद्विप्रेभ्यो धनं रामः सलक्ष्मणः
प्रददावुपजीविभ्यः सीतापि प्रीतमानसा. ९४
तौ ज ग्मतुरथो द्रष्टुं पितरं सीतया सह,
पद्भ्यामेव महासत्त्वौ सुमुखौ सीतया सह. ९५
व य स्यपौरप्रमुखो जनः सर्वोऽपि राघवौ

---

१. मूलकंदखननसाधनं कुद्दालादि, फलमूलाद्याहरणयोग्याल्पकंडोलः "कंडोल-पिटकौ" इत्यमरः २. खड्गद्वयम्. ३. वासिष्ठपुत्रम्. ४. आशु द्रुतम्.

जानकीं च तथा दृष्ट्वा बभूवातीव विह्वलः. ९६
न रा नार्योऽपि राजानं कैकेयीं भृशदुःखिताः
गर्हयामासुरत्यंतं श्रीरामस्तवनादृताः. ९७
'स म र्थं पालनेऽस्माकं रामं राजीवलोचनम्
गच्छंतमनुगच्छामो वयमि'त्यब्रुवन् जनाः. ९८
स ज नन्या गृहं गत्वा दृष्ट्वा पितरमाकुलम्
सुमंत्रं राघवः प्राह 'पितुराख्याहि मामि'ति. ९९
न य ज्ञः स सुमंत्रस्तं संबोध्य प्राह भूपतिम्,
'द्वारि तिष्ठत्ययं रामस्त्वामिदानीं दिदृक्षते. १००
त्वां ज नेश्वरमायातः प्रष्टुं पृष्ट्वा सुहृज्जनम्
वनं गंतुं सुतः सिद्धस्तव सत्यपराक्रमः.' १०१
तं य त्नादब्रवीद्राजा, 'सुमंत्र! शृणु मे वचः
दारैः परिवृतः सर्वैर्द्रष्टुमिच्छामि राघवम्.' १०२
दा रा स्ते तत्र भूभर्तुराज्ञायाज्ञां सुमंत्रतः
कौसल्यां परिवार्यार्ता आजग्मुस्ताम्रलोचनाः. १०३
स म हिष्या तया सार्धंत्रिशतस्त्रीभिरावृतः
उवाच राजा तं सूतं, 'सुमंत्रानय मे सुतम्.' १०४
तं श्री मंतं सुतं दृष्ट्वा सूतानीतं महीपतिः
उत्पपातासनात्तूर्णमार्तः स्त्रीजनसंवृतः. १०५
आ रा दालिंगनं कर्तुमभिदुद्राव वेगतः
तमसंप्राप्य दुःखार्तः पपात भुवि मूर्च्छितः. १०६
त म सा व्याकुलं रामोऽभ्यपतत्तं सलक्ष्मणः
स्त्रीसहस्रनिनादोभू'द्धा हा रामे'ति वेश्मनि. १०७
रा ज श्रेष्ठं परिष्वज्य भुजाभ्यां रामलक्ष्मणौ
सीता च निन्युः पर्यंके रुदंतस्तं शनैस्त्रयः. १०८
ग्ना य ने लब्धसंज्ञं तं रामः प्रोवाच सांजलिः
'आपृच्छे त्वां महाराज! पश्य त्वं कुशलेन माम्. १०९

मां रा जान्नियमन्वेतु जानकी भवदाज्ञया,
लक्ष्मणं चानुजानीहि वार्यमाणौ न चेच्छतः. ११०
स म हीश उवाचैनं, 'कैकेय्या वरदानतः
मोहितं मां निगृह्य त्वं भव राम! भुवः पतिः.' १११
प्रां ज लिस्तमुवाचासौ रामः सत्यपराक्रमः
'भवान् वर्षसहस्राय महाराज! धरापतिः ११२
प्रि य कृद्दंडकारण्यं, राज्यं नाद्य मुदे मम.
तव पादौ ग्रहीष्यामि प्रतिज्ञान्ते पुनः पितः!' ११३
'र ज नीं त्वमिमामेकां पुत्र! मा गच्छ सर्वथा
त्वया सहाहं भोक्ष्यामि' दीनो राजाब्रवीदिति. ११४
'प्रि य वत्सैतदाश्चर्यं नैव ज्येष्ठः सुतो मम
अपानृतकथं यत्त्वं तातं मां कर्तुमिच्छसि.' ११५
तं रा मः प्राह, 'ये मेऽद्य न गुणाः श्वस्तु ते पितः!
वृणे गमनमेवातः सर्वकामास्त्विरत्र मे. ११६
वि म र्शो मास्तु, वसुधा भरताय प्रदीयताम्
भवान्सत्यप्रतिज्ञोऽस्तु वनं गच्छाम्यहं पितः! ११७
स श्री मान्सुतमालिंग्य श्रुत्वैवं मूर्च्छितोऽभवत्.
देव्यः समस्ता रुरुदुः कैकेयीं तामृते भृशम्. ११८
क्रू रा मनार्यां कैकेयीं सुमंत्रः प्राह, 'किं त्वया
प्रारब्धं? व्यसने देवि! मा मज्जय रघोः कुलम्. ११९
न म हीं भरतो जातु त्रातुमर्होऽग्रजे सति,
वयं तत्र गमिष्यामो यत्र रामो गमिष्यति. १२०
द्वि ज स्ते विषये कश्चिन्नानार्ये! वस्तुमर्हति,
पतिघ्नीं त्वामहं मन्ये कुलघ्नीमपि चांततः. १२१
त्वं य त्पत्युर्न मरणाद्भीता हीता महाजनात्
दुःशीलं तव मन्येऽहं यथा मातुस्तथैव हि. १२२

---

१. कैकेय्याः पिता अश्वपतिर्नाम राजा महर्षेर्वरदस्य वरात् तिरश्चां भाषा-

धीरा वदंति निंबाम्र स्वेक्षौद्रं न तन्मृषा
पितॄन् समनुजायंते नरा, मातरमंगनाः' १२३

समक्षं नृपतेरित्थं सुमंत्रकृतगंजना
न तत्याजाग्रहं दुष्टाऽब्रवीद्दशरथस्ततः. १२४

'रंजनायास्य सुहृदो वणिजो वारयोषितः
सेना व्याधाश्च निर्यांतु धनवस्त्राकराशयः.' १२५

भयमाप्यात्रपोवाच, 'नृपैवं क्रियते यदि
निःसारं भरतो राज्यं शून्यं नाभिप्रपत्स्यते.' १२६

तां जगत्याधिपः प्राह, 'पूर्वमेव ममाहिते!
सर्वं त्यक्त्वा वनं रामो यात्वित्येवं न किं वृतम्?' १२७

सा यशस्कारिणी प्राह, 'तव वंशेऽसमंजसम्[2]
यथा तत्याज सगरस्त्वमप्येनं तथा त्यज.' १२८

सराजा तद्वचः श्रुत्वा तां 'धिगि'त्यब्रवीत्तदा
कैकेय्याः सेवकजनः सर्वोऽपि व्रीडितोऽभवत्. १२९

तां मे[3] हामात्र उद्रोषैः सिद्धार्थोऽप्यब्रवीत् हितम्
तदप्यणु प्रभोः पादानतया न तया श्रुतम् १३०

'सश्रीमान् सगरः पौरबालघ्नं सूनुमत्यजत्
रामः किमकरोत्पापं येनैवमुपरुध्यते? १३१

नरा सबे वयं दोषं पश्यामो, यदि पश्यसि
त्वमद्य ब्रूहि तत्त्वेन, तदा रामो विवास्यते.' १३२

---

भिज्ञत्वं प्राप. अथैकदा स्वमहिष्या सह शयने सुप्तेन तेन जृंभस्य पक्षिविशेषस्य विरुतात् भावमभिज्ञाय किंचित् स्मितं कृतम्. तस्मिन् समये कैकेयीजननी हासं ते जिज्ञासामीति नृपतिमब्रवीत्. " नृपश्चोवाच तां देवीं देवि शंसामि ते यदि। ततो मे मरणं सद्यो भविष्यति न संशयः ॥" ततः सा देवी कैकयमश्वपतिं बभाषे "शंस मे जीव वा मा वा न मामपहसिष्यसि". एवं सुमंत्रो वदति यथा ते माता पत्युर्मरणात् न भीता तथा त्वमपि नैव बिभेषीति.

१. मधु. २. सगरस्य ज्येष्ठं पुत्रम्. ३. प्रधानामात्यः. ४. संजातक्रोधः.

तां म नुष्येश्वरोऽथाह, 'भुंक्ष्व राज्यं यथासुखम्
　　अनुव्रजिष्याम्यथाहं रामं सर्वैर्जनैः सह.'　　　　१३२

रा ज म्मे त्यक्तराज्यस्य किं सैन्येन धनेन वा
　　त्यक्त्वा गजं कः कक्ष्यायां[1] कुरुते मानसं कृती.　　　　१३४

स्व य मेवानुजानामि सर्वं प्रीतेन चेतसा
　　खनित्रपिटके चोभे चीराण्येवानयंतु मे.'　　　　१३५

सा रा म इत्युक्तवति स्वयं केकयकन्यका
　　चीराण्याहृत्य तं प्राह, 'परिधत्स्वे'ति निस्त्रपा.　　　　१३६

स म हार्हमवाक्षिप्य सूक्ष्मं वासो रघूत्तमः
　　मुनिवस्त्रमवस्ता[2]थ लक्ष्मणोऽप्युरुलक्षणः.　　　　१३७

न ज प्राह न सा चीरं सीता कौशेयवासिनी,
　　परं तत्प्रेक्ष्य संत्रस्ता पृषती[3] वागुरामिव[4].　　　　१३८

भ य लज्जाकुला राममुवाचाकुशला[5] सती
　　'कथं नु चीरं बध्नंति मुनयो वनवासिनः?'　　　　१३९

नि ज कंठे सती कृत्वा चीरं तस्थौ, तदा प्रभुः
　　तस्या बबंध तत्तूर्णं कौशेयस्योपरि स्वयम्.　　　　१४०

न य नैर्मुमुचुस्तोयं तदा रामस्य मातरः
　　ऊचुर्वत्स! नियुक्तेयं वनवासे न, मा नय.'　　　　१४१

श्री रा प्रणीर्वसिष्ठस्तां बिभ्रत्स्यानयमास्थिताम्
　　कैकेयीमब्रवीत् क्रुद्धः सबाष्पो नयधर्मवित्.　　　　१४२

'न म हीं भरतः पित्रा प्रदत्तां शास्तुमिच्छति
　　त्वयि वा पुत्रवत्वस्तुं यदि जातो महीपतेः'.　　　　१४३

स श्री मानेवमुक्त्वा तां बहु सद्वृत्तवर्जिताम्
　　सीतामप्याह, 'वत्से! त्वं चीरं मा स्पृश जातुचित्.'　१४४

गु रा येवं वदत्यार्तो राजा धिक्कृत्य तां बकाम्

---

१. इभबंधनरज्जौ. 'कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' इत्यमरः.

२. अदीधरत्. ३. मृगी. ४. जालम्. ५. अपरिचयात् चीरबंधने अनिपुणा.

तस्थाववाक्शिरास्तूष्णीं रामस्तमिदमब्रवीत्. १४५

'म म धार्मिक मातेयं कौसल्या त्वां न गर्हते
मया हीनामिमां देव! भूयः संमंतुमर्हसि.' १४६

रा ज श्रेष्ठ इति श्रुत्वा वनं संप्रस्थितं सुतम्!
नाशक्रोद्द्रष्टुमत्यार्तो विललापातिवत्सलः. १४७

'अ य सा घटितं नूनं हृदयं मे न दीर्यते[1],
विवत्सा बहवो जीवाः कृतास्तन्मामुपस्थितम्.' १४८

न रा धिपो विलप्यैवं सुमंत्रं प्राह, 'मे रथम्
आनय त्वमितो नेतुं रामं जनपदांतरम्.' १४९

स म यज्ञस्तथा चक्रे तं पुनः प्राह पार्थिवः
'रथे स्थापय जानक्या वासांस्याभूषणानि च.' १५०

रा ज पुत्रीं नतां श्वश्रूः कौसल्या मणिभूषणैः
भूषयित्वा समालिंग्य साश्रु प्राह मनस्विनी. १५१

'प्र य[2] ता भज भर्तारं पतिरेव गतिः स्त्रियाः[3]
तव देवसमस्त्वेष सधनो निर्धनोऽपि वा. १५२

भ ज नीयोऽवमंतव्यो नायं प्रव्राजितोऽपि ते
जनकस्य सुताऽसि त्वं धर्मं जानासि शाश्वतम्.' १५३

सा य ज्ञक्षितिसंभूता श्वश्रूं प्रोवाच सांजलिः
'करिष्ये सर्वमेवाहं आर्या यदनुशास्ति माम्.' १५४

तां रा मः प्रांजलिः प्राह मातरं पुत्रवत्सलाम्
'अंब! मा दुःखिता भूत्वा पश्येस्त्वं पितरं मम. १५५

स म प्रमिह संप्राप्तं मां द्रक्ष्यसि सुहृद्वृतम्
सुप्तायास्ते गमिष्यंति नव वर्षाणि पंच च.' १५६

सु श्री रेवं प्रसूमुक्त्वा मातॄरन्यां नतोऽब्रवीत्,
'संवासात् परुषं किंचिदज्ञानादपि यत्कृतम् १५७

आ रा धने यत्स्खलितं मातरः शीलभूषणाः

---

१. न दीर्ण भवति. (कर्मकर्तरि) २. नियमयुक्ता. ३. स्त्रियः इति पठनीयं भाति.

तन् मे समुपज्ञानीत सर्वाश्चामंत्रयामि वः.' १५८

स म स्तास्ता इति श्रुत्वा रामस्य प्रांजलेर्गिरम्
रुरुदुर्वत्सला रामास्तस्मै प्रददुराशिषः. १५९

व्य ज नानिलशीतांबुहृतमोहं धरापतिम्
नत्वा सौमित्रिसीताभ्यां सह रामो विनिर्ययौ. १६०

प्र य त्नात्प्रणतं पुत्रं सुमित्रा पुत्रवत्सला
'रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् १६१

त्वं रा जधानीमटवीं विद्धि शत्रुघ्नपूर्वज!'
अश्रुपूर्णमुखीत्याह प्रस्थितं निर्जनं वनम्. १६२

अ म लात्मा 'तथे'त्युक्त्वा नत्वा सर्वा नृपांगनाः
रामेण सीतया सार्धमारुरोह रथोत्तमम्. १६३

'व्र ज तूर्ण'मिति प्राह सुमंत्रं राम आत्मवान्
यं जनेशो जनश्चापि 'क्षणं तिष्ठे'त्यचोदयत्. १६४

प्रि य पुत्राननं द्रष्टुमुत्थाय द्वारमागतः
गच्छत्येव द्रुतं रामे पपात भुवि भूपतिः. १६५

न ज नन्या न तातस्य न मित्राणां तथा वचः
तत्पूर्वं मानयामास रामः श्रुत्वाप्य[2]कर्णवत्. १६६

श य नं चरमं मत्वा स्त्रियो रुरुदुरुच्चकैः
कौसल्या पतिमुत्थाप्य समाश्वासयदाकुलम्. १६७

सा रा ज्यस्य भुजं धृत्वा दक्षिणं मंदिरांतरे
नेतुं प्रचलिता वामं कैकेयी चार्थलालसा. १६८

अ म [3]नोज्ञचारित्रां तामाह राजा, 'न मां स्पृश
नाहं त्वां द्रष्टुमिच्छामि न त्वं भार्या न [4]बांधवी. १६९

स श्री लाभात्प्रतीतः स्याद्भरतश्चेदुराशये!
यन्मे प्रदद्यात्प्रीत्यर्थं मा मां तद्दत्तमन्वगात्. १७०

---

१. परस्मैपदमार्षम्. २. बधिरवत्. ३. दुःशीलाम्. ३. बन्धुरेव बान्धवः स्वार्थे अण् स्त्रियामणन्तत्वान्ङीप्. बान्धवा.

का रा मे बत! कैकेय्या गेहमेतदसंशयम्
'मां राममातुः सदनं नयन्त्वि'त्यब्रवीन्नृपः. १७१

स म हिष्या गृहे नीतः शायितः शयनोत्तमे
अपश्यद्रामरहितं तद्चंद्रमिवांबरम्. १७२

र ज न्यां चिंतयन् रामं भुजमुद्यम्य भूपतिः
उच्चैः स्वरेण प्राक्रोश'द्धा! राम! विजहासि नौ १७३

तं य शस्विनमस्याहमयोध्यां पुनरागतं
दृष्ट्वालिंग्य भविष्यंति प्रहृष्टा ये त उत्तमाः.' १७४

न रा धीशो वदन्नित्थं महिषीमाकुलोऽब्रवीत्,
'न त्वां पश्यामि कौसल्ये! साधु मां पाणिना स्पृश.१७५

म म दृष्ट्यलिनी पद्मं महावातहृतं यथा
वत्सं तेऽनुगता दृष्टिरद्यापि न निवर्तते.' १७६

सा ज नन्यपि रामस्य विललापाकुला शुचा
'सभार्यं सानुजं रामं पश्येयं किमहं नृप! १७७

द य या त्यक्तया नूनं मया राजन् पुरा बलात्
वत्सेषु पातुकामेषु मातॄणां शातितां[1] स्तनाः. १७८

द्वि ज राजमिवाह्लादप्रदं विद्याविशारदम्
नैकपुत्रा विना पुत्रमहं जीवितुमुत्सहे.' १७९

व य स्यैव प्रिया साध्वी सुमित्रा रामसंस्तवैः
शमयामास कौसल्याशोकमग्निमिवांबुभिः. १८०

ची रा जिनधरं रामं मच्छंतमपराजितम्
सीतेवानुगता लक्ष्मीस्तस्य किं नाम दुर्लभम्? १८१

हि म रश्मिस्तथा युक्तशीतोष्णोऽतिसुखोऽनिलः
रामं सेविष्यति शुचिं न रविस्तापयिष्यति. १८२

स श्री मान् गाधिजो यस्मै सर्वास्त्राण्याशिषो ददौ,
तस्य के न भविष्यंति नम्राः, सम्राट् तवात्मजः'. १८३

---

१. वियोजिता इति यावत्.

पौ रा रामं पुरीं त्यक्त्वानुगताः सर्व एव ते
पांथा वटमिव भ्रान्ता वार्योघा इव वारिधिम्. १८४

त म सातीरमागम्य पीत्वा तोयं द्रुमच्छदैः
सूतानुजकृते[1] रामः सुष्वाप शयने प्रभुः. १८५

स ज नान्वृक्षमूलेषु सुप्तानालोक्य दुःखितान्
अपृष्ट्वैव जगामाशु दर्शितोद्गगतिः क्षणम्. १८६

द य मानमपि त्यक्त्वेहं मत्वा रघूत्तमम्
पौरा रुदंतो निःश्रीकामयोध्यामगमन् शनैः. १८७

प रा वृत्य विना राममागतान्स्वपतीन् स्त्रियः
रुदंत्यो गर्हयामासुरात्मजेष्वप्यनादराः. १८८

गो म तीमतरत्तीर्त्वा पूर्वं वेदश्रुतिं नदीम्
उत्तीर्य स्यंदिकां रामो कोसलानत्यगाद् द्रुतम्. १८९

श्री ज ह्नुकन्यामगमन् मुन्याश्रमविभूषिताम्
शंकरस्य जटाजूटाकृष्टां सागरतेजसा[2]. १९०

भ य घ्नीं संसृतेः प्राप्य शृंगबेरपुरं प्रति
तत्रेंगुदीतरोर्मूले रथात्प्रभुरवातरत्. १९१

स्व ज नैः सह धर्मात्मा रामस्यात्मसमः सखा
गुहो राजा निषादानामाजगाम समुत्सुकः. १९२

तं य शस्वी स्वयं रामः समालिंग्याब्रवीदिति
'प्रियैः पितुर्हयैस्तृप्तैरहमंग[3]! सुपूजितः'. १९३

स रा त्रावुदकं प्राश्य सुप्ते रामे धरातले
गुहः सलक्ष्मणोऽतिष्ठद्विनिद्रश्चापबाणभृत्. १९४

र म णीयगुणः प्रातः सुमंत्रं बहु सांत्वयन्
'पितुः समीपं याही'ति प्रोवाच विरहातुरम्. १९५

स श्री मान् वटदुग्धेन गुहानीतेन राघवः

---

१. सूतेन सुमन्त्रेण अनुजेन लक्ष्मणेन च विरचिते. २. सगरस्य गोत्रापत्यं सागरः भगीरथः, तस्य तपसा. ३. भोः, संबोधनार्थकमव्ययमिदम्.

सलक्ष्मणो जटाः कृत्वा तीर्णो नावा समुद्रगाम्[1]. १९६
व रा हादीन्मृगान् हत्वा चतुरः स कृताशनः
न्यग्रोधमूले सुप्त्वाथ प्रातर्निर्गत्य राघवः १९७
स म दर्शिनमर्चार्हं भरद्वाजं रघूद्वहः
प्रयागे सायमासाद्य ननाम परया मुदा. १९८
र ज नीमिवसद्रामो भरद्वाजाश्रमेऽर्चितः
चित्रकूटमगात्तेन मुनिना प्रोक्तवर्त्मना. १९९
तौ य मस्य स्वसारं[2] तां तीर्त्वा काष्ठैः कृतप्लवौ
तस्यास्तीरे निशां नीत्वा चित्रकूटं नगं गतौ. २००
ध रा मरवरान्नत्वा वाल्मीकिप्रमुखान्प्रभुः
तत्राकरोत्पर्णशालां लक्ष्मणो भ्रातुराज्ञया. २०१
स म स्तं रामवृत्तान्तं गुहचारानिवेदितम्
ज्ञात्वा सुमंत्रः साकेतं प्रययौ गाढदुर्मनाः. २०२
रा ज मार्गेण सचिवः सुमंत्रः पिहिताननः
यत्र राजा दशरथस्तदेवोपययौ गृहम्. २०३
आ य ताक्ष्यस्तु तां दृष्ट्वा सूतं रामं विनागतम्
रुरुदुर्नृपतेर्भार्या, मूर्च्छितो न्यपतन्नृपः. २०४
र ज न्यामथ षष्ठ्यां स शापं स्मृत्वा तमात्मनः
महिषीं कथयामास राजा दशरथः स्वयम्. २०५
'क्ष य प्रियेण सत्त्वानां निशायां शब्दवेधिना
शूद्राकुक्षिभवो[3] वैश्यपुत्रो देवि! मया हतः. २०६
मां रा ज्ञि! तत्पिता प्राह कुपितः पुत्रघातिनम्
'यथाहं पुत्रशोकेन त्वमप्यार्तो मरिष्यसि.' २०७
स म मासून् मुनेः शापः प्राप्तो हर्तुमसंशयः
अंजलिं ते करोम्यद्य साध्वि! मंतुं[4] क्षमस्व मे.' २०८

---

१. नदीम्. २. यमुनां नदीम्. ३. श्रावणनामा. ४. अपराधम्.

वि श्री[1]रत्याकुलो राजा 'हा! रामे'ति वदन् मुहुः
अर्धरात्रे स्मरन् पुत्रं जीवितांतमुपागमत्. २०९

तं रा त्र्यन्ते मृतं ज्ञात्वा रुरुदुः सकलाः स्त्रियः
भूयः शोकार्णवे मग्नं सर्वमन्तःपुरं पुरम्. २१०

तं म ह्याः पालकं तैलद्रौण्यां संवेश्य साधवः
चक्रुर्वसिष्ठेनादिष्टाः सचिवाः कार्यमस्य यत्. २११

स ज वेन पटून् दूतान् वसिष्ठः प्राहिणोत्स्वयम्
गत्वा भरतशत्रुघ्नावानयामासुराशु ते. २१२

प्र य तात्सप्तभिर्गत्वा दिनैस्तावद्भिरेव ते
दूता भरतशत्रुघ्नावानीय पुनरागताः. २१३

त्व रा वानेत्य मातुः स ज्ञात्वा दुष्कर्म तत्तथा
गर्हयामास तां पापां भरतो भरतो रुषः[2]. २१४

'आ म बुद्धेऽहिते! क्रूरे! भूरेषा तस्य धर्मतः
यः कौसल्यासुतः श्रीमांस्त्वया रामो विवासितः २१५

त्वं ज गर्हितचरिता, रामस्य त्वयि मातृधीः
अतोऽहं न त्यजामि त्वां दुष्टां तस्यैव गौरवात्.' २१६

प्र य तः सोऽसकृद्दोषात्तां धिक्कृत्यातिवत्सलाम्
कौसल्यां सांत्वयामास चक्रे तातस्य सत्क्रियाम्. २१७

स्व ज नन्याः समक्षं तां मंथरां हंतुमुद्यतम्
शत्रुघ्नं वारयामास भरतो रामसाध्वसात्. २१८

गे य कीर्तिर्गुरोराज्ञां विलंघ्यापि महामतिः
भरतस्त्यक्तराज्येहः श्रीरामं शरणं ययौ. २१९

वी रा मात्यगुरुभ्रातृमातृपौरसुहृद्वृतः
भरतः शृंगबेरस्थगुहेन सह संगतः. २२०

तं म हर्षिर्भरद्वाजः परीक्ष्य शुचिमानसम्

---

१. 'नष्टश्रे'त्येन 'क' प्रत्ययस्यावश्यकत्वेऽपि मूलरामायणपाठमनुसृत्य समासान्तविरहित एव प्रयोगः कविनात्र कृतः २. क्रोधातिशयेन.

ससैन्यं पूजयामास विससर्जाग्रजप्रियम्. २२१

तं श्री मंतं चित्रकूटे ददर्श भरतोऽग्रजम्
पतित्वा पादयोस्तस्य रुरोदातीव भक्तिमान्. २२२

प रा सुं पितरं श्रुत्वा 'हा! ताते'ति भृशं रुदन्
सदारः सानुजो रामस्तस्मै नद्यां जलं ददौ. २२३

स म मार्षिर्वसिष्ठाद्यैः सचिवैर्मातृभिर्भृशम्
गुरुरभ्यर्थितो रामो भरतेन निवर्तनम्. २२४

तं ज गादानुजं राम'श्चतुर्दश समा वने
मया स्थेयं, त्वया कार्यं राज्यं तातस्य शासनात्. २२५

श्रे य एतत्परं विद्ध्यस्तु सत्यं वचः पितुः
प्रियमस्याश्च मे मातुर्निर्बंधं तात मा कुरु.

आ रा पनयनं तेऽहं कर्ता पूर्णे चतुर्दशे
मा रोदीस्तात! वर्षाणि गमिष्यंत्याशु मा शुचः.' २२७

तं म हा मुनयः क्षिप्रं दशकंठवधैषिणः
भरतं प्रोचुरार्यस्य ग्राह्यं रामस्य ते वचः.' २२८

द्वि ज वर्यो वसिष्ठोऽपि प्रोवाचैवं ततः प्रभुम्
भरतः प्रार्थयामास पादुके हेमभूषिते. २२९

'द य यार्थाधिरोह त्वं पादाभ्यां भक्तवत्सल!
एते हि सर्वलोकस्य योगक्षेमं विधास्यतः.' २३०

ते ज स्वीशः सोधिरुह्य व्यवमुच्य च पादुके
प्रायच्छत्पुरुषव्याघ्रो भरताय महात्मने. २३१

प्र य तो राममाहासावहं पूर्णे चतुर्दशे
न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम्.' २३२

आ रा ध्यं भरतो नत्वा रामं कृत्वा प्रदक्षिणं
मूर्ध्नि ते पादुके धृत्वा प्रययौ साश्रुलोचनः. २३३

तं म हार्षिं भरद्वाजं नत्वाऽयोध्यां गतो व्रती
नंदिग्रामेऽवसन्मातृः संस्थाप्य पितुरालये. २३४

स श्रीमान् राघवो हंतुमैंद्रं काकं कृतागसम्
चिक्षेपाशु कुशे ब्राह्मं संयोज्य प्रियकृत् श्रियः. २३५

प रा भूतः स बभ्राम सर्वत्र त्रस्तमानसः
ब्रह्मणो वचनाद्रामं प्राणार्थी शरणं गतः. २३६

स म र्मेनातिकारुण्यात् सीतावचनगौरवात्
रक्षितोऽस्माय दत्त्वैकं तदक्षि प्राणसंकटे. २३७

द्वि ज वृंदपतेः श्रुत्वा तत्र पीडां प्रभुः स्वरात्
रावणावरजात् पापात् जनस्थाननिवासिनः. २३८

भ य द्रुतेषु विप्रेषु तत्रस्थेषु गिरेस्ततः
रामोऽत्रेराश्रमं गत्वा प्रणनाम तमादरात्. २३९

दा रा नुजान्वितं रामं भगवानत्रिरादृतः
संप्रेक्ष्यांगीचकारातिप्रेम्णा पुत्रमिवौरसम्. २४०

स म शीलां महाभागामनसूयां प्रियां स्वयम्
'प्रतिगृह्णीष्व वैदेहीमिमा'मित्यब्रवीन्मुनिः. २४१

नि ज पत्न्या महासाध्व्याः प्रभावं तपसोऽद्भुतम्
रामायासावाचचक्षे 'शृणु वत्से 'ति सादरम्. २४२

सा य दाभूदनावृष्टिर्दश वर्षाणि राघव!
अनया तात! सृष्टानि मूलानि च फलानि च. २४३

भो! ज न्हुकन्याप्यनया स्नानार्थे च तपस्विनाम्
आहूय सहसा वत्स! स्वाश्रमेऽस्मिन्प्रवर्तिता. २४४

भ य प्रशमनं राम! विघ्नानां लीलया कृतम्
दशवर्षसहस्राणि तपस्तप्तं पुराऽनया. २४५

सु रा णामपि कार्यार्थमनयोग्रप्रभावया
दशरात्रं कृता रात्रिः सेयं मातेव तेऽनघ! २४६

न म स्कार्या समस्तानामिमां राम! तपस्विनीम्
अभिगच्छतु वैदेही वृद्धामक्रोधनां प्रति.' २४७

---

१. लक्ष्मीरूपिण्याः सीतादेव्याः २. दशरात्रावधिकः कालः एकरात्रित्वेन कृतः.

स श्री मान्मैथिलीमाह 'श्रुतं त्वेतन्मुनेर्वचः
श्रेयोऽर्थं राजपुत्रि! त्वमभिगच्छ तपस्विनीम्.' २४८
ध रा कन्या तथेत्युक्त्वा मुनेः पत्नीं महासतीम्
अभ्यवादयदव्यग्रां स्वं नाम समुदाहरत्. २४९
सा म हर्षिप्रियां नत्वा तापसीं तां दमान्विताम्
बद्धांजलिपुटा हृष्टा पर्यपृच्छदनामयम्. २५०
प्रां ज लिं जानकीमाह ब्राह्मणी ब्रह्मवादिनी
'बालापि वत्से! प्रौढा त्वं दिष्ट्या धर्ममवेक्षसे. २५१
प्रि य मेतं त्वमेवं चेद्वत्से! नित्यमनुव्रता
शुद्धं यशश्च धर्मं च जगत्सु समवाप्स्यसि. २५२
न रा धिपसुते! सीते! किं प्रियं करवाणि ते?'
इति श्रुत्वा वचस्तस्याः सा तां प्रांजलिरब्रवीत्. २५३
'म म सर्वं प्रियं मातर्जातं त्वत्पाददर्शनात्,
कृतकृत्यास्मि ते दृष्ट्या दुर्लभोऽयमनुग्रहः.' २५४
भा ज नं तां प्रसादस्य ज्ञात्वा सीतामथाब्रवीत्,
'इदं दिव्यं वरं माल्यं भूषणान्यंबरं वरम् २५५
प्र य च्छामि गृहाण त्वमंगरागं च कन्यके!
शोभयिष्यसि गात्राणि सर्वमेतत्सदा नवम्.' २५६
स्र ज स्तथांगरागं च वस्त्रमाभूषणानि सा
प्रतिगृह्यांतिके तस्थौ बद्धांजलिरुदारधीः. २५७
प्रि य मस्या मुनेः पत्न्याः कर्तुं सीता स्वयंवरम्
आत्मनः कथयामास पृष्टं सर्वं सविस्तरम्. २५८
तां रा मोऽलंकृतां दृष्ट्वा जानकीमनसूयया
जहर्ष लक्ष्मणोऽप्यत्रिं मुनिमापृच्छ्य निर्ययौ. २५९
स म यूरमिवांभोदो मुनिसंघं प्रहर्षयन्
वनं विवेश श्रीरामो मनः शुद्धं सतामिव. २६०

इति श्रीरामनंदनमयूरविरचिते श्रीमन्मंत्ररामायणेऽयोध्याकांडे विंशतितमो मंत्रः समाप्तः

# अरण्यकांडम्

रामः श्री मान्स प्रविश्य दंडकारण्यमात्मवान् .
दद‍र्श तत्र पुण्याढ्यं तापसाश्रममंडलम्. १

[1]सुचि रा हितसंकल्पा रुचिराशिं तपोधनाः
श्रीरामं पूजयामासू राक्षसेभ्योऽभयार्थिनः. २

जगा म तैरनुज्ञातस्तस्मादाश्रममंडलात्
विराधं राक्षसं रामो ददर्शातीव भीषणम्. ३

सीतां ज ग्राह सहसा सोऽभिद्रुत्य निशाचरः
बाणैर्विद्धोऽपि, तां त्यक्त्वा, तावुभौ रामलक्ष्मणौ ४

धृत्वा य यौ बलान्न्यस्य स्कंधे बालाविवेश्वरौ.
रुरोद सीता शोकार्ता ततः क्रुद्धौ बलांबुधी ५

प्रव रा भ्यामासिभ्यां तं चक्रतुर्बाहुवार्जितम्
उद्यम्योद्यम्य बाहुभ्यां स्थंडिले निष्पिपेषतुः. ६

विद्धो म र्मण्यपि शरैश्छिन्नबाहुश्च मुष्टिभिः
पार्ष्णिभिर्मर्दितो गाढं तथापि न ममार सः. ७

गाढं ज गत्पतिः कंठे पादेनाक्रम्य राक्षसम्
उवाच लक्ष्मणं, ' गर्ते पिहितोऽयं मारिष्यति. ८

मुक्तो य क्लेशशापात्तं राघवं प्राह तुंबरुः,
' शरभंगं मुनिं गच्छ स ते श्रेयो विधास्यति. ९

गर्ते ज गत्यां निक्षिप्य मृदापूर्यं निशाचरम्
शरभंगाश्रमं सीतामाश्वास्याभिजगाम सः. १०

उद य स्थमिवादित्यं दूरात्संप्रेक्ष्य वासवम्
शरभंगेन संमंत्र्य [2]तस्मिन्नपगते प्रभुः ११

सदा रा ध्यः स्वयं रामः सदारानुजानिर्मुनिम्
स्वनाम संकीर्त्य ततो ननाम विनयेन तम्. १२

' कोऽयम म आगतो देव' इति पृष्टो महामुनिः

---

१. सुचिरं आहितः [रामदर्शनस्य] संकल्पः यैः ते. २. प्रयाते सहस्राक्षे.

शरभंगोऽब्रवी,'द्राम मां नेतुं हरिरागतः, १३
सोऽहं श्री मंतमभ्यर्च्य त्वां प्रियातिथिमागतम्
ब्रह्मलोकं गमिष्यामि त्वत्समक्षं जगद्गुरो!' १४
इति रा जीवनेत्रं तमुक्त्वा संपूज्य सादरम्
प्रविश्याग्नौ क्षणादेव दिव्यरूपोऽभवन्मुनिः. १५
पिता म हादिभिर्देवैर्देवर्षिभिरुपागतैः
नीतो विमानमारोप्य रामदर्शननिर्वृतः. १६
समा ज स्तत्र तत्रत्यमहर्षीणां रघूत्तमम्
सत्कृत्य दर्शयामास राक्षसैर्निहतान्मुनीन्. १७
तेभ्यो थ शस्विप्रवरोऽभयं दत्वाऽभयप्रदः
शरभंगप्रकथितं सुतीक्ष्णाश्रममभ्यगात्. १८
तं स्म रा धिकलावण्यं सदारं सानुजं नतम्
आलिंग्य मूर्ध्न्यवघ्राय सुतीक्ष्णोऽतीव निर्वृतः. १९
पर म प्रेमलात् तस्मात्प्राप्य सत्कारमुत्तमम्
अन्यानपि ययौ द्रष्टुं दंडकारण्यवासिनः. २०
मार्गे ज नकजोवाच, 'हिंसा नेष्टा तपोवने.'
तामाह, 'ब्रह्मरक्षार्थं हिंसा कार्ये'ति राघवः. २१
रामो य यौ वने धन्वी कवची सासिरग्रतः
मध्ये सीता, पृष्ठतस्तु लक्ष्मणोऽनुजगाम ताम्. २२
ते यो ज नायतं सार्थं तटाकं ददृशुर्वने
गीतवादित्रनिर्घोषं तस्मिन् शुश्रुवुरद्भुतम्. २३
विस्म य स्य पदं रामः पप्रच्छ सहवासिनम्
मुनिं धर्मभृतं नाम, स प्राह रघुनंदन! २४
'अम रा स्तपसो भीता मांडकर्णेर्महात्मनः
विघ्नं कर्तुं योजितास्तैः पंचाप्सरस उत्तमाः. २५
नीतो म दनवश्यत्वं ताभिरत्र स तापसः
तासां सरसि रामार्थं गीतवादित्रसत्ध्वनिः.' २६

श्रुत्वा श्री मान् ' महाश्चर्यमि 'त्याह जयतां वरः
जगाम चाश्रमांस्तेषां पर्यायेण तपस्विनाम्. २७

भूसु रा णामाश्रमेषु रममाणस्य सत्पतेः
सुखेन दंडकारण्ये ययुः संवत्सरा दश. २८

आश्र म प्रवरं रामः सुतीक्ष्णस्य मुनेः पुनः
जगाम न्यवसत्तत्र कंचित्कालमरिंदमः. २९

घट ज स्याश्रमं रामः सुतीक्ष्णप्रोक्तवर्त्मना
गच्छंस्तद्भ्रातुरभ्यागादाश्रमं प्रथमं पथि. ३०

कथां य शस्करीं[1] रामः कुंभजस्य महात्मनः
वातापील्वलयोर्हंतुः कथयामास सन्मताम्. ३१

भ्रातु रा श्रममासाद्य कुंभयोनेस्तपोनिधेः
रामः सीता च सौमित्रिः सत्कृतिं प्राप्य निर्वृताः. ३२

जगा म तदनु भ्रात्रा सीतयानुगतः पथि
पुण्यरम्याश्रमपदं रामः कलशजन्मनः. ३३

अनु ज न्मानमनुगं लक्ष्मणं राघवोऽब्रवीत्,
' आश्रमोऽयं भगवतो यच्छांता[2] मृगपक्षिणः. ३४

वत्सा य माश्रमः सेव्यः प्रयतैरेव नेतरैः[3],
नात्र रक्षःप्रवेशोऽस्ति प्रतापोऽस्य मुनेर्महान्. ३५

यत्ते ज सोऽनिशं भीतो विंध्योऽद्यापि न वर्धते,
वत्स! किं बहुनोक्तेन पीतो येनाखिलोऽबुधिः. ३६

विन य ज्ञोऽसि सौमित्रे! तात! त्वं प्रविशाग्रतः
निवेदयेह मां प्राप्तमृषये सह सीतया.' ३७

उदा रा मुक्तिमाकर्ण्य प्रविश्याश्रममद्भुतम्
अगस्त्यशिष्यमासाद्य वाक्यमेतदुवाच सः, ३८

' पुत्रो म हीपतेर्ज्येष्ठो रामो दशरथस्य यः
प्राप्तो द्रष्टुं मुनिश्रेष्ठं भार्यया सह सीतया. ३९

---

१. सतां मानहेतुकथामित्यर्थः. २. यस्मिन्नाश्रमे शान्ताः शममुपगताः. ३. दान्तैः.

अहं श्रीमत एतस्य भक्तो भ्रातानुजो द्विज!
द्रष्टुमिच्छामहे सर्वे भगवंतं निवेद्यताम्.' ४०
सोऽग्नेरालयमासाद्य प्रोवाच प्रांजलिर्गुरुम्,
भगवन्! सीतया प्राप्तौ त्वां द्रष्टुं रामलक्ष्मणौ. ४१
श्रुत्वा महात्मा तं प्राह, 'वत्स! किं न प्रवेशितौ?
मयापि रामागमनं मनसा कांक्षितं चिरम् ४२
सानुजन्मानमाशु त्वं ससीतं राममानय.'
इत्युक्तः स तथेत्युक्त्वा लक्ष्मणं प्राह तापसः, ४३
'दर्शय क्वाग्रजस्तेऽयं भगवांस्तं प्रतीक्षते
सभार्यः स मुनिं द्रष्टुमेतु प्रविशतु स्वयम्.' ४४
स त्वरावान्सुमित्रायाः पुत्रस्तमृषिमात्मनः
अग्रजं दर्शयामास रामं सीतासमन्वितम्. ४५
शिष्यो महर्षेस्तद्विद्वान् प्रश्रितं वचनं ब्रुवन्
प्रावेशयद्यथान्यायं सत्कारार्हं सुसत्कृतम्. ४६
रामो जनकजा देवी लक्ष्मणश्चाश्रमे मुनेः
देवस्थानानि पश्यंतः प्रवेशं चक्रुरुत्सुकाः. ४७
ततो यथाग्निस्तिग्मांशुर्निर्गतोऽग्निगृहान्मुनिः,
तं दृष्ट्वा राघवः प्राह, 'पश्य लक्ष्मण! यः श्रुतः, ४८
सोऽयं जगति विख्यातः कुंभजन्माऽपरो विधिः
औदार्येणावगच्छामि निदानं तपसामिदम्.' ४९
आज्ञाय राशेस्तस्याथ सीतया सह सानुजः
पादौ जग्राह विनयाद्रामः सद्धर्मपालकः. ५०
सदा रावरजं राममगस्त्योऽभ्यर्च्य, वैष्णवम्
धनुः शरं ब्रह्मदत्तं तूणौ चाक्षयसायकौ ५१
ददौ महासिं चोवाच, 'महेंद्रेणेदमर्पितम्,
जयाय प्रतिगृह्णीष्व त्वमायुधमनुत्तमम्.' ५२
रामः श्रीमान्गृहीत्वा तान्यायुधानि महामुनिम्

ननाम यस्यांशनितो न नाम ह्यूनमोजसा. ५३

'कांता रा खिन्नचित्तेयं कांता राम! तवोचिता
धन्यां जनकराजस्य कन्यां मन्यामहे वयम्.' ५४

एवं म नोहरां वाचं वदंतं कुंभसंभवम्
उवाच प्रांजलिर्नत्वा सत्वाकारो रघूत्तमः. ५५

'सानु ज स्य सभार्यस्य गुणैस्तुष्टोऽसि मे गुरो
धन्योऽस्म्यनुगृहीतोऽस्मि वस्तुं देशं तु बोधय.' ५६

वासा य ते स्थलं राम! गोदावर्यास्तटेऽनघे
ख्यातं पंचवटीत्यास्ते कुरु तत्राश्रमं शुभम्.' ५७

इत्य रा तिवधोद्युक्त उक्तस्तेन महर्षिणा
तं प्रणम्य रघूत्तंसस्ततः पंचवटीं ययौ. ५८

स भी म विक्रमो रामो गच्छन् पंचवटीं पथि
आससादांतरा गृध्रं महाकायं महामतिम्. ५९

सानु ज स्तं प्रभुर्गृध्रं मेने मनसि राक्षसम्,
'को भवानि'ति पप्रच्छ स चाह प्रीतमानसः. ६०

'सखा य मात्मनो विद्धि पितुर्दशरथस्य माम्
वत्स! रामारुणसुतं गृध्रं नाम्ना जटायुषम्. ६१

अग्र ज न्मा च मे नाम्ना संपातिरिति विश्रुतः
सहायस्ते भविष्यामि रक्षिष्ये जानकीं वने. ६२

तं व य स्यं पितुः प्रेम्णा प्रतिपूज्य, 'स्नुषामिमाम्
तात! त्वं पालये' त्युक्त्वा रामः पंचवटीं गतः. ६३

रुचि रा मग्रजाज्ञातः पर्णशालां महामतिः
पंचवट्यां चकाराशु सौमित्रिर्मित्रवत्सलः. ६४

तस्यां म नुष्यचारितः ससीतः सानुजः सुखम्
उवास भगवान् रामो मुनिवृत्तिं समाश्रितः. ६५

---

१. यस्य नामापि तेजसा अशनितो न न्यूनं तडिदिव क्षिप्र पापसंहारकं तं मुनिमगस्त्यं ननामेत्यर्थः

तत्र श्री मद्वरं रामं हेमंते प्रेक्ष्य राक्षसी[1]
यदृच्छयागता पापा बभूव स्मरमोहिता, ६६

स्वसा रा क्षसराजस्य रंडा शूर्पणखाभिधा
समासाद्य सुदुर्वृत्ता सद्वृत्तमशिवा शिवम्. ६७

अस म र्थां समर्थं तं सुस्वरं भैरवस्वना
प्रियरूपं विरूपा सा वृद्धा तरुणमब्रवीत्. ६८

'कस्त्वं ज टी शस्त्रधरः सभार्यो यातुसेवितम्[2]
इमं देशं कथं प्राप्तः किमागमनकारणम्?' ६९

रामो य थावदखिलं ऋजुबुद्धितयेव ताम्
आदितः कथयामास विस्तराद्वृत्तमात्मनः. ७०

तां च रा मेऽ'स्ययेये[3] का त्वं मनोज्ञांगीह राक्षसी
प्रतिभासि मम ब्रूहि तत्त्वेने'त्यवदत्प्रभुः. ७१

वृत्तं म धुरवाग् व्यक्तं कथयामास कामुकी,
'अहं शूर्पणखा नाम राक्षसी कामरूपिणी. ७२

भ्राता ज गद्रावणो मे यदि ते श्रोत्रमागतः
प्रवृद्धनिद्रश्च सदा कुंभकर्णो महाबलः. ७३

तथा य तात्मा धर्मज्ञस्त्यक्तराक्षसचेष्टितः
बिभीषणः, ख्यातवीर्यौ भ्रातरौ खरदूषणौ. ७४

तेभ्यो ज न्मत एवाहं वीर्येणाभ्यधिका सदा
त्वामुपेतास्मि भावेन भर्तारं पुरुषोत्तमम्. ७५

चिरा य भव मे भर्ता, सीतया किं करिष्यसि?
विकृता च विरूपा च न सेयं सदृशी तव. ७६

अहं रा मानुरूपा ते भार्यारूपेण पश्य माम्
इमां तेऽहं सह भ्रात्रा भक्षयिष्यामि मानुषीम्.' ७७

एव म स्या वचः श्रुत्वा प्रहस्याह विशारदः

---

१. शूर्पणखानाम्नी. २. यातुभिः राक्षसैः सेवितम्. ३. रामे असि अये इति पदच्छेदः (अये रामे प्रमदे त्वं का असि?)

'कृतदारोऽस्मि भवति ! भार्येयं दयिता मम. ७८
शृणु श्री मति ! रामाणां त्वद्विधानां तु सर्वथा
स्वच्छंदचित्तवृत्तीनां सुदुःखा ससपत्नता. ७९
एष रा जीवनयनोऽकृतदारो[1] गुणाकरः
एनं भज विशालाक्षि ! भर्तारं भ्रातरं मम.' ८०
सा का म मोहिता रामं विसृज्योवाच लक्ष्मणम्,
'अस्य रूपस्य ते युक्ता भार्याहं वरवर्णिनी. ८१
मां भ ज प्रियमत्यंतं त्वं वने प्राप्स्यसि ध्रुवम्.'
ततः शूर्पणखीं[2] स्मित्वा सौमित्रिर्युक्तमब्रवीत्. ८२
'यवी य सी भवार्यस्य भार्या त्वं मदिरेक्षणे[3] !
कथं दासस्य मे दासी भार्या भवितुमिच्छसि ? ८३
एतां रा त्रिचारि ! स्पष्टं विरूपां[4] निर्णतोदरीम्[5]
वृद्धां[6] भार्यां परित्यज्य त्वामेवैष भजिष्यति. ८४
रूप म त्यद्भुतमिदं को हि संत्यज्य सुंदरि !
मानुषीषु वरारोहे ! कुर्याद्भावं विचक्षणः ?' ८५
सोट ज स्थं पुना रामं परिहासाविचक्षणा
सीतया सह दुर्धर्षमब्रवीत्काममोहिता. ८६
इमां य स्मादवष्टभ्य विरूपामसतीं स्त्रियम्
अनुरूपां सकुलजां न मां त्वं बहु मन्यसे, ८७
तदो ज सैतामद्याहं भक्षयिष्यामि मानुषीम्
त्वया सह चरिष्यामि निःसपत्ना यथासुखम्.' ८८
अन्या य वृत्तेत्युक्त्वा सा तां मृगाक्षीमलातदृक्[7]

---

१. अकृतपरदारपरिग्रहो वा असंनिहितदारो वा अनूढभार्यो वा. २. शूर्पणखीमिति शुद्धयौगिकं-पंत. ३. मादयंति आभ्यामिति मदिरे ईक्षणे यस्याः सा, तत्संबुद्धिः हे मदिरेक्षणे ! ४. कुरूपां विशिष्टरूपां वा त्रैलोक्यसुंदरीमित्यर्थः ५. नितरां नतं स्थूलमित्यर्थः उदरं यस्याः ताम् महोदरीम्. तनुमध्यां कृशोदरीमिति द्वितीयोऽर्थः. ६. वयोवृद्धां वा ज्ञानवृद्धामनादिं च. ७. अलाते अङ्गारौ इव दृशौ यस्याः सा.

अभ्यगच्छत्सुसंक्रुद्धा महोल्का [1]रोहिणीमिव. ८९

तां क्रू रा मसतीं वाचा निगृह्य कुपितः प्रभुः
उवाच लक्ष्मणं, ‘ क्रूरैः परिहासो न संमतः, ९०

इमां म त्तामसाध्वीं त्वं विरूपामतिदारुणाम्
राक्षसीं पुरुषव्याघ्र ! विरूपयितुमर्हसि.’ ९१

[2]इति श्री मत आर्यस्य श्रुत्वाज्ञां लक्ष्मणः कृती
उद्धृत्य खड्गं चिच्छेद तस्या नासां श्रुती च सः. ९२

प्रस्र रा सिच्छिन्नकर्णनासात्युग्रं विनद्य सा
यथागतं प्रदुद्राव घोरा शूर्पणखा वनम्. ९३

तदा म होग्रा सा पापा राक्षसी शोणितोक्षिता
ननाद विविधान्नादान्यथा प्रावृषि तोयदः. ९४

स्वाग्र ज स्य खरस्यार्ता जनस्थानगतस्य सा
पपात पुरतः क्रूराकाराऽकाशादिवाशनिः. ९५

खरो ऽय शस्करं दृष्ट्वा तत्तां पप्रच्छ, ‘ केन ते
दुर्दशेयं कृता ब्रूहि कोऽगुल्या प्रतुदत्याहिम् ? ९६

न सु रा णां पतिः शक्रः शक्तः कर्तुं ममाप्रियम्
कोऽयमेवं महावीर्यस्त्वां विरूपां चकार यः ? ९७

संख्ये म या हतस्योग्रैः शरैः संकृत्तमर्मणः
सफेनं रुधिरं कस्य मेदिनी पातुमिच्छति ?’ ९८

सा व्या ज हार, ‘ तरुणौ सुकुमारौ महाबलौ
पुंडरीकविशालाक्षौ चीरकृष्णाजिनांबरौ ९९

सव य स्कौ धर्मरतौ फलमूलाशनौ मुनी
पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ. १००

दृष्टा ज गत्यनुपमा तयोर्मध्ये सुमध्यमा
तरुणी रूपसंपन्ना सर्वाभरणभूषिता. १०१

---

१. रोहिणीनाम्नीं तारामिव. २. एते त्रयः श्लोकाः कविलिखितायां मातृकायां परेणैव लिखिताः समुपलभ्यन्ते.

संभू　य ताभ्यां भ्रातृभ्यां निमित्तीकृत्य तां स्त्रियम्
　　इमामवस्थां नीताहं यथानाथासती[1] तथा.　　१०२
तयो　रा गस्कृतोरद्य तस्याश्चापि खरानृजोः[2]
　　सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि.'　　१०३
एव　म स्याः खरः श्रुत्वा स्वसुः प्रियचिकीर्षया
　　वीरानाज्ञापयामास चतुर्दश निशाचरान्.　　१०४
रामः श्री मांस्तया सार्धमात्मानं हन्तुमागतान्
　　उवाच, तापसावावां किमर्थमुपहिंसत ?'　　१०५
ऊचू　रा क्षसवीरास्ते, 'भर्तुर्नः कर्तुरप्रियम्
　　तव रक्तमियं पातुं राम ! कामयतेऽधुना.'　　१०६
ते प्र　म त्ताः परे शूलान्येवमुक्त्वा प्रचिक्षिपुः
　　तानि चिच्छेद तावद्भिः शरै रामश्चतुर्दश.　　१०७
ततो　ज घान तान् रामश्चतुर्दशभिराशुगैः
　　क्रुद्धा प्रधाविता भूयः सा किंचिच्छुष्कशोणिता.　　१०८
'दत्ता　य त्तेऽत्याभिमतं तत्कर्तुं राक्षसा मया
　　स्वसः ! पुना रोदिषि किं' पप्रच्छेति स तां खरः.　　१०९
'पाम　रा स्ते हतास्तेन तदैवे'ति शशंस सा
　　निनिंद च खरं, 'मर्त्याद्भीतस्त्वं बालिशो'ति तम्.　　११०
सोऽति म न्युः खरः प्राह दूषणं स्वचमूपतिम्,
　　'चतुर्दश सहस्राणि निर्यांतु मम राक्षसाः.　　१११
रथं　ज　यावहं क्षिप्रमुपस्थापय सायुधम्.'
　　तेन चोद्योजिता सेना स्यंदनः स्थापितोऽग्रतः.　　११२
तं ज　य प्रदमारुह्य स्यंदनं राक्षसः खरः
　　निर्जगाम जनस्थानात्कृत्वा स्वबळमग्रतः.　　११३
परा　ज यदमत्युग्रमुत्पातशतमुद्धतः
　　अचिंतयन् खरः प्राप्त आश्रमं कालचोदितः.　　११४

---

१. अनाथा असती इति पदच्छेदः २. न ऋजुः तस्याः—अनृजुवृत्तायाः.

तन्न   य प्रदस्युद्दामदुंदुभिध्वनिसूचितम्
रक्षःसैन्यं हंतुकामो रामो लक्ष्मणमब्रवीत्. ११५

'त्वं वी रा सुबन्धुष्पाणिर्गृहीत्वा जानकीं द्रुतम्
गुहामाश्रय शैलस्य दुर्गां पादपसंकुलाम्. ११६

वत्स! म द्वाक्यमेतन्न प्रत्याख्येयमिह त्वया
ममासि शापितोऽङ्घ्रिभ्यां! सौमित्रे गच्छ मा चिरम्.[1]' ११७

गते श्री मति सौमित्रौ गुहामादाय जानकीम्
रामो बभूव सन्नद्धो रक्षसां निधनेप्सया. ११८

व्योम्नि रा त्रिचरध्वंसं द्रष्टुं देवाः समागताः
तेजसाप्यायितं[2] रामं ददृशुर्विस्मयान्विताः. ११९

अथा म र्षवन्नं सैन्यं खरस्य विविधायुधम्
ववर्ष रामे सर्वत्र मेघजालमिवाचले. १२०

यथा ज लधरं वातः शस्त्रौघं व्यधमत्प्रभुः
गांधर्वेण बलं कृत्स्नं जघानाशु खरस्य तत्. १२१

अग्र   य त्मेन तत्सैन्यं हत्वा दाशरथी रणे
न्यवधीद्दूषणं सेनापतिं त्रिशिरसं च तम्. १२२

प्रस्व   रा युध स्थामः खरो राक्षसपुंगवः
मुष्टिदेशे रघुपतेर्धनुश्चिच्छेद संगरे. १२३

ततो म हद्धनुर्दत्तं यदगस्त्येन वैष्णवम्
तत्सज्यमकरोद्रामस्तं ततक्ष खरैः शरैः. १२४

खरो ज[3] न्ये छिन्नगदश्छिन्नसालो निरायुधः
मत्तो रुधिरगंधेन राममभ्यद्रवद् द्रुतम्. १२५

दृष्ट्वा   य शस्त्रिराजस्तमापतंतं महाजवम्
अपासर्पत्पंङ्क्तित्रिपदं किंचित्त्वरितविक्रमः. १२६

धनं ज[4] याभं नाशाय खरस्य समरे शरम्
रामो जग्राह दिव्यं तं ब्रह्मदंडमिवापरम्. १२७

---

१. मा चिरं विलम्बं मा कुरु. २. पूर्णम्. ३. युद्धे. ४. अग्निनिभम्.

जया य दत्तं मुनिना कुंभजेन महात्मना
संदधे च स धर्मात्मा मुमोच च खरं प्रति. १२८
मुक्तो रा घवराजेन खरोरस्यपतच्छरः
स पपात खरो भूमौ दह्यमानः शराग्निना. १२९
पुरा म हेशनिर्दग्धः श्वेतारण्ये यथांधकः
स वृत्र इव वज्रेण फेनेन नमुचिर्यथा. १३०
रामे श्री मति संप्राप्तविजये निहते खरे
देवदुंदुभयो नेदुः पुष्पवृष्टिर्महत्यभूत्. १३१
अम रा अब्रुवन् हृष्टा, 'अहो सर्वे निशाचराः
अर्धाधिकमुहूर्तेन रामेण निहता रणे.' १३२
रामं म हर्षयोऽगस्त्यप्रमुखा हर्षनिर्भराः
पूजयित्वोचुरिंद्रस्तं शरभंगाश्रमं स्वयम् १३३
समा ज गामैतदर्थमिमं देशमुपायतः
आनीतस्त्वं वधायैषां राक्षसानां महर्षिभिः. १३४
प्रत्य य स्त्वयि नो राम! राजर्षिकुलभूषण!
स्वस्त्यस्तु ते, कृतं कार्यं महद्दशरथात्मज!' १३५
एवं रा क्षसहंतारं पूज्यमानं महर्षिभिः
लक्ष्मणो मुदितोऽभ्येत्य ननामाग्रजमीश्वरम्. १३६
रक्षो म र्दनमाश्लिष्टं समीक्ष्य विजयश्रिया
बभूव हृष्टा वैदेही भर्तारं परिषस्वजे. १३७
ततो ज वेन निर्गत्य जनस्थानाद[1]कंपनः
प्रविश्य लंकां विश्रस्तो रावणं वाक्यमब्रवीत्. १३८
'सैन्यं य त्ते जनस्थाने प्रभो तत्सकलं हतम्
खरश्च निहतः संख्ये[2] कथंचिदहमागतः.' १३९
श्रुत्वा ज गद्दुर्निवार्यप्रतापो दशकंधरः
अकंपनमुवाचेदं निर्दहन्निव तेजसा. १४०

---

१. अकंपनो नाम राक्षसः २. युद्धे.

'रे ! को य मेवं बलवान् जनस्थानविनाशकृत् ?
कृत्वा मे विप्रियं शक्यं सुखं प्राप्तुं न वज्रिणा. १४१
राज रा जेन न न वा यमेन न च विष्णुना
कालस्य चाप्यहं कालो दहेयमपि पावकम्. १४२
मृत्युं म रणधर्मेण संयोजयितुमुत्सहे.'
अकंपनस्तथा क्रुद्धं ययाचेऽभयमीश्वरम्. १४३
ददौ श्री मान्दशग्रीवोऽभयं तत उवाच सः
'पुत्रो दशरथस्यास्ते रामो नाम महाबलः, १४४
तेन रा वण वीरेण भास्कराधिकतेजसा
सदूषणः सत्रिशिरा जनस्थाने हतः खरः.' १४५
तत्स म न्युर्दशग्रीवः श्रुत्वाकंपनभाषितम्
नागेंद्र[१] इव निश्वस्य वचनं चेदमब्रवीत्. १४६
'मनु ज स्त्रिदशैर्युक्तः स रामो वेंद्रसंयुतः
उपयातो जनस्थानं ब्रूहि कच्चिदकंपन !' १४७
अभ य प्रदमुग्रं तमुवाचेदमकंपनः,
'रामो नाम महातेजाः श्रेष्ठः सर्वधनुष्मताम्. १४८
तस्य रा केंदुसंकाशवदनो दुंदुभिस्वनः
कनीयान् लक्ष्मणो भ्रातानुरूपो वीर्यसंपदा. १४९
यथा म रुत्सहायोऽग्निर्दुःसहः सर्वदेहिनाम्
तथा सलक्ष्मणो रामो द्विषतां राक्षसेश्वर ! १५०
हता ज नस्थानगताः सर्वे रामेण राक्षसाः
न तस्य पुरतः स्थातुं शक्यमद्भुततेजसः. १५१
वृत्ता[२] य तभुजः श्यामो रामो राजीवलोचनः
दृष्टः पलायमानैस्तैः सर्वैरेवाग्रतः स्थितः.' १५२
'स्वयं ज नस्थानमहं गमिष्यामि सलक्ष्मणम्
रामं हंतु'मिति प्राह क्रोधांधो दशकंधरः. १५३

---

१. सर्वश्रेष्ठः फणींद्रः २. वृत्तौ वर्तुलौ आयतौ दीर्घौ च भुजौ यस्य सः.

प्रल य ज्वलनाकारं तमाहाकंपनः, 'प्रभो!
अस्राध्यः कुपितो रामो विक्रमेण महायशाः. १५४
नहि रा जन् स रामोऽद्य शक्यो जेतुं रणे त्वया
समग्रै राक्षसैर्वापि स्वर्गः पापजनैरिव. १५५
न तं म न्ये वध्यमहं सर्वैर्देवासुरैरपि.
अथं तस्य वधोपायस्तमाकर्णय मन्मुखात्. १५६
तस्य श्री रिव भार्यास्ते सीता नामातिसुंदरी,
श्यामा[1] समविभक्तांगी स्त्रीरत्नं रत्नभूषिता. १५७
तां ह रा शु प्रलोभ्य त्वं प्रथमं राममत्यरिम्
सीतया रहितः क्षिप्रं सोऽसह्यो न भविष्यति.' १५८
मत्वा म तं हितं तस्य तमुवाचाथ रावणः,
'बाढं प्रातर्गमिष्यामीहानयिष्यामि तामहम्. १५९
ततोऽ जं[2] लब्धैः प्रवरैर्वरैर्मत्तो दशाननः
सीतां हर्तुमनाः क्षिप्रं लंकाया निर्गतो बली. १६०
स वि य त्पथमाविश्य रथमारुह्य कामगम्
उत्तरं तीरमगमत्तीर्त्वा नदनदीपतिम्. १६१
प्राप रा क्षसराट् तूर्णं ताटकातनयाश्रमम्.
तं मारीचोऽर्चयामास भक्ष्यभोज्यैरमानुषैः. १६२
स्वाश्र म प्राप्तमधिपं स मारीचोऽब्रवीदिदम्,
'कच्चित्ते कुशलं राजन्! किमर्थं तूर्णमागतः?' १६३
तं रा ज राजावरजः प्राह, 'रामेण तात! मे
जनस्थानमवध्यं तत्सर्वं युधि निपातितम्. १६४
सहा य स्त्वं भवाद्यांग तद्भार्याहरणे मम.'
इत्युक्तो राक्षसेंद्रेण मारीचो वाक्यमब्रवीत्, १६५
'त्वया ज गत्पते तात! को न नंदति नंदितः
आख्याता केन वा सीता मित्ररूपेण शत्रुणा? १६६

---

१. यौवनमध्यस्था. २. ब्रह्मणः सकाशादधिगतैः.

नेदं य शस्करं कर्म, स्वदारेषु रमस्व, सः
सभार्यो रमतां रामो वनेषु, स्वपुरं व्रज.' १६७

एवं रा क्षसराडुक्तो मारीचेन हितैषिणा
न्यवर्तत पुरीं लंकां विवेश च गृहोत्तमम्. १६८

अथा म रारिमभ्येत्य लंकायां भ्रातरं निजम्
मुखं शूर्पणखा भग्नं विरूपितमदर्शयत्. १६९

'हत श्री स्त्वं स्वसः! केन कृतैवं वद सत्वरम्'
रुदतीमिति पप्रच्छ रावणः क्रोधमूर्छितः. १७०

साह, 'रा मस्य दयितां त्वदर्थं हर्तुमुद्यता
भ्रातस्तस्यानुजेनाहं लक्ष्मणेन विरूपिता. १७१

त्वं प्र म त्तः कामभोगे स्वैरवृत्तो निरंकुशः
समुत्पन्नं भयं घोरं बोद्धव्यं नावबुध्यसे. १७२

त्वम ज स्रं विगृह्यार्यैर्देवगंधर्वदानवैः
अयुक्तचारश्चपलः कथं राजा भविष्यसि? १७३

विष य स्यावनेऽशक्तो जनस्थानक्षयं भयम्
रामाद्दाशरथेः प्राप्तं न जानासि जडोऽस्यलम्. १७४

न चा रा यस्य स ह्यंधो राजानश्चारचक्षुषः
विपन्नराज्यो न चिराद्विपत्तिं प्राप्स्यसेऽवशः. १७५

त्वं स म र्थोऽसि चेत्सत्यं रत्नभोक्ता दशानन!
रामस्य दयितां सीतां स्त्रीरत्नं भुंक्ष्व तेजसा. १७६

सा रा ज ते स्वरूपेण साक्षाच्छ्रीरिव जानकी,
न तादृशी दृष्टपूर्वा श्रुतपूर्वापि वांगना. १७७

सीता य स्य भवेद्भार्या यं च दृष्ट्वा परिष्वजेत्
अभिजीवेत्स सर्वेषु लोकेष्वपि पुरंदरात्.' १७८

भूयो ज गाम रामस्य हर्तुं भार्यां स रावणः
पिशाचास्यैः खरैर्युक्तं रथमारुह्य कामगम्. १७९

तन य स्याश्रमं प्राप्तस्ताटकायाः पुनर्द्रुतम्

दृष्ट्वा चतुः शतक्रोशशाखं पथि महावटम् १८०
आद रा त्पूजयित्वा तं मारीचः प्राह रावणम्,
राजंस्ते कुशलं कच्चित्किं पुनस्तूर्णमागतः?' १८१
ततो म नुष्यभुग्भर्ताऽब्रवीन्मारीच! सर्वथा
रामः पित्रा परित्यक्तो दुर्वृत्तोऽपदभागिति.' १८२
मम श्री मत उद्वृत्तो रामो वैरं विना रणे
जनस्थानं जघानांग! स्वसारं च व्यरूपयत्. १८३
हत्वा रा त्रिंचरान्सर्वान्सखरान् सहदूषणान्
दत्तवानभयं तत्र मुनिभ्यः परमोद्धतः. १८४
कृत्वा म माप्रियं धृष्टो निर्दयो भूतहिंसकः
न बिभेति मनुष्योऽपि मत्तो मत्तो जयश्रिया. १८५
रक्षो ज नेश्वरस्याद्य सहायो भव मे सखे!
सौवर्णस्त्वं मृगो भूत्वा सीतायाः प्रमुखे चर. १८६
त्वामा य ताक्षी दृष्ट्वैव सौवर्णं मृगमद्भुतम्
'गृह्यतामिति' भर्तारं लक्ष्मणं चाभिधास्यति. १८७
तयो रा श्रमतो जातेऽपगमे तां यथासुखम्
निराबाधो हरिष्यामि कृतार्थेनान्तरात्मना.' १८८
इत्थ म स्य वचः श्रुत्वा मारीचस्य महात्मनः
शुष्कं समभवद्वक्त्रं, परित्रस्तो बभूव सः. १८९
कृतां ज लिस्तं प्रोवाच हितं तस्यात्मनश्च यत्
'मा मैवं वद, उद्वृत्त इति त्यक्तो न राघवः. १९०
पित्रा य दुक्तं तत्सत्यं कर्तुं काननमागतः
रामो जगद्धितस्त्राता सतां हंताऽसतां प्रभुः. १९१
कथं ज नकजां हर्तुं वांच्छसे दशकंधर!
शौर्यमत्यद्भुतं तस्य वेद्म्यहं त्वं न वेत्सि तत्. १९२
त्वमा य[1] त्तः कथं मर्तुं जातोऽस्यास्थाय साहसम्

---

१. [सीताहरणरूपदुराशायाः] आयत्तः अधीनः.

नैव धर्षयितुं शक्या दीप्तस्याग्नेः शिखेव सा. १९३

मुने रा श्रम एतेन गाधिजस्याव्रताध्वरम्

शरेण ताडितः क्षिप्तः समुद्रे शतयोजने. १९४

नैवं म र्तुं त्वया कार्यं राजंस्त्वां नानुयाम्यहम्

[१]राममभूतमिदं सर्वमरण्यं प्रतिभाति मे. १९५

नमां श्री मंतमेवं त्वं वक्तुमर्होऽद्य मे वचः

नो चेत्करोषि मारीच! हन्मि त्वाहमसंशयम्. १९६

एवं रा क्षसराजोक्तो मारीचः स उवाच तम्

श्रेयो मे मरणं रामान्न त्वत्तोऽतो व्रजाम्यहम्. १९७

ध्रुवं म रिष्यस्याचिरात्त्वं तु पुत्रादिभिः सह,'

इत्युक्त्वा स्पष्टमुद्वृत्तं सन्नद्धोऽभूत्स राक्षसः. १९८

स रा ज राजावरजस्तं परिष्वज्य सांत्वयन्

रथं तेन सहारुह्य गतः पंचवटीं द्रुतम्. १९९

राज्ञा य थोक्तो मारीचो रथादुत्तीर्य सत्ववान्

मृगो भूत्वाश्रमद्वारि रामस्य विचचार सः. २००

रुचि रा क्ष्या मृगं दृष्ट्वा तमत्यद्भुतदर्शनम्

उत्सृज्य पुष्पावचयमाहूतौ रामलक्ष्मणौ. २०१

तौ रा म लक्ष्मणौ वीरावाहूतौ मंक्षु सीतया

वीक्षमाणौ तु तं देशं रम्यं ददृशतुर्मृगम्. २०२

रामं ज गाद सौमित्रि'र्नास्ति रत्नमयो मृगः

तमेवैतमहं मन्ये मारीचं पापरूपिणम्. २०३

स्व मा य या विविधया चरंतो मृगयां वने

अनेन हि हता राम राजानो बहवः पुरा.' २०४

तं सा ज नकजा वीरं प्रतिवार्याशु लक्ष्मणम्

उवाच रामं संहृष्टा छद्मना हृतचेतना, २०५

आन य त्वं मृगं धृत्वा क्रीडार्थं नो भविष्यति,

---

१. रामः इव रामभूतम्. राममयमित्यर्थः. उपमानार्थेऽत्र भूतशब्दः.

आर्यपुत्राभिरामोऽसौ भृशं हरति मे मनः. २०६

सृमं रा श्चमराश्चान्ये दृष्टा नानाविधा मृगाः
नानेन सदृशो राजन्! दृष्टपूर्वो मृगो मया. २०७

मृगो म मायं श्वश्रूणां भरतस्य तवापि च
अंतःपुरे वसन्नित्यं विस्मयं जनयिष्यति. २०८

यदि श्री मान्न ग्रहणं जीवन्नभ्येत्ययं मृगः
अजिनं नरशार्दूल रुचिरं तु भविष्यति.' २०९

इति रा मावचः श्रुत्वा रामो लक्ष्मणमब्रवीत्,
'वत्स! त्वदुक्तं चेत्सत्यं कार्यो रक्षोवधो मया. २१०

अस्या म हान्महो नो चेद्गृहीतेनास्य वा त्वचा
सीतां रक्षन् वसात्रैव यावदागमनं मम.' २११

एवं ज लजपत्राक्ष उक्त्वा खड्गी धनुर्धरः
मायामृगं सुचपलं त्वरयानुससार तम्. २१२

स भ य व्याकुलो राममापतंतं धनुर्धरम्
बभूवांतर्हितो दृष्ट्वा पुनः संदर्शनेऽभवत्. २१३

तमा रा न्निर्गतं दृष्ट्वा दृश्यादृश्यं वने मृगम्
छिन्नाभ्रैरिव संवीतं शारदं चंद्रमंडलम्. २१४

अरि म र्दनमुग्रेषुं चापे संधाय राघवः
मुमोच ज्वलितं कोपादस्त्रं ब्रह्मविनिर्मितम्. २१५

भृशं ज वेन हृदयं तस्येषुर्निर्बिभेद सः
तालमात्रमथोत्प्लुत्य न्यपतत्स भृशातुरः. २१६

सम य प्राप्तमाज्ञाय स चकार ततः स्वनम्
सदृशं राघवस्येव 'हा! सीते! लक्ष्मणेति' च. २१७

तत्या ज मृगरूपं तन्मारीचो जीवितं च सः
जगाम मनसा सीतां रामो भ्रातुर्वचः स्मरन्. २१८

सभ य स्तं स्वनं श्रुत्वा प्रभुरप्यभवद्वने

---

१. शुक्लकृष्णपुच्छौ मृगविशेषौ.

अचिंतयत्कथं सीता लक्ष्मणश्च कथं भवेत्. २१९

ससा रा श्रममेवान्यं निहत्य पृषतं प्रभुः
तन्मांसं द्रुतमादाय भृशं मनसि शंकितः. २२०

आर्तं म हास्वनं श्रुत्वा भर्तुर्ज्ञात्वा भयाकुला
उवाच लक्ष्मणं सीता, 'गच्छ जानीहि राघवम्. २२१

वशं श्री मंतमापन्नं रक्षसां त्रातुमर्हसि
तं क्षिप्रमभिधाव त्वं भ्रातरं शरणैषिणम्[१] २२२

भर्तु रा तस्य शब्दोऽलं क्रोशतोऽद्य श्रुतो मया
न हि मे जीवितं स्थाने हृदयं वावतिष्ठते.' २२३

जगा म न तथोक्तः स भ्रातुराज्ञाय शासनम्
तमुवाच ततस्तत्र क्षुभिता जनकात्मजा. २२४

'न ग्र ज स्याशु कस्मात्त्वं त्रातुं प्राणप्रियं मम
सौमित्रे! मित्ररूपेण भ्रातुः शत्रुरसि ध्रुवम्. २२५

अस्यां य स्त्वमवस्थायां भ्रातरं नाभिपद्यसे
इच्छसि त्वं विनश्यंतं रामं लक्ष्मण! मत्कृते.' २२६

तद्वी रा श्वाव्यमाकर्ण्य सीतां सौमित्रिरब्रवीत्,
'सुरासुरैरशक्यस्ते भर्ता जेतुं न संशयः. २२७

न त्वा म स्मिन् वने हातुमुत्सहे राघवं विना.
अनिवार्यं बलं तस्य बलैर्बलवतामपि, २२८

रामो ज गत्यवध्यस्तं प्रतियुध्येत कः पुमान् ?
रक्षसः स स्वरो देवि! नैवं त्वं वक्तुमर्हसि. २२९

मृगं थे मक्षयं नीत्वा शीघ्रं रामो महायशाः
आगमिष्यति ते भर्ता हर्तायुर्द्विषतां मृधे[२]. २३०

त्वं त्य ज न्नासमार्येण न्यस्तासि मयि मैथिलि!
रक्षसां वैरमस्माभिस्त्वां त्यक्तुं नोत्सहे वने.' २३१

क्रुद्धा य थार्थवाचं तमुवाचारक्तलोचना

---

१. यमगृहम्. २. युद्धे.

अनार्यकरुणारंभ[1] ! नृशंस ! कुलपांसन ! २३२
अहं रा मस्य मन्ये ते व्यसनं परमं प्रियम्
नैव चित्रं सपत्नेषु पापं लक्ष्मण ! यद्भवेत्. २३३
रामं म त्कृत एवैकमेकोऽरण्येऽनुगच्छसि
सुदुष्टस्त्वं प्रतिच्छन्नः प्रयुक्तो भरतेन वा. २३४
रामं श्री मंतमाश्रित्य कामयेयं कथं परम्
समक्षं तव सौमित्रे ! प्राणांस्त्यक्ष्यै*याम्यसंशयम्.' २३५
निष्ठु रा णि वचांस्युक्तः सीतां प्रांजलिरब्रवीत्,
'उत्तरं नोत्सहे वक्तुं दैवतं भवती मम. २३६
वाक्य म प्रतिरूपं[2] तु न चित्रं स्त्रीषु मैथिलि !
विमुक्तधर्माश्चपलास्तीक्ष्णा भेदकराः[3] स्त्रियः २३७
वचो ज नककन्येऽहमीदृशं न सहे तव
श्रोत्रयोरुभयोर्मध्ये तप्तनाराच[4]संनिभम् २३८
धिक्त्वां य दद्य मामेवं नश्यंती[5] त्वं विशंकसे
गमिष्ये[6] यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने !' २३९
स दा रा नप्रजस्यार्तः प्रणम्य रचितांजलिः
बहुशोऽवेक्ष्य तां रामसमीपं सत्वरं ययौ. २४०
आश्र म स्थां तदा सीतामभिचक्राम रावणः
क्षिप्रभंतरमासाद्य परिव्राजकवेषधृक्. २४१
रक्षो ज वेनाससाद तां ताभ्यां रहितां वने
वियुक्तां चंद्रसूर्याभ्यां संध्यामिव महत्तमः. २४२
सभ य स्तत्क्षणे वातो निश्चलोऽभूद् द्रुम[7]व्रजः
स्तिमितं गंतुमारेभे गोदावर्यपि तद्भयात्. २४३

---

१. अनार्यया (अनुचितया) करुणया (रामव्यसनेऽपि मद्विषयया) आरंभो (मद्रक्षणारंभो) यस्य तत्संबोधनम्. २. न विद्यते प्रतिरूपं (साम्यं) यस्य तत्= अत्यंतमनुचितमित्यर्थः ३. भ्रातृषु कलहं जनयन्त्यः ४. बाणाः ५. आसन्ननाशा. ६. आत्मनेपदमार्षम्. * हस्तदोषः—क्ष. ७. वृक्षसमूहः.

तां राजकन्यां कामार्तः प्रशशंस दशाननः,
'मनो हरसि रूपेण नदीकूलमिवांभसा. २४४
सुवयस्ते विशालाक्षि ! श्रीर्वा त्वमथवा रतिः
अत्यद्भुतमिदं रूपं क्वापि दृष्टं नहीदृशम्. २४५
का त्वं श्यामे! वने सिंहव्याघ्रराक्षससेविते,
ब्रूह्यहं श्रोतुमिच्छामि नाम वृत्तं च देवि! ते.' २४६
पूज्यं मत्वाशिनं मत्वा भिक्षुमाश्रममागतम्
कथयामास वैदेही निजवृत्तमशेषतः. २४७
'मम श्रीमान् दशरथः श्वशुरो, जनकः पिता,
रामो दाशरथिर्भर्ता, वनवासो गुरोर्गिरा. २४८
न घोरारण्यवासो मे भयदः पत्युरोजसा
आगमिष्यति मे भर्ता वन्यमादाय पुष्कलम्. २४९
वस्तुमत्र त्वया शक्यं, गोत्रं नाम च किं तव
एकश्च दंडकारण्ये किमर्थं चरसि द्विज !' २५०
एवं जनककन्यायां ब्रुवत्यां स महाबलः
प्रत्युवाचोत्तरं तीव्रं रावणो राक्षसाधिपः. २५१
'लोका यस्मादिमे त्रस्ताः सदेवासुरमानुषाः
अहं स रावणो नाम सीते ! रक्षोगणेश्वरः. २५२
रुचिरा श्रीं सुवर्णां त्वां श्रुत्वा दृष्ट्वातिसुंदरीम्
रुचिं स्वकेषु दारेषु नाधिगच्छाम्यानिंदिते ! २५३
उत्तमस्त्रीसहस्राणामाहृतानामितस्ततः
सर्वासामेव, भद्रं ते, ममाग्रमहिषी भव. २५४
लंकाजलधिना सीते परिक्षिप्ता पुरी मम,
तस्यामुपवने साकं मया त्वं विचारिष्यसि. २५५
भार्या यदि त्वं भवसि मम सद्रत्नभूषिता:
दास्यः परिचारिष्यंति त्वां पंचाशच्छतान्ययि.' २५६

---

१. आर्षो नमागमः.

तं सा ज नकजोवाच, '[1]शार्दूलोत्वोर्यदंतरम्
यत्ताक्ष्यंकाकयो राज्ञस्तस्य ते च तदंतरम्. २५७

रक्षो य दंतरं लोके स्पष्टं सिंहसृगालयोः
तदंतरं राघवस्य तव च क्षुद्र ! किं त्वया ? २५८

स्थिते रा जीवनयने रामे नाथे धनुर्धरे
हृताप्यहं त्वया पाप ! गमिष्ये नैव ते वशम्.' २५९

इति म न्युमती सीता तमुक्त्वा रजनीचरम्
वेपमाना बभौ तन्वी प्रवाते कदलीव सा. २६०

दृष्ट्वा श्री जानकीं भीत्या वेपमानां दशाननः
स्वरूपं कालरूपाभं भेजे भृशभयंकरम्. २६१

दिक्शि रा विंशतिभुजो [2]नीलजीमूतसन्निभः
रक्तांबरधरः प्रेक्ष्य मैथिलीं रावणोऽब्रवीत्. २६२

'सीते ! म नोरथस्ते चेत्त्रिषु लोकेषु विश्रुतम्
मामाश्रय वरारोहे ! तवाहं सदृशः पतिः. २६३

आत्म ज स्तेन राज्ञा स स्वपदे स्थापितः प्रियः
मंदवीर्यस्ततो ज्येष्ठः सुतः प्रस्थापितो वनम्. २६४

तेना य ताक्षि ! किं राज्यच्युतेन गतचेतसा
करिष्यसि वरारोहे ! तापसेन वितेजसा ? २६५

निःस्वे रा मे पितृत्यक्ते तपस्विनि मितायुषि
कैर्गुणैरनुरक्तासि मूढे ! पंडितमानिनि ? २६६

त्यक्त्वा म हीं स्त्रीवचसा योऽस्मिन्वसति कानने
स्नेहः कस्तत्र दुर्बुद्धौ मयि भावोऽस्तु ते चिरम्.' २६७

एवं ज नकजामुक्त्वा स वामेन करेण ताम्
केशेषु दक्षिणेनोर्वोः परिजग्राह साहसी. २६८

आदा य सीतामंकेन रथमारोपयत्तदा,
प्राद्रवन्मृत्युसंकाशं तं दृष्ट्वा वनदेवताः. २६९

---

१. व्याघ्रमार्जारयोः. २. नीलमेघसदृशः.

परि ज ग्राह स यदा दारुणः प्रसभेन सा
अतिचुक्रोश, 'हा राम! हा रामे'ति भृशातुरा. २७०
आदा य तां विचेष्टंतीं पन्नगेंद्रवधूमिव
सकाम आश्रमात्तस्मादुत्पपात स तार्क्ष्यवत्. २७१
सीता रा क्षसराजेन ह्रियमाणा विहायसा
भृशं चुक्रोश मत्तेव, 'सौमित्रे! किं न पासि माम्? २७२
कथं म हाभुज त्वं मां ह्रियमाणां न रक्षसा
जानीषे तात! सौमित्रे! गुरुचित्तप्रसादक! २७३
कथं श्री मन् प्राप्तकालं शासनं न करोष्यरौ?
ननु नामाविनीतानां विनेतासि परंतप! २७४
पाप! रा क्षस! कर्मैतत्कुरुषे कालमोहितः
जीवितांतकरं घोरं रामाद्व्यसनमाप्नुहि. २७५
यः का म स्ते स कैकेयि! सिद्धोऽद्य सुखमाप्नुहि,
आमंत्रये जनस्थानं वंदे गोदावरीं नदीम्. २७६
देवा ज नस्थानगता ये मृगास्तरवोऽद्रयः
नमस्करोमि तेभ्यो[1]ऽद्य शरणं यामि तानहम्. २७७
रामा य शंसत क्षिप्रं दुरात्मा रावणो बलात
मामकामां हरत्येष व्याघ्रो बालमृगीमिव. २७८
मां त्व रा वान्महातेजाः परलोकगतां प्रभुः
आनेष्यति प्रियां भार्यां वैवस्वत[2]हृतामपि.' २७९
एवं [3]भ ह्रीजा करुणं विलपंती सुदुःखिता
वनस्पतिगतं गृध्रं दृष्ट्वोवाचायतेक्षणा. २८०
हं हो ज टायो! पश्यार्य! ह्रियमाणां बलेन माम्
वधूमनाथामिव ते रक्षसानेन पापिना. २८१
आर्या य मद्य नो शक्यः क्रूरो वारयितुं त्वया

---

१. तान अनुकूलयितुमित्यर्थः 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति पाणिनिसूत्रेण चतुर्थी. २. यमेन हृताम्. ३. सीता.

सत्त्ववान् जितकाशी[1] च सायुधश्चापि दुर्मतिः. २८२
सरो ज लोचनायेदं रामाय हरणं मम.
आख्यातव्यमशेषेण लक्ष्मणाय च धीमते.' २८३
महा य शाः स सुप्तोऽपि शुश्रुवेतां वधूगिरम्
ददर्श रावणं गृध्रो वैदेहीं च स्नुषां निजाम्. २८४
स तं रा त्रिंचराधीशं व्याजहार शुभां गिरम्,
'शृणु भ्रातर्दशग्रीव! जटायुर्नाम विश्रुतः २८५
अह म स्य वनस्येशो गृध्रराजः पुरातनः
सख्युर्दशरथस्येयं स्नुषा मम च धर्मतः. २८६
रामः श्री मान् सर्वलोकराजः सर्वहिते रतः
तस्यैषा दयिता साध्वी मुंचैनां मानयं कुरु. २८७
इमां रा क्षसराज! त्वं मयि भ्रातरि जीवति
न नयिष्यसि[2] रामस्य प्रियां गीतामलंक्रियाम्. २८८
कार्यं म या प्रियं सर्वं तस्यावश्यं महात्मनः
जीवितेनापि रामस्य तथा दशरथस्य च. २८९
अहं ज राग्रस्ततनुः शक्तिहीनश्चिरंतनः
षष्टिर्वर्षसहस्राणि जातस्य मम रावण ! २९०
त्वं व य स्यद्य मध्येऽसि रथी खड्गी शरासनी
तथापि कुशली सीतामादाय न गमिष्यसि.' २९१
इति रा क्षसराजः स श्रुत्वा क्रुद्धः खगेश्वरम्
अभिदुद्राव निःसीमः समरोऽभूत्तयोर्द्वयोः. २९२
सोऽस्य म र्षणमुग्रेषून् पक्षाभ्यां प्रविधूय तम्
रावणं विरथं चक्रे शक्रोऽवशनिभंगदम्. २९३
बभं ज कार्मुकं तस्य चरणाभ्यां खगेश्वरः
द्वितीयं च, नखैस्तस्य व्रणान् गात्रे चकार सः. २९४
तत्का य त्राणमपि च व्यधुनोद् गृध्रसत्तमः

१. जितेन जयेन काशते प्रकाशते सः. २. नयिष्यासि नेष्यासि. आर्ष इडागमः.

अंकेनादाय वैदेहीं पपात भुवि रावणः. २९५

अंड ज प्रवरं दृष्ट्वा जरया श्रांतमाशु सः
उत्पपात पुनर्हृष्टो मैथिलीं गृह्य राक्षसः. २९६

निधा य जानकीमंके खड्गशेषं दशाननम्
गच्छंतं स समुत्पत्य तमावार्याब्रवीद्रुषा. २९७

'तस्क रा चरितो मार्गो नैष वीरनिषेवितः
स्त्रीरत्नमेतद्धडिशं त्वं मीनो राक्षसाधम!' २९८

उक्त्वा म त्तं मनस्व्येवं तत्पृष्ठं विददार सः
अधिरूढो गजारोहो यथा स्याद्दुष्टवारणम्. २९९

पुनः श्री मान् स प्रहारान् दुःसहानकरोद्भृशम्
केशांश्चोत्पाटयामास नखपक्षमुखायुधः. ३००

गृध्र रा जेन स तदा क्लिश्यमानो मुहुर्मुहुः
अमर्षस्फुरितोष्ठः सन् प्राकंपत निशाचरः. ३०१

तां वा म तोंऽकेन तदा संपरिष्वज्य जानकीम्
तलेनाभिजघानार्तो जटायुं क्रोधमूर्च्छितः. ३०२

क्रुद्धो ज टायुस्तं तस्य प्रहारमविचिंतयन्
तुंडेन त्रोटयामास शत्रोर्वामभुजान् दश. ३०३

भुजा य क्षपतेर्भ्रातुः पूर्ववत्सहसाऽभवन्
विषज्वालावलीयुक्ता वल्मीकादिव पन्नगाः. ३०४

ततो रा क्षसलोकेशः सीतामुत्सृज्य वीर्यवान्
मुष्टिभ्यां चरणाभ्यां च गृध्रराजमपोथयत्. ३०५

संग्रा म स्तत्र स तयोर्मुहूर्तमतिवीर्ययोः
बभूव घोरो वयसां रक्षसामधिराजयोः. ३०६

यत्नं ज टायो रामार्थे कुर्वाणस्य दशाननः
पक्षौ पादौ च पार्श्वौ च खड्गमुद्धृत्य सोऽच्छिनत्. ३०७

आल य स्तुतिसत्कीर्तिपुण्यधर्मीनां स पक्षिराट्

---

१. मूलपाठः—**तक्षय.**

निपपात च्छिन्नपक्षो धरण्यामल्पजीवितः. ३०८

दृष्ट्वा ज टायुषं भूमौ रक्तार्द्रं पतितं द्रुतम्
अभ्यधावत वैदेही स्वबंधुमिव दुःखिता. ३०९

तं व य स्यं प्रियं राज्ञः श्वशुरस्यांडजेश्वरम्
सीता भुजाभ्यामालिंग्य रुरोद परया शुचा. ३१०

सा तां[2] रा पमुखी सीता विललापाकुलेंद्रिया,
'क्व रामलक्ष्मणौ वीरौ ? हा कष्टं दैव ! किं कृतम्. ३११

अयं म हात्मा कृपया त्रातुं मामिह संगतः
शेते विनिहतो भूमौ मम भाग्याद्विहंगमः.' ३१२

पुनः श्री दानुजः सीतां बंधूनिव महाद्रुमान्
परिष्वजंतीं जग्राह केशेष्वंतकसंनिभः ३१३

सच रा चरमुत्क्रांतमंधेन तमसा वृतम्
प्रधर्षितायां वैदेह्यां जगत्सर्वमभूत्तदा. ३१४

पिता म हः परामृष्टां दृष्ट्वा ज्ञानेन जानकीम्
'कृतं कार्य'मिति श्रीमान् व्याजहार भविष्यवित्. ३१५

ये द्वि ज प्रवराः सर्वे दंडकारण्यवासिनः
प्रधर्षितायां सीतायां आसन् खिन्नाश्च हर्षिताः. ३१६

आदा य रामरामेति रुदतीं लक्ष्मणेति ताम्
जगामाकाशमाविश्य राहुश्चंद्रप्रभामिव. ३१७

नूपु रा ख्यं मणिमयं भ्रष्टं तच्चरणांबुजात्
पपात भूषणं भूमौ विद्युन्मंडलसंनिभम्. ३१८

दृष्ट्वा म हीधरे पंच वानरान् जनकात्मजा
तन्मध्ये सोत्तरीयाणि भूषणानि मुमोच सा. ३१९

ते तां ज नकजां देवीं विक्रोशंतीं प्लवंगमाः
नेत्रैरनिमिषैर्व्योम्नि ददृशुः पिंगलोचनाः. ३२०

विहा य सा गृहीत्वा तामंकेन भुजगीमिव

---

१. अत्र तुगागमः प्रथमं लिखितोऽपि हरितालेनापसारितः. २. चंद्रमुखी.

पंपां सिंधुमतिक्रम्य प्रविवेश निजां पुरीम्. ३२१
तां रा ज पुर्य्यां निदधे रावणोऽतःपुरे निजे
रक्षार्थं स्थापयामास राक्षसीर्घोरदर्शनाः. ३२२
निधा य स्वालये सीतां रावणोऽष्टौ निशाचरान्
ज्ञातुं प्रवृत्तिं रामस्य प्रेषयामास संमतान्. ३२३
स स्म रा तैः पुनः सीतां प्रलोभयितुमात्मनः
प्रासादान् दर्शयामास मणिकांचननिर्मितान्. ३२४
नाना म णिमयान् भावान्महार्हानन्यदुर्लभान्
वापीश्च मणिसोपानाः सहस्राणि स्वयोषिताम्. ३२५
ततः श्री दानुजः[1] सीतामुवाच, 'शृणु सुंदरि?
द्वात्रिंशत्कोटिसंख्या मे राक्षसाः संति संमताः. ३२६
किंक रा स्ते विना वृद्धैर्बालैस्तेषां तु शोभने!
सहस्रमेकमेकस्य मम कार्यपुरःसरम्. ३२७
इदं म द्राज्यतंत्रं यत्त्वयि सर्वं प्रतिष्ठितम्
जीवितं च विशालाक्षि! त्वं मेऽसुभ्यो गरीयसी. ३२८
मां भ ज स्व त्यजाशंकां मम भार्या भव प्रिये
किं करिष्यसि रामेण मानुषेणाल्पतेजसा? ३२९
पीड य त्यसितापांगि! कामो मां भृशदारुणः!
प्रसादं[2] कुरु मे क्षिप्रं वश्यो दासोऽहमस्मि ते ३३०
न सु रा सुरसंघैर्मे शक्या धर्षयितुं पुरी
परिक्षिप्ता समुद्रेण लंकेयं शतयोजनम्. ३३१
बद्धुं म हाजवः पाशैर्न शक्यो वायुरंबरे
तथाहं विक्रमैरन्यैः सत्यं विद्धि वचो मम.' ३३२
एवं ज ल्पंतमल्पं तमुवाच जनकात्मजा
मा पाप! व्यापदं प्राप्तुं मां कुलामय! कामय. ३३३
त्वां प्र य त्नं विना रामो लक्ष्मणश्च महाबलः

---

१. रावणः. २. 'साधु किं तेऽन्यथाबुद्ध्या रोचयस्व वचो मम'–इति मूलपाठः.

हनिष्यत्यचिरात्पुत्रैर्भ्रातृभिः सचिवैः सह. ३३४

महा ज वैर्नवैर्बाणैः प्राणैस्त्वां रहितं रणे
कर्तुं समर्थो मे भर्ता स्मर्तासि वचनं तदा. ३३५

अन य ज्ञ! जड! त्वां धिक्परस्त्रीसंगलालसम्
कालसंकाशमस्त्रं मे पत्युर्जातु न सालसम्. ३३६

अध्व रा भ्यर्चिता वेदिर्यथा स्रुग्भांडमंडिता
मंत्रपूता न शक्या सा चांडालेनावमर्दितुम्, ३३७

अध म! स्प्रष्टुमुचिता तथा नाहं खलु त्वया
नेदं रक्ष्यं जीवितं मे बधान च्छिंधि वा वपुः.' ३३८

क्रुद्धः श्री मांस्तामुवाच, 'मासान् द्वादश जानकि!
प्रतीक्ष्येऽनेन कालेन यदि नाभ्येषि मां ततः ३३९

प्रात रा शाय सूदास्त्वां स्पष्टं छेत्स्यंति लेशशः.'
इत्युक्त्वा राक्षसीर्घोरा उवाच दशकंधरः. ३४०

दर्प म स्या निशाचर्यो! हरध्वं क्रव्यभोजनाः
अशोकवनिकामध्ये नीयतां घोरदर्शनाः. ३४१

गूढं ज नकजा तत्र रक्ष्यतां सांत्वतर्जनैः
आनयध्वं वशं सर्वा वन्यां गजवधूमिव.' ३४२

इति य त्ताः समादिष्टास्तश्चक्रुरतिदारुणाः
अशोकवनिकां जग्मुः परिगृह्याशु जानकीम्. ३४३

सुघो रा णां राक्षसीनां व्याघ्रीणां हरिणीव सा
जानकी वशमापन्ना शर्म लेभे न किंचन. ३४४

रामो म नसि तं शब्दं मारीचस्य स्मरन् द्रुतम्
निवृत्तः पृष्ठतः श्रुत्वा गोमायोर्भैरवं रवम्. ३४५

तूर्णं ज गाम रामः स्वं मैथिलीं द्रष्टुमाश्रमम्
'हंत! घोराणि दृश्यंते निमित्तानी'ति चिंतयन्. ३४६

हृद य स्वास्थ्यमलभन्नागच्छंस्तूर्णमध्वनि
दूरादनुजमायांतं दृष्ट्वाभूदतिशंकितः. ३४७

अनु ज स्य मुखं दृष्ट्वा परिम्लानं गतप्रभम्
मिलित्वा तेन तं रामः पप्रच्छागतिकारणम्. ३४८

'विहा य सीतां विपिने घोरे राक्षससेविते
कथं वत्सागतोऽसि त्वं ? कृतं गर्ह्यमिदं त्वया. ३४९

वीर ! रा त्रिंचरैः सीतापहृता भक्षिताथवा
नास्त्यत्र संशयश्चक्षुः स्फुरते वाममद्य मे. ३५०

अपि म ध्ये वनं वीर ! त्वया त्यक्तां पुनः प्रियाम्
प्राप्स्यामि जानकीं ब्रूहि कुतस्त्यक्त्वा त्वमागतः ? ३५१

इति श्री मन्तमापृष्टः सौमित्रिः खिन्नमानसः
कथयामास तत्सर्वं यदुक्तं परुषं तया. ३५२

श्रुत्वा रा जीवनयनो वदन् 'हाहे'ति सत्वरः
भ्रात्रा सहाश्रमं गत्वा नापश्यत्तत्र मैथिलीम्. ३५३

'नात्र म द्दयिता सीता, क्व स्थिता सा गते त्वयि ?
गोदावरीं नु यातासौ विचेतुं कुसुमानि वा. ३५४

उट ज स्तु तया शून्यो निपुणं पश्य लक्ष्मण !'
इति प्रियतमां रामो विचिकाय समंततः. ३५५

'निली य नूनं नर्माद्य करोति कमलेक्षणा
सीते ! दृष्टासि दृष्टासि कौशेयेनासि सूचिता.' ३५६

रामो रा मां विचेतुं तां प्रेषयामास लक्ष्मणम्,
दृष्टानपि वनोद्देशान्स्वयमप्यसकृद्ययौ. ३५७

तां द्रु म क्ष्माभृदेणेभान् पप्रच्छ प्राणवल्लभाम्
प्राणिनो रोदयामास 'हा ! सीते'ति रुदन् स्वयम्. ३५८

गृध्रं ज टायुषं रामः कुर्वन्नन्वेषणं वने
अपश्यत् पतितं पृथ्व्यां परं प्रेम्णः पदं पितुः. ३५९

उष्णा य तं स निश्वस्य नवीभूतपितृव्यथः

---

१. आत्मनेपदमार्षम्. २. त्वदीयं कौशेयं दृष्ट्वा त्वमत्रैव निलीय स्थितेति सूच्यते इति रामस्य भ्रान्तवचनामिदम्.

'कुतस्तात ! दशेयं त' इति पप्रच्छ तं रुदन्. ३६०

'सरो ज नेत्रवैदेहीं हरतो रावणा'दिति
उक्त्वा प्राणान् जहौ पक्षी रामास्यन्यस्तलोचनः. ३६१

चक्रे य थावत्तस्यासौ सर्वामप्युत्तरक्रियाम्,
पितुः सख्युर्महाशोके तां विस्मृत्य मनःप्रियाम्. ३६२

'गृध्र रा ज्यं परित्यज्य मत्कृतेऽयं खगो मृतः
यथा दशरथः पूज्यस्तथैष मम लक्ष्मण !' ३६३

एवं म हामनाः प्राह गृध्राय गतिमुत्तमाम्
स्वयं ददौ तदौदार्यं कोऽस्ति वक्तुं कविः क्षमः. ३६४

ततः श्री मान्स सौमित्रिः क्रौंचारण्यं घनप्रभम्
दिदृक्षमाणो वैदेहीं जगामासिधनुर्धरः. ३६५

तौ वी रा वतिवीर्याढ्यौ सीताहरणदुःखितौ
मतंगस्याश्रमं प्राप्तौ गिरौ दृष्ट्वा महादरीम्. ३६६

तस्या म हाकंदराया अदूरे विकृताकृतिम्
राक्षसीं तौ ददृशतुर्भक्षयंतीं मृगान् बहून्. ३६७

वने ज प्राह सौमित्रिं रंतुं राक्षस्ययोमुखी.
कर्णौ नासां स्तनौ तस्याः स चिच्छेद महासिना. ३६८

अत्या य तभुजो भीमः कबंधो नाम राक्षसः
जग्राहात्तु हरिव्याघ्रद्विपाशो रामलक्ष्मणौ. ३६९

तौ व रा भ्यां कृपाणाभ्यां तद्भुजौ योजनायतौ
छित्वा मुक्तौ प्रभू तस्मात् ज्ञानिभक्तौ भवादिव. ३७०

स स म र्थावपृच्छत्तौ कबंधः, 'कौ युवां वने ?
कार्यं किं वामि'ति तदा सर्वं सौमित्रिरब्रवीत्. ३७१

पृष्टो ज गाद तौ सोऽपि ज्ञात्वा शापान्तमात्मनः,
'दानवोऽहं दनुर्नाम्ना सुरूपो रामलक्ष्मणौ ! ३७२

यक्ष य प्रदरूपेण मुनिभ्यस्त्रासदोऽभवम्,
शप्तोऽहं स्थूलशिरसा युवाभ्यामद्य तारितः. ३७३

कृतो ज यंतपिन्नाहमेवं वज्रप्रहारतः
दाहोत्तरं करिष्यामि युवयोः कार्यमीप्सितम्.' ३७४

तेन य त्प्रार्थितं वीरौ तद्दाहाच्चक्रतुः प्रियम्
दिव्यं रूपं विमानं च प्राप्य तौ दनुरब्रवीत्. ३७५

'वान रा राम! वर्तंते पंच सुग्रीवनायकाः
ऋष्यमूके गिरौ रम्ये पंपापर्यंतशोभिते. ३७६

अर्य म प्रभवः साधुः सुग्रीवस्तेन राघव!
सख्यं कुरु त्वं दृष्ट्वा तां श्रमणीं शबरीं पथि. ३७७

दनुं श्री मान् रघूत्तंसः प्रेषयित्वा दिवं स्वयम्,
ययौ पथा तदुक्तेन शबर्या रम्यमाश्रमम्. ३७८

सा प रा मभ्युपगता मुदं सिद्धर्षिसंमता
वन्येन पूजयामास भक्त्या रामं सलक्ष्मणम्. ३७९

ताभ्यां म तंगतच्छिष्यप्रभावं परमाद्भुतम्
कथयामास शबरी कबरी या तपःश्रियः. ३८०

'यदा ज गत्पते! राम! चित्रकूटं त्वमागतः
तदा गता ममाचार्या ब्रह्मलोकं महर्षयः. ३८१

ते मां य दब्रुवन् रामं संपूज्यातिथिमाश्रमे
आगच्छ ब्रह्मलोकं त्वमिति संपन्नमद्य तत्. ३८२

शरी रा ज्याहुतिं हुत्वा हुताशेऽहं प्रहर्षिता
ब्रह्मलोकं गमिष्यामि त्वयाज्ञप्ता रघूत्तम!' ३८३

इति म ह्यात्मजाकांत उक्तस्तामाह, 'सन्मते!
शबरि! ब्रह्मलोकं त्वं गच्छ श्रेयोऽस्तु जन्म ते.' ३८४

नत्वा ज लधरश्यामं रामं सा मंजुभाषिणी
पंपावर्त्मोपदिश्याग्नौ जुहावात्मानमुत्तमा. ३८५

अहा य शबरी दिव्यं रूपं लब्ध्वा हुताशनात्
निर्गत्य व्योमयानेन ब्रह्मलोकं जगाम सा. ३८६

---

१. अर्यम्णः प्रभवः यस्य सः सूर्यपुत्रः सुग्रीवः.

वीरौ जग्मतुरध्वानं तदुक्तमनुसृत्य तौ
तां रम्यां सरसीं पंपां शंपांचितधनुर्लतौ. ३८७
पानीयवाहिनीं पंपां प्राप्तौ नानाद्रुमैर्वृताम्
सखीभिरिव वल्लीभिर्वेष्टितां पंकजैश्रिताम्. ३८८
उदारामलिभिर्गीतां मुदा रामः सलक्ष्मणः
पंपां प्राप्य वियोगार्तो विललाप स्मरन् प्रियाम्. ३८९
दृष्ट्वा मयूरान् हंसांश्च सारसान् कोकिलान् शुकान्
पंपायास्तीरमासाद्य 'साध्य के'त्याह लक्ष्मणम्. ३९०

इति श्रीमंत्ररामायणे श्रीरामनंदनमयूरविरचितेऽरण्यकांडे त्रिंशत्तमो मंत्रः.

---

## किष्किंधाकांडम्

तां पंपां श्रीमतीं प्राप्य स्मृत्वा सीतां रघूत्तमः
विललाप भृशं, कांतावियुक्तः को न विह्वलः? १
'पश्य वीरात्र सुखिनः कांतान् कांतान्वितान् खगान्
दुःखास्पदमहं सा च वसंतेऽद्य मम प्रिया. २
धन्याः स्म य एतस्मिन्ये ये कांताभिरन्विताः
तन्वि! तारयितुं त्वाहं नालं, मे कैव धन्विता? ३
वसंते जनितानंदे स्त्रीमतां श्रीमतां सताम्
न तां लभेऽहं[२] यां प्राप्तो मुदं प्राणभृतां मताम्. ४
सा मे प्रियतमा सीता मरिष्यति मया विना
अहं च तामृते, वत्स! त्वं साधुं भरतं व्रज. ५
न हि तां राजतनयां सुकेशीं मृदुभाषिणीम्
अपश्यतो मे सौमित्रे! जीवितेऽस्ति प्रयोजनम्, ६
अयं हि मदिराक्ष्या मे वसंतोऽत्यंतमीप्सितः

---

१. शंपया विद्युता अंचिते पूजिते धनुर्लते ययोस्तौ. २. धनिकैः सस्त्रीकैः वसन्तमासे य आनंदो लभ्यते तमानंदं न लभे. स्त्रीसहितोऽपि संप्रति विनष्टस्त्रीकत्वात् आनन्दभाङ् न भवामीत्यर्थः.

नूनं परवशा सीता सापि शोचत्यहं यथा. ७

वक्ष्यामि ज ननीं किं नु स्नुषा मे केति वादिनीम्

पृष्टसीतं च जनकं गुरुं दुहितृवत्सलम्. ८

अथवाऽ य शसा स्पृष्टमात्मानं त्यजतो मम

केयं चिंता वृथा वत्स! मामनुज्ञातुमर्हसि.' ९

इत्यग्र ज मतीवार्तं विलपंतमनाथवत्

तं सौमित्रिरुवा 'चार्य! न त्वं शोचितुमर्हसि. १०

त्यज प्रि य जने शोकं स्मृत्वा दुःखं वियोगजम्

अतिस्नेह[1]परिष्वंगाद्वर्तिरार्द्रापि दह्यते. ११

सर्वथा रा वणस्तात! न भविष्यति पापकृत्

यदि गच्छति पातालं ततोऽभ्यधिकमेव वा. १२

प्रवृत्तौ म नुजाधीश! लब्धायां तस्य सर्वथा

भविता कृतकार्यस्त्वं वधिष्या[2]म्यहमेव तम्. १३

उत्साहः श्री मता कार्य आर्य! मा[3]र्यसवोऽक्षयाः

महात्मानं कृतात्मानमात्मानं किं न बुध्यसे? १४

धीरा वी रा महात्मानो नैवं कुर्वंति गर्हितम्

चोरस्य तस्य काहंता हंताहं तात! तं रणे.' १५

रामः सा म पटोर्भ्रातुर्गिरा प्राप्य पुनर्धृतिम्

पंपातोयं सुधाधारासंपातोऽयं सतां पपौ. १६

पंपातो ज ग्मतुर्वीरावृष्यमूकं महागिरिम्

तौ दृष्ट्वैव वितत्रास सुग्रीवः कपिकुंजरः. १७

आंजने य स्ततस्तेन प्रेषितो राघवांतिकम्

नत्वा तापसवेषेण तावुवाच विचक्षणः, १८

'महाप रा क्रमौ देवप्रतिमौ तापसव्रतौ

देशं कथमिमं प्राप्तौ त्रासयंतौ वनौकसः? १९

---

१. स्नेहस्तैलं प्रेमा च. २. अयमपर एवादन्तो 'वध' इति धातुः ३. अरेः असवः

कौ युवां म[1] हिमावासौ द्युतिमंतौ धनुर्धरौ
यदृच्छयेव संप्राप्तौ चंद्रसूर्यौ वसुंधराम्. २०
कीशरा ज स्तीक्ष्णदंडो वाली, तेन निराकृतः
सुग्रीवो नाम तद्भ्राता जगद्भ्रमति दुःखितः. २१
तेनाहं य[2] क्षपेंद्राभौ प्रेषितः पवनात्मजः
भिक्षुरूपप्रतिच्छन्नो हनूमान्नाम वानरः. २२
सोऽद्य ते ज स्विवर्याभ्यां युवाभ्यां सख्यमिच्छति
कामरूपः कामचारी तस्याहं सचिवः प्रियः.' २३
कौसल्ये य स्तु तच्छ्रुत्वा, स्तुत्वा तं, प्राह लक्ष्मणम्
'वत्सायं पंडितः, शक्यं वक्तुं नैवेदृगन्यथा.' २४
तं वान रा धिपस्याप्तं सचिवं प्राह लक्ष्मणः
'विदिता नो गुणा विद्वन्! सुग्रीवस्य महात्मनः. २५
तमेव म तिमन्तावां मार्गावः प्लवगेश्वरम्
करिष्यावः प्रियं तस्य वचनात्तव सत्तम!' २६
पप्रच्छ श्री मतो वृत्तं रामस्य पवनात्मजः
सौमित्रिः कथयामास, 'ख्यातो दशरथः प्रभुः २७
तस्यायं रा जासिंहस्य ज्येष्ठः पुत्रो महाबळः
रामो नाम वनं प्राप्तस्तद्गिरा तापसव्रतः. २८
भ्राताह म स्य नाथस्य लक्ष्मणो नाम किंकरः
भार्या रामस्य दयिता सीता नाम जनैः श्रुता २९
तनया ज नकस्यार्या गोदावर्यास्तटे वने
आवाभ्यां रहिते काले रक्षसापहृता तु सा. ३०
न तज्ज्ञा य त उद्वृत्तं रक्षो विद्वन्! विशेषतः
दनुर्नाम दितेः पुत्रः शापाद्राक्षसतां गतः. ३१
तेनायं रा क्षसं पापं क्रूरं सीतापहारिणम्

---

१. महिम्नः आवासौ महिमशालिनौ इत्यर्थः २. यक्षपेंद्रयोरिवाभा ययोस्तौ, तत्संबुद्धौ.

ज्ञास्यतीति समाख्यातः सुग्रीवो भजता दिवम्. ३२
एतद्भो! म तिमन्! सर्वमाख्यातं पृच्छतस्तव
अहं चायं रघूत्तंसः सुग्रीवं शरणं गतौ. ३३
महारा ज सुते रामे शरण्ये शरणागते
यूथपैः सह सुग्रीवः प्रसादं कर्तुमर्हति.' ३४
आंजने य उवा 'चाहो! ईदृशाः सद्गुणार्णवाः
द्रष्टव्या वानरेंद्रेण दिष्ट्या दर्शनमागताः. ३५
स ह्यग्र ज निरस्तोऽत्र हृतदारो रवेः सुतः
सुग्रीवो वर्तते वीरौ! साहाय्यं वां करिष्यति. ३६
तस्माद्व य ज्ञं तं साधु गच्छामः प्लवगेश्वरम्.'
इति श्रुत्वा तथेत्येवमूचतू रामलक्ष्मणौ. ३७
ततः स रा मं सौमित्रिं पृष्ठमारोप्य मारुतिः
तौ सुग्रीवायाचचक्षे तद्वृत्तं च यथाश्रुतम्. ३८
सुग्रीवो म नुजेंद्रस्य सुतौ दशरथस्य तौ
दृष्ट्वा प्रीतोऽभवज्ज्ञात्वा स्त्रीहेतोः शरणागतौ. ३९
सुग्रीवः श्री मतामाद्यं प्रीत्योवाच रघूत्तमम्,
'भवान् धर्मविनीतश्च सुतपाः सर्ववत्सलः. ४०
आख्याता रा जसुत! मे त्वद्गुणा वातसूनुना,
तन्ममैवैष सत्कारो लाभश्चैवोत्तमः प्रभो! ४१
यत्त्वं का म यसे सख्यं वानरेण मया सह
रोचते यदि सौहार्दं बाहुरेष प्रसारितः. ४२
नवीन ज लदश्याम राम कामशतोत्तम!
गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा.' ४३
एतत्प्रि य वचः श्रुत्वा सुग्रीवस्य सुभाषितम्,
संप्रहृष्टमना हस्तं पीडयामास पाणिना. ४४
तं वान रा णामधिपं पर्यष्वजत पीडितम्
रामः सौहृदमालंब्य हर्षयामास हर्षितः. ४५

पावकं म थनोद्भूतं चक्रतुस्तौ प्रदक्षिणम्
सखायौ रामसुग्रीवौ मलयाद्रौ बभूवतुः. ४६

तौ नाभि ज ग्मतुस्तृप्तिमन्योन्यं वीक्ष्य सन्मती
रामः प्राह, 'सखा मे त्वमेकं दुःखं सुखं च नौ.' ४७

स रामा य ददौ शाखां भङ्क्त्वा सालस्य पुष्पिताम्
लक्ष्मणाय मरुत्पुत्रश्चंदनस्य मनोरमाम्. ४८

तस्यां रा ज सुतो रामः सुग्रीवश्च महामनाः
निषसाद महाभागो लक्ष्मणश्चारुलक्षणः. ४९

रामं व य स्यः सुग्रीव उवाच, 'रघुनंदन!
वालिनो मे महाबाहो! भयार्तस्याभयं कुरु.' ५०

तमाह रा घवो मित्रमुपकारफलं, 'सखे!
वानरेंद्रं वधिष्यामि तव दारापहारिणम्.' ५१

सोऽपि रा म मुवा'चाहमानयिष्यामि जानकीम्,
अनुजानातु जानामि मैथिली सा न संशयः. ५२

रक्षसा श्री मती व्योम्नि ह्रियमाणा बलीयसा
दृष्टा सा राम रामेति क्रोशंती लक्ष्मणेति च. ५३

सा वान रा णामस्माकं मध्ये राम! मुमोच यत्
उत्तरीयं सभूषं तद्दर्शयिष्यामि तेऽनघ!' ५४

रामस्त म ब्रवीत्तूर्णं, 'सखे! तद्दर्शयाद्य मे
आनयोत्तिष्ठ सुग्रीव! किमर्थं प्रविलम्बसे?' ५५

कपिरा ज स्तस्य गिरेर्गुहां तूर्णं प्रविश्य तत्
आनीय दर्शयामास सांबरं रत्नभूषणम्. ५६

उत्तरी य मथालोक्य रामस्तद्भूषणानि च
'हा प्रिये! जानकी' त्युक्त्वा प्ररुदन्नपतत्क्षितौ. ५७

अलंका रा नुत्तरीयं हृदि कृत्वा रुदन् बहु
उवाच लक्ष्मणं, 'पश्य प्रियाया भूषणानि मे.' ५८

स वाक्य म ब्रवी, 'जाने न केयूरे न कुंडले

नूपुरे त्वभिजानामि नित्यं पादाभिवंदनात्.' ५९
कपिराज मथापृच्छद्रक्षसा निजमृत्यवे
'कं देशं मे प्रिया सीता नीता जानासि चेद्वद, ६०
नयामि य मलोकं तं सह सर्वैर्निशाचरैः.'
इति श्रुत्वा प्रभोर्वाक्यमुवाच कपिनायकः ६१
'न जाने ज गतां नाथ तस्य देशं कुलं बलम्
सत्यं तु प्रतिजानामि त्यज शोकमरिंदम! ६२
अहं प्र य त्नं राजेंद्र! करिष्याम्यचिरात्तथा
यथा त्वं मुदिरश्याम राम! प्राप्स्यसि मैथिलीम्. ६३
मयापि रा घव! प्राप्तं व्यसनं स्त्रीवियोगजम्
परंतु नैवं शोचामि प्राकृतो वानरोऽपि सन्.' ६४
इति प्रे म वतः श्रुत्वा हितं वाक्यं रघूद्वहः
संपरिष्वज्य बाहुभ्यां सखायमिदमब्रवीत्. ६५
'यत्तव श्री मतः कार्यं प्रथमं तत्करोम्यहम्
त्वं प्रयत्नं कुरु सखे! सीतायाः परिमार्गणे. ६६
कथं वै रा भिरुद्भूतः सुग्रीव! हृदि वालिनः?
तत्त्वं कथय तत्त्वेन करिष्ये प्रियमेव ते. ६७
हृदि मे म न्युरुद्भूतः श्रुत्वा त्वामवमानितम्
जानीहीषुर्मया सृष्टो निरस्तश्च रिपुस्तव.' ६८
कपिः प्रां ज लिरा, 'ह्यार्य! दुंदुभेः पूर्वजः सुतः
मायावी नाम तेजस्वी बलदृप्तो महासुरः ६९
स्त्रीकृते य दभूद्वैरं तेन राघव! वालिनः
तद्घोरमेकदा शत्रुः किष्किंधाद्वारमागतः ७०
आहूय रा त्रौ युद्धाय नर्दति स्म स कोपनः
सुप्तो वाली स्वनं श्रुत्वा क्रोधान्न ममृषे प्रभो! ७१
हंतुं त म सुरं वाली निःसृतोऽहं च राघव!
दृष्ट्वा मां वालिनं भीतः प्रदुद्रावाऽसुरस्तदा. ७२

विवरं ज गतां नाथ ! जगत्या जवनोऽहितः

प्रविवेश स मायावी मायावीर्यो रघूत्तम ! ७३

कौसल्ये य ! बिलद्वारि स्वपादशपथैः स्वयम्

स्थापयास मां वाली प्रविशंतं निवार्य सः. ७४

रघुरा ज ! ततस्तूर्णं प्रविवेश महाबलम्

तस्य तत्र प्रविष्टस्य साग्रः संवत्सरो गतः. ७५

नर्दतां य स्तदा तत्र दैत्यानां निनदोऽभवत्

स श्रोत्रमागतो मे नो वालिनः शौर्यशालिनः. ७६

रक्तपू रा द्बिलात्तस्मात्सफेनाद्राम ! निःसृतात्[1]

भ्रातुर्वधमहं मत्वा भृशं शोकाकुलोऽभवम्. ७७

बिलस्य म हतो द्वारं शिलया गिरिमात्रया

विधाय चोदकं कृत्वा किष्किंधामागतः सखे ! ७८

तद्वृत्तं श्री मतो ज्ञातं वालिनो मंत्रिभिः प्रभो !

ततोऽहं तैः समागम्य समेतैरभिषेचितः. ७९

न्यायेन रा ज्यं तत्तस्य मयि शासति राघव !

हत्वा तमसुरं वाली किष्किंधामागतो गुहाम्. ८०

काकुत्स्थ ! म त्वा मां शत्रुं राज्यकामं स साहसी

इयेष भक्तं प्रणतं हंतुं बध्वा स्वमंत्रिणः. ८१

मयाग्र ज इति क्षांतं समर्थेनापि निग्रहे

तदा निर्वासयामास वस्त्रेणैकेन मां कपिः. ८२

तस्माद्भ य मभूद्भूरि क्रांतवानखिलां महीम्

रामाहमपविद्धश्च हृतदारश्च वालिना. ८३

एतं दु रा धर्षमगं वालिनः कारणांतरे

प्रविष्टोऽस्मि महाराज ! वैरमेवमभून्महत्. ८४

उवाच म धुरा रामस्तं सुग्रीवं शुचाकुलम्

'आत्मानुमानात्पश्यामि मग्नस्त्वं शोकसागरे ८५

---

१. तस्माद्बिलान्निःसृतं सफेनं रक्तपूरं दृष्ट्वेत्यर्थः.

सुग्रीव ! ज हि शोकं मे शराः प्राणहरा रिपोः
त्वामहं तारयिष्यामि कामं प्राप्स्यसि पुष्कलम्.' ८६
प्राशाभ य उवाचाथो सुग्रीवो राघवं प्रभुम्
'वालिनः पौरुषं श्रुत्वा विधत्स्व यदनंतरम्. ८७
चतुरो ज लधीन् ब्राह्मे मुहूर्ते नित्यमुत्थितः
क्रामत्यनुदिते सूर्ये वाली व्यपगतक्लमः. ८८
गुरूण्य य ततः शैलशिखराणि स वीर्यवान्
ऊर्ध्वं कंदुकवत्क्षिप्त्वा प्रतिगृह्णाति राघव ! ८९
मनुष्य रा ज! महिषो दुंदुभिर्नाम दारुणः
'मम युद्धं प्रयच्छे'ति स उवाच महार्णवम्. ९०
नाहं स म र्थः; श्वशुरः शंकरस्य हिमाचलः
तं याहीत्यब्रवीद्राम! सागरो वरदर्पितम्. ९१
श्वशुरः श्री[1] गलस्यापि गजेंद्रप्रतिमाः शिलाः
क्षिपंतं बहु गर्जंतं प्रादुर्भूयाब्रवीदिदम्. ९२
यो वान रा णामधिपो वाली शक्रात्मजो बली
प्रदास्यति स ते युद्धं न त्वं मां क्लेष्टुमर्हसि. ९३
किष्किंधां म हिषः प्राप्य रुद्ध्वा द्वारं मदोद्धतः
ननर्द कंपयन् भूमिं दुंदुभिर्दुंदुभिर्यथा. ९४
खुरैः स ज गर्तीं मत्तो दारयामास भूरुहान्
भंजन् द्वारं विषाणाभ्यामालिखन् करिराडिव. ९५
तं लुलो[2] य मर्दि वाली निष्क्रम्यांतःपुराद्रुषा
उवाच, 'दुंदुभे! प्राणान् रक्ष त्वं विदितोऽसि मे.' ९६
'कपे! गि रा किमनया स्त्रीणामंतिक उक्तया ?
मम युद्धं प्रयच्छाद्य ततो ज्ञास्यामि ते बलम्.' ९७
श्रुत्वैवं म हिषप्रोक्तं वालिना हेममालिना

---

१. श्रीः (शोभा) गले (कंठे) यस्य सः श्रीगलः = श्रीकण्ठः शिवः, श्वेतस्य कृष्णसन्निकर्षे शोभाधिक्यात् तत्त्वम्. २. माहिषम्.

निहतो लीलया क्षिप्तो वेगेनैकेन योजनम्. ८९

राजरा ज! तमाविध्य गजायुतबलं खलम्
गृहीत्वा शृंगयोर्दूरं चिक्षेप कपिकेसरी. ९९

ये लुला य स्य वदनादुद्गता रक्तबिंदवः
प्रपेतुस्तेऽनिलोत्क्षिप्ता मतंगस्याश्रमे शुचौ. १००

मुनिरा ज स्त्वतिक्रुद्धः शप्तवान् वालिनं प्रभो!
तेनात्र न प्रवेष्टव्यं प्रविष्टस्य वधो भवेत्. १०१

वालिनो य इह स्थाने केचित्स्थास्यंति वानराः
बहुवर्षाणि शैलत्वं तेषामपि भविष्यति. १०२

तं वान रा णां वदनात् शापं श्रुत्वा कपीश्वरः
ऋष्यमूकमिमं द्रष्टुमपि राम! बिभेत्यलम्. १०३

अतोऽह म त्र तिष्ठामि द्विषोऽपगतसाध्वसः
गिरिकूटनिभः[1] शुष्कः कायस्तस्यैष दृश्यते. १०४

इमे च श्री मतः शालाः सप्त शाखावलंबिनः
यत्रैकं घटते वाली निष्पत्रयितुमोजसा. १०५

एतद्धि रा म! तद्वीर्यं मया सर्वं प्रकाशितम्,
कथं तं वालिनं हंतुं समरे शक्ष्यसे नृप!' १०६

सुग्रीव म थ तच्छ्रुत्वा प्रहसंल्लक्ष्मणोऽब्रवीत्,[2]
'कस्मिन्कर्मणि निर्वृत्ते श्रद्दध्या वालिनो वधम्?' १०७

कपि रा ज उवा, 'चांग! सप्त शालानिमान् पुरा
एवमेकैकशो वाली पीडयामास चासकृत्. १०८

एषाम य मगं राम! एकमेकेषुणा यदि
विदारयेद्भवतं मन्ये वालिनं शक्तिशालिनम्. १०९

यत्कासं[3] रा सुरस्यास्थि पादेनैकेन लक्ष्मण!
उद्यम्य प्रक्षिपेच्चापि तरसा द्वे धनुःशते.' ११०

---

१. पर्वतशृंगतुल्यः २. हस्तदोषः–प्रहसल्लक्ष्मणो. ३. के (जले) आसरतीति कासरः महिषः; जले शयनं स्वभावत एव महिषेभ्यो रोचते.

उवाच मधुरं रामः, 'प्रत्ययो मे न विक्रमे
तर्हि तं समरे श्लाघ्यमद्दमुत्पादयामि ते.' १११
उक्त्वैवं जगदीशस्तं दुंदुभेः कायपंजरम्
पादांगुष्ठेन चिक्षेप लीलया दशयोजनम्. ११२
'आर्द्रः काय स्तदा शुष्क इदानीं तेन राघव!
नात्र शक्यं बलं ज्ञातुमि'ति कीशाधिपोऽब्रवीत्. ११३
तच्छ्रुत्वां जगतां नाथः शालानुद्दिश्य सायकम्
मुमोचाशु स तान् सप्त भित्वा भूमिं च दुर्धरः ११४
पाताले यमसात्कृत्वा दानवान् शरधिं पुनः
प्रविवेश मुहूर्तेन तद्दृष्ट्वा विस्मितः कपिः ११५
प्रणम्य राघवायाह, 'सेंद्रानपि सुरान् शरैः
समर्थस्त्वं रणे हंतुं किं पुनर्वालिनं प्रभो! ११६
अरिं तमद्यैव रणे मत्प्रियार्थं महाभुज!
जहि दाशरथे! तुभ्यं मया बद्धोऽयमंजलिः.' ११७
तं रामः श्रीपतिः प्रेम्णा परिष्वज्याब्रवी, 'त्सखे!
इतो गच्छाम किष्किंधां क्षिप्रं गच्छ त्वमग्रतः. ११८
गत्वा चारादराति तमाहूय भ्रातृगंधिनम्[1]
त्वया समागतं पापं हंता[2]शु मम मार्गणः.' ११९
तथेति मद्दृदास्थाय धैर्यं कीशो गतोऽग्रतः
वृक्षैरात्मानमावृत्य रामोऽतिष्ठन्महावने. १२०
सुग्रीवो जनितोत्साहो बद्ध्वा परिकरं दृढम्
वेगेन व्यनदद्धोरं कोपादाहूय वालिनम्. १२१
समराय समाहूतः क्रोधांधो वानरेश्वरः
निष्पपात सुसंरब्धो भास्करोऽस्ततटादिव. १२२
ततः पराक्रमवतोस्तयोर्भ्रात्रोः सरोषयोः

---

१. गन्धः संबन्धः. भ्रातृत्वमात्रेण संबंधी, न तु दानमानादिनेति भावः. "गंधो गंधक आमोदे लेशे संबंधगर्वयोरिति" विश्वः. २. हनिष्यति.

रणोऽभवत्सुतुमुलो बुधांगारकयोरिव. १२३

दृष्ट्वा स म स्वरूपौ तावुभौ देवाविवाश्विनौ
नावगच्छत्सुकंठं तं वालिनं वापि राघवः. १२४

ततो नि ज मिषुं मोक्तुं बुद्धिं चक्रे न राघवः
भग्नः सुकंठोऽजानानो नाथं शैलं प्रदुद्रवे. १२५

प्राप्तोऽभ य मभिप्रेक्ष्य ऋष्यमूकमगं ततः
'मुक्तो ह्यसि त्वमि' त्युक्त्वा परावृत्तः कपीश्वरः. १२६

सहानु ज स्तमागच्छद्राघवोऽमुमुवाच सः
आह्वयस्वेति मामुक्त्वा 'किमिदानीं त्वया कृतम्?'

रामो व य स्यं प्लवगं तमुवाचाभिसांत्वयन्,
'श्रूयतां कारणं तात! क्रोधश्च व्यपनीयताम्. १२८

परस्प रा भिन्नरूपस्वरविक्रमवेगयोः
सादृश्यातिशयाद्भ्रात्रोर्व्यक्तिर्वां नोपलक्षिता. १२९

प्लवंग म पते!ऽत्यंतं सादृश्यान्मोहितेन वाम्
त्वद्घातशंकितेनेषुर्न प्रक्षिप्तः सखे! मया. १३०

न त्वया श्री मता भूयो योद्धव्यं तेन वालिना
हंताहं तात! तं दृष्ट्वा त्वय्यभिज्ञानमुज्ज्वलम्.' १३१

उक्त्वैवं रा घवः प्राह, 'लक्ष्मणोत्तिष्ठ सत्वरम्
प्रफुल्लां नागपुष्पीं त्वं सख्युः कंठे स्वयं कुरु.' १३२

प्लवंग म स्तया कंठे कृतया लतया बभौ,
आकाशे शारदश्चंद्रो यथा नक्षत्रमालया. १३३

सुग्रीवो ज यकामस्तां किष्किंधां प्राप्य वालिनम्
आह्वयामास सहसा स्वपुरात्सोऽपि निर्गतः. १३४

वाली प्र य तयोत्सिक्तस्तारया श्रुतवृत्तया
निवारितोऽपि निरगादपुनर्गतये गृहात्. १३५

तं संग रा य प्रवृत्तं पुनर्वालिनमुद्धतम्

---

१. ऋष्यमूकं पर्वतं दृष्ट्वा अभयं प्राप्तः कपीश्वरः सुग्रीवः इत्यन्वयः. २. भेदः

हीयमानं च सुग्रीवं दृष्ट्वा श्रितहितः प्रभुः १३६
बाणेन म हता रामस्ताडयामास वक्षसि
स विद्धवक्षाः सहसा निपपात धरातले. १३७
इंद्रध्व ज इवोत्सूतो गतसत्त्वो विचेतनः
पतितः प्लवगाधीशः प्रभोः परशराहतः. १३८
सुरना य कद्दत्ता या माला कंठेऽस्य कांचनी
सा दधार श्रियं प्राणान् पतितस्यापि वालिनः १३९
देवरा ज सुतो दृष्ट्वा समीपे सानुजं प्रभुम्
गर्हयामास बहुशः पराङ्मुखवधाद्यतः. १४०
‘ कः क्षत्रि[1] य कुले जातः श्रुतवान् नष्टसंशयः
धर्मलिंग[2]प्रतिच्छन्नः क्रूरं कर्म समाचरेत्? १४१
शठः क्रू[3] रा चरणवान् मिथ्याप्रश्रितमानसः
कथं दशरथेन त्वं जातः पापो महात्मना? १४२
सुग्रीव म नसः कर्तुं प्रियमेतत्कृतं त्वया
स्वदारप्राप्तिकामेन राम! कामपरात्मना. १४३
रावणं श्री मदांधं तं पूर्वं संप्रार्थितो ह्यहम्
एकाह्ना न किमाहर्ता कंठे बद्ध्वा तवांतिकम्? १४४
पारावा रा प्सु वा न्यस्तां पाताले वापि मैथिलीम्.’
आनयेयं तवादेशाद्धयग्रीव[4] इव श्रुतिम्.’ १४५
इत्यादि म न्युमान् राममुवाच कुवचः कपिः
तमुवाच प्रभु, ‘नै! त्वं धर्मं जानासि वानर! १४६
भरतो ज गतीपालस्तदाज्ञाकारिणा मया

---

१. शास्त्रसंपन्नः. २. धर्मस्य लिङ्गं जटावल्कलधरत्वं तेन प्रतिच्छन्नः आच्छादितः ३. क्रूरं आचरणं, तदस्यास्ति इति क्रूराचरणवान्. “ न कर्मधारयान्मत्वर्थीयः ” इति सत्यपि मत्वर्थीयनिषेधे एकदेशिनेति ज्ञापकान्मतुप्. ४. पुरा किल यथा हयग्रीवो नाम विष्णोरवतारः श्वेताश्वतरीरूपिणीं श्रुतिं मधुकैटभाभ्यां पाताले निगृहीतां भुवमानिनाय तद्वत्.

वध्या अधार्मिकाः सर्वे नृपैरन्यैरपि क्षितौ. १४७

त्वं यवी य स उद्वृत्त भार्यायां खलु वर्तसे
पुत्रः कनीयान् धर्मेण तद्भार्या च स्नुषा मता. १४८

भ्रातृदा रा पहर्तारं हत्वा त्वां वानराधमम्
धर्मस्य रक्षणाल्लोकसंग्रहोऽयं मया कृतः. १४९

न मेऽत्र म नसस्तापश्छन्ना दृश्याश्च भूमिपाः
मृगान् हत्वापि निर्दोषास्त्वं च शाखामृगः स्फुटम्.' १५०

इत्युक्तो ज गदीशेन वाल्युवाच, 'रघूत्तम !
मया यदुक्तं परुषं तत्क्षमस्व कृपां कुरु. १५१

मम का य जमत्यंतप्रियं तारेयमंगदम्
पालयामुं च सुग्रीवं पुत्रवद्बंधुवत् प्रभो ! १५२

रघुरा ज ! मम प्राणप्रियां तारां तपस्विनीम्
सुग्रीवो नावमन्येत तथा कर्तुं त्वमर्हसि.' १५३

कौसल्ये य स्तमाह, 'त्वं वालिन् ! पुण्यां गतिं व्रज
सुतं ते पालयिष्यावस्तां तारां च शुचं त्यज.' १५४

तत्र ता रा ययौ पद्भ्यां रुदती ससुता द्रुतम्
रामादिभिर्द्रवीभूतैस्तस्या विलपितं श्रुतम्. १५५

कांचनी म थ तां मालां सुग्रीवाय ददौ स्वयम्
'रामस्य कुरु साहाय्यं तारायाश्च वचो हितम्. १५६

राज्यस्य श्री स्त्वां भजतु पालयांगदमात्मजम्
करिष्यति महत्कर्म' त्युक्त्वाचानुजमानतम्. १५७

उवाच रा जा कीशानामथ तं पुत्रमंगदम्,
'वत्स ! त्राता पिता तेऽयं सुग्रीवस्त्वममुं भज.' १५८

इत्युक्त्वा म रणं प्राप्तो गतो वाली वरां गतिम्
सुग्रीवः कर्म तत्कृत्वा पश्चात्तप्तोऽभवद्भृशम्. १५९

उवाच ज गतां नाथमृष्यमूकमहं गिरिम्
गंतुमिच्छामि, किष्किंधामंगदः पालयिष्यति. १६०

आंजने  य  प्रभृतयो वानरा राम! जानकीम्
विचिन्वंतु समर्थस्त्वं हंतुं दारापहारिणम्. १६१

न वान  रा  णां राज्यं मे प्रियं राम! न जीवितम्
हत्वाग्रजं रुषा जातोऽकीर्तेः शोकस्य भाजनम्.' १६२

तं शुचं  म  हतीं प्राप्तं सुग्रीवं राघवः प्रभुः
स्वयमाश्वासयामास मधुराभिर्हितोक्तिभिः. १६३

सा प्रभं  ज  नपुत्रेण तारा पूर्वप्रबोधिता
उवाच रामं शोकार्ता, 'भो! भो! राजीवलोचन! १६४

रघुना  य  क! मे भर्ता येन संप्रेषितो दिवम्
मां च तेनैव बाणेन पत्युः प्रेषय सन्निधिम्. १६५

मां विना  ज  लदश्याम! धामधाम[1] वराकृते!
रंभोर्वश्याद्यप्सरोभिः स्वर्गेऽपि न स रंस्यते.' १६६

अप्रमे  य  दयस्तारामुवाच प्रभुसत्तमः,
'शोकं मा कुरु भद्रे! त्वं सुग्रीवान्मुदमाप्स्यसि. १६७

त्वं यौव  रा  ज्ये तनयं दृष्ट्वांगदमपि स्थितम्
प्रीतिं प्राप्स्यसि कल्याणि! वीरपत्न्यस्यलं शुचा.' १६८

कुरु त्व  म  स्य सुग्रीव! प्रेतकार्यमनंतरम्.'
इत्युवाच तदा युक्तं सौमित्रिर्मित्रवत्सलः. १६९

अंगद  श्री  मदाज्ञप्तः पितुर्दाहं यथाविधि
चकारानंतरं रामं हनूमान् वाक्यमब्रवीत्. १७०

'राजाधि  रा  ज! राम! त्वं किष्किंधायां कुरु स्थितिम्
अर्चयिष्यति रत्नैस्त्वामभिषिक्तः कपीश्वरः.' १७१

घनश्या  म  स्तमाहा'हं चतुर्दश समाः पुरम्
ग्रामं वा न प्रवेक्ष्यामि पितुर्निर्देशकारकः. १७२

कपिरा  ज  स्स्वयं तस्यां गुहायामभिषिच्यताम्.'
सुग्रीवमप्युवाच, 'त्वं वालिनः पुत्रमंगदम् १७३

---

१. धाम्नः तेजसः धाम स्थानम्.

मम प्रि य ममुं योग्यं यौवराज्येऽभिषेचय
प्रावृष्यस्यां प्रस्रवणे स्थास्यामि सह लक्ष्मणः. १७४
कार्तिके रा वणवधे यतस्व सचिवैः सह
एष नः समयः सौम्य ! प्रविश त्वं स्वमालयम्.' १७५
इत्युक्ते म र्कटाधीशे तस्मिन् राज्यपदे स्थिते
आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम्. १७६
उवास [१]ज लमुक्काले गुहायां सानुजः प्रभुः
अहर्निशं प्रियतमां स्मरंस्तद्विरहाकुलः १७७
स्मृत्वा प्रि य तमां रामो बभूवार्तमना यदा
तदा पुनर्लब्धधृतिं तं चकार स लक्ष्मणः. १७८
रामोऽनु ज मुवाचा 'हं स्थितोऽस्मि वचने तव
सुग्रीव[२]स्य नदीनां [२]च प्रसाद[२]मनुपालयन्.' १७९
आंजने य स्तदोवाच सुग्रीवं रतिलंपटम्,
'कार्यं चिंतय रामस्य स्मृत्वा तेन कृतं प्रियम्.' १८०
स वान रा नशेषांस्तांस्त्वमाज्ञापय सांगदः
इत्युवाच स वध्यो मे यः पक्षं लंघयिष्यति. १८१
प्लवंग म पतेराज्ञां पुरस्कृत्याशु वानरान्
दूतान् प्रस्थापयामास हनूमानंगदश्च सः. १८२
शरदः श्री रतीवार्तं यदा चक्रे मनस्तदा
उवाच लक्ष्मणं रामो, 'वत्स ! मत्तः कपिः श्रिया. १८३
प्रजं वी रा शुनैव त्वं किष्किंधां ब्रूहि तं कपिम्
न स संकुचितः पंथा येन वाली हतो गतः. १८४
वाली स म र एकेन शरेणैको हतो मया
त्वां तु सत्यादतिक्रांतं हनिष्यामि सबांधवम्.' १८५
सुमित्रा ज स्तदोवाच, 'हन्मि सत्यच्युतं कपिम्

---

१. जलं मुञ्चन्ति ते जलमुचः, तेषां कालः, तस्मिन् जलधरसमये. २. सुग्रीवस्य अनुग्रहं नदीनां च नैर्मल्यं शरदागमं यावदित्यर्थः.

यदार्य ! कार्यमस्माकं वालिपुत्रः करिष्यति.’ १८६
कृपाल य स्तं सौमित्रिमुवाच पुरुषोत्तम,
‘स्मर सख्यं महाबाहो ! मैवं त्वं कुरु निश्चयम्. १८७
सामैव रा ज्ञि तस्मिंस्त्वं प्रथमं कुरु लक्ष्मण !
कालोऽतिक्रांत इत्येव ब्रूहीषदपि माप्रियम्. १८८
रूक्षाणि म तिमन्मैव ब्रूहि प्रीतिं समीक्ष्य ताम्.’
इत्यग्रजोक्तः सौमित्रिर्जगाम भवनं कपेः. १८९
रामानु ज स्त्वतिक्रुद्धः स भयंकरकार्मुकः
किष्किंधायाश्चलन्मार्गे त्वरया परया युतः. १९०
ते तं भ य परीतांगाः क्षुब्धं दृष्ट्वा प्लवंगमाः
कालमृत्युयुगांताभं शतशो विप्रदुद्रुवुः. १९१
कीशरा[1] ज गृहं प्राप्य भयव्याकुलमानसाः
क्रोधमागमनं चैव लक्ष्मणस्य न्यवेदयन्. १९२
सचिवा य प्लवंतस्ते किष्किंधाद्वाररक्षणे
कपीनाज्ञापयामासुः सालतालशिलायुधान्. १९३
द्विगुणं रा घवः क्रुद्धः कपीन् दृष्ट्वा रणोद्यतान्
अंगदस्तं समासाद्य विषादमगमत्परम्. १९४
तं प्रणा म परं प्राह लक्ष्मणो, ‘वत्स मागतम्[2]
सुग्रीवाय स्थितं द्वारि निवेद्यागच्छ सत्वरम्. १९५
स गतः श्री मताज्ञप्तो नत्वा तारां रुमां गुरुम्
कथयामास, ‘सौमित्रिः क्रुद्ध आगत’ इत्ययम्. १९६
स वान रा धिपः सुप्तस्तदुक्तं न विबुद्धवान्
यदासीन्मदमत्तश्च मदनेन च मोहितः. १९७
प्लवंग म भटाश्चक्रुर्भीताः किलकिलां समम्
महता तेन शब्देन प्रत्यबुध्यत वानरः. १९८
रामानु ज मतिक्रुद्धमागतं वानरेश्वरः

---

१. हस्तदोषः—कीशाराज. २. आगतं माम्.

श्रुत्वांगदाद्भूयस्तः सोऽपृच्छत्कोपकारणम्. १९९

आंजने य उवाच, 'त्वं प्रमत्तः कपिनायक!

प्रवृत्तां शरदं राजन्न जानीषेऽत एव रुट्. २००

तिष्ठस्व रा जन् समये भर्तुर्भार्येव तद्वशे

मूर्ध्ना प्रणम्य सौमित्रिं त्वं प्रसादय सत्वरम्.' २०१

प्लवंग म पतिः पुत्रमंगदं कनकांगदम्

प्रेषयामास सौमित्रिमंतरानयितुं द्रुतम् २०२

अंगदो ज वतो गत्वा नत्वा सौमित्रिमादरात्

प्रवेशयामास पुरीमयोध्याधिकसंपदम्. २०३

कीशा भ य प्रांजलयो दूरे तस्थुर्निरायुधाः

प्रविष्टे लक्ष्मणे वीरे नोचुः किंचिदधोमुखाः. २०४

सुग्रीवो ज नितत्रासोऽभवच्छ्रुत्वा धनुर्ध्वनिम्

तारामुवाच, 'गच्छ त्वं तं स्तुत्वाऽपरुषं कुरु.' २०५

तारा प्रि य समादिष्टा प्रत्युद्गम्य मदाकुला

सांत्वयामास सौमित्रिं सा सुधासारसूक्तिभिः २०६

दृष्ट्वा ता रा समानीतं सौमित्रिं कुपितं भृशम्

रुमया सह सुग्रीव उत्तस्थौ कांचनासनात्. २०७

प्रांजलिं म हिलावृंदाभिःसृतं पुरतः स्थितम्

लक्ष्मणः क्रोधरक्ताक्षो मदशोणाक्षमब्रवीत्. २०८

कृतघ्न! श्री मदाविष्ट! स्त्रैण! मद्यप! दुर्मते!

मिथ्याप्रतिज्ञ! सुग्रीव! रामं त्वं विस्मृतः कथम्. २०९

गोघ्ने सु रा पे चौरे च तथा भग्नव्रते जने

निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः. २१०

ननु ना म कृतार्थेन त्वया रामस्य वानर!

सीताया मार्गणे यत्नः कार्य आनृण्यमिच्छता. २११

कीश्वरा ज! कृते तिष्ठ समये तमये स्मर

---

१. आर्षमात्मनेपदम्.

नो चेत्सद्यः शरैस्तस्य हतो द्रक्ष्यसि वालिनम्.' २१२

तारा श्रे य स्करं वाक्यमुवाच विनयान्विता,

'कुमार! नैवं वक्तव्यो नायं परुषमर्हति. २१३

न शठो रा जपुत्रायमुपकारं न विस्मृतः

राज्यं रुमां मां कीर्तिं च प्राप्तो रामप्रसादतः. २१४

सुदुःख म नुभूयादौ प्राप्येदं सुखमुत्तमम्

प्राप्तकालं न जानीते विश्वामित्रो यथा मुनिः. २१५

स गाधि ज स्तदासक्तो घृताच्यां वत्सरान् दश

अहोऽमन्यत[1] धर्मात्मा, किं पुनर्यः पृथक् जनः? २१६

अविज्ञा य मनोऽस्य त्वं सहसा रोषमुल्बणम्

कर्तुं नार्हसि सौमित्रे! मित्रेऽस्मिन् मित्रवत्सल! २१७

महारा ज प्रियार्थं मां रुमामंगदमप्ययम्

राज्यं प्राणांश्च सुग्रीवस्त्यजेदिति मतिर्मम. २१८

रामं प्रि य तमायुक्तं हत्वा तं राक्षसाधमम्

करिष्यत्येव न चिरादत्र मे नास्ति संशयः. २१९

लंकायां रा क्षसानां तु राजपुत्र! श्रुतानि मे

शतकोटिसहस्राणि तथा षडयुतानि च. २२०

नरोत्त म! तथा त्रिंशत्सहस्राणि शतानि च

एवमाख्यातवान् वाली स ह्यभिज्ञो हरीश्वरः. २२१

कपीनां श्री मतानेन तथर्क्षाणां च राघव!

कोटीरनेका आनेतुं दूताः संप्रेषिताः प्रभो! २२२

तान्वान रा न्महावीर्यानृक्षांश्चामितविक्रमान्

प्रतीक्षमाणोऽयं वीर! न निर्याति हरीश्वरः. २२३

अद्य त्वा म मिता ऋक्षा गोलांगूलाश्च सत्तम!

उपयास्यंति सिद्ध्यर्थं, जहि कोपमरिंदम! २२४

प्रीत्या भ ज स्व सुग्रीवं भजमानं महाभुज!'

---

१. दशवर्षाणि दिनममन्यत.

इति तारावचः श्रुत्वा प्रसन्नो लक्ष्मणोऽभवत्. २२५

तं सखा य मुवाचाथो सुग्रीवो मधुरं वचः

'सीतां प्राप्स्यति रामस्तं रावणं च वधिष्यति. २२६

कः शक्तो रा जसिंहस्य ख्यातस्य स्वेन कर्मणा

तादृशं प्रतिकुर्वीत लेशेनापि नृपात्मज! २२७

येन प्र म थितो वाली बाणेनैकेन लीलया

माहेश्वरं धनुर्भग्नं सहायैस्तस्य किं प्रभोः? २२८

राजरा ज स्य व्रजतो हंतुं तं रावणं रणे

अनुयात्रां करिष्यामि दासोऽहं वानरैः सह. २२९

सौमित्रे! य द्यतिक्रांतं किंचिद्विश्वासतः प्रभो

प्रेष्यस्य मे तत्क्षंतव्यं न कश्चिन्नापराध्यति.' २३०

कपिरा ज स्य वाक्येन प्रीतः सौमित्रिरब्रवीत्,

'त्वया नाथेन मे भ्राता सनाथः सर्वथा सखे! २३१

योग्यः श्रि य मिमां भोक्तुं त्वं सुग्रीव! कपीश्वर!

वक्तैवं रामतस्त्वत्तः कोऽन्यः सत्यतुले बले? २३२

सदृशो रा घवेण त्वं विक्रमेण बलेन च

सहायो दैवतैर्दत्तश्चिराय कपिपुंगव! २३३

किंतु त्व म द्यैव सखे! निष्क्रमेतो[1] मया सह

सांत्वयस्व वयस्यं तं भार्याहरणदुःखितम्. २३४

शोचतः श्री मतः श्रुत्वा विलापं भृशदुःसहम्

यन्मया परुषाण्युक्तस्तत्क्षमस्व सखे! मम.' २३५

तच्छ्रुत्वा रा घववचः सुग्रीवो हृष्टमानसः

उवाच मारुतिं, 'दूतान् पुनः प्रेरय शीघ्रगान्. २३६

स्थिता हि म गिरौ कीशाः कैलासे मंदरे तथा

महेंद्रविंध्ययोर्येऽन्ये मेरुपार्श्वगता अपि. २३७

वसंत्यं ज नगोत्रे[2] च येऽस्ताद्रावुदयाचले

१. इतः निष्क्रम. २. अञ्जनपर्वते.

पृथिवीवार्तिनः सर्वान्महाबलपराक्रमान् २३८
इहान य स्त्र तान् प्राप्तानाहोभिर्दशभिस्तु ये[2]
हंतव्यास्ते दुरात्मानो राजशासनदूषकाः.' २३९
स समी रा त्मजो दूतान् कोटिशः प्राहिणोद् द्रुतम्
पूर्वं गतैः समाहूता आययुः कपिकोटयः. २४०
कीशा हि म वंति प्राज्यमाहेश्वरसवान्नजम्
मूलं फलं च जगृहुर्मासतृप्तिप्रदायकम्. २४१
वानरा ज वनास्तस्मिन्मुहूर्ते बहुकोटयः
आगताः सर्वतो हृष्टाः सुग्रीवं प्लवगेश्वरम्. २४२
यदुपा य नमानीतं दिव्यं मूलं फलं मुदा
सुग्रीवायार्पयामासुर्नमश्चक्रुः कृपार्थिनः. २४३
रामानु ज स्तदोवाच, 'प्लवगेंद्र! मया सह
निर्गच्छ राघवं द्रष्टुं यदि ते सौम्य! रोचते.' २४४
कपिना य क आहा 'र्य! स्थेयं त्वच्छासने मया.'
इत्युक्त्वा तेन ताराद्याः प्रेयस्यस्ता विसर्जिताः. २४५
प्रथमं रा घवं स्थाप्य शिबिकायां कपीश्वरः
स्नेहहर्षोत्सवैर्युक्तः स्वयमारुह्य निर्ययौ. २४६
नरोत्त म स्थितेर्देशं प्राप्य यानात्सलक्ष्मणः
अवतीर्य पपाताथ स मूर्ध्ना पादयोः प्रभोः. २४७
रामेण श्री मता प्रेम्णा दृढमालिंगितः सखा
सांत्वितश्च यथान्यायं बोधितः संस्तुतो भृशम्. २४८
आगता रा ज्ञ आज्ञातः कपयो न पयोधराः
यथातथा रजोव्रातैः कुर्वंतो दुर्दिनं तदा. २४९
कपीनां म हतां सेना असंख्याः सिंधुसन्निभाः
समागतास्ताः संप्रेक्ष्य हृष्टो रामः सलक्ष्मणः. २५०
सुग्रीवो ज गतां नाथमुवाचैतत्समागतम्

१. "नागच्छान्ति ममाज्ञया" इति शेषपूरणम्. २. हस्तदोषः–प्राप्तानाहोभि०

त्वत्सैन्यं त्वद्वशे युक्तमाज्ञापयितुमर्हसि.' २५१

तं सखा य मतिप्रेम्णा परिष्वज्याब्रवीत्प्रभुः,
'ज्ञायतां सौम्य! वैदेही यदि जीवति वा न वा.'२५२

देशश्च रा वणस्यादौ ज्ञेयः, कार्येऽत्र लक्ष्मणः
नैव, नैवाहमप्यद्य त्वमेवाज्ञाकरः प्रभुः.' २५३

प्लवंग म पतिः श्रुत्वा प्रभूक्तं मुदितस्ततः
विनतं प्रेषयामास दिशं पूर्वां महाबलम्. २५४

'तनया ज नकस्येष्टा रावणश्च दुराशयः
मार्गितव्यो वसन्मासादूर्ध्वं वध्यो भवेन्मम.' २५५

एवं ना य क आज्ञाप्य विनतं तं तथांगदम्
जांबवंतं हनूमंतं मैंदं च द्विविदं कपिम्, २५६

नीलं ग ज मथान्यांश्च दक्षिणां दिशमीश्वरः
कृत्वावधिं मासमाशु प्रेषयामास सिद्धये. २५७

तारोद य करं कीशं सुषेणं वीर्यसागरम्
यूथपं बुद्धिसंपन्नं प्रतीचीमादिशद्दिशम्. २५८

स वान रा धिपः प्राह ततः शतबलिं कपिम्,
'त्वमुदीचीं दिशं गत्वा तत्रान्वेषय जानकीम्.' २५९

सुग्रीवं म रुतः पुत्रं दृष्ट्वा विश्वस्तमानसम्
अंगुलीयमभिज्ञानं रामस्तस्मै ददौ निजम्. २६०

सीतायाः श्री मता कीशाः प्रेरिताः परिमार्गणे
गताः स्वां स्वां दिशं सर्वे महोत्साहाः सहस्रशः. २६१

सुग्रीवं रा घवोऽपृच्छ, 'त्सखे! कथय तत्त्वतः
कथं भवान्विजानीते सकलं मंडलं भुवः?' २६२

प्लवंग म पतिः प्राह वालिनाहमनुद्रुतः
तदा ससचिवो धावन्दृष्टवान्मंडलं भुवः.' २६३

वातात्म ज मुखा वीराः सांगदाः सर्वतो दिशम्
अन्वेषमाणा ददृशुर्न ते तां जनकात्मजाम्. २६४

महाका य मथारण्येऽसुरं वालिसुतोऽङ्गदः
रावणोऽयमिति ज्ञात्वा व्यसुं चक्रे तलेन तम्. २६५
ते वान रा बिलं किंचिद्ददृशुक्षुत्तृडर्दिताः
तस्मान्निर्गच्छतो दृष्ट्वा पक्षिणो हंससारसान्. २६६
तस्मिंस्त म स आवासे प्रविश्य कपयो बिले
गत्वा योजनमेकं तेऽपश्यन् हेममयांस्तरून्. २६७
वापीश्च ज लजै रम्या मणिसोपानभूषिताः
प्रासादं कांचनं तत्र स्त्रियं वृद्धां महाप्रभाम्. २६८
कस्याल य स्त्वं का मातारिति नत्वा हनूमता
पृष्टा सोवाच, 'वत्सेदं स्थानं मयविनिर्मितम्. २६९
देवरा ज स्तमशनिप्रहारेणावधीद्रुषा
हेमायां स्वर्गवेश्यायां सक्तं नक्तंदिवं मयम्. २७०
हिरण्म य मिदं गेहं वनमत्युत्तमं स्वयम्
दत्तं स्वयंभुवा तस्यै हेमायै वानरोत्तम! २७१
तन्मंदि रा वनं तस्याः सख्यात्कर्तुमिह स्थिता
दुहिता मेरुसावर्णेरहं नाम्ना स्वयंप्रभा.' २७२
एवं सा म धुरैर्वाक्यैः फलैस्तोयैरतर्पयत्,
'के यूयं ब्रूत किं कार्य' मिति पप्रच्छ तान्कपीन्. २७३
त आहुः, 'श्रीमति ! श्रीमान् रामो दशरथात्मजः
रक्षसा रावणेनास्य सीता प्रियतमा हृता. २७४
सखा न रा धिराजस्य सुग्रीवः कपिनायकः
तेन मातर्वयं सीतां मार्गध्वमिति चोदिताः. २७५
दिशं य म स्य संप्राप्ता द्रष्टुं तां तं च रावणम्,
विचित्य तु वनं सर्वं क्षुधितास्तृषिता वयम्. २७६
बिलं तु ज लपानार्थं प्रविष्टा जलपक्षिणः
बहिर्निर्गच्छतो दृष्ट्वा मातर्नो वृत्तमीदृशम्. २७७

१. चपेटाहननेन.

समयो य स्तु तेनार्ये! सुग्रीवेण कृतो महान्
स व्यतिक्रांत एवात्र बिलेऽस्माकं महासति! २७८

त्वां तपो रा शिममलां प्रपन्नाः शरणं वयम्
सा त्वमस्मान्बिलादस्मादुत्तारयितुमर्हसि.' २७९

सोवाच, 'म न्य एतस्मात्प्रविष्टेन निवर्तितुम्
जीवता दुष्करं कीशाः! सत्यमेतद्ब्रवीमि वः. २८०

भयं त्य ज त, चक्षूंषि निमीलयत, वानराः!
तपसाहं बिलादस्मात्तारयिष्यामि पुत्रकाः!' २८१

ततस्ते य द्यथा प्रोक्तास्तथा सर्वे निमीलिताः
निमिषांतरमात्रेण बिलादुत्तारितास्तया. २८२

विंध्यस्य ज गतीध्रस्य पादे पुष्पितपादपे
उपविश्यार्णवं दृष्ट्वा चिंतां प्राप्ताः प्लवंगमाः. २८३

अनुष्ठे य स्य कार्यस्य तेऽसिद्धौ भयशंकिताः
व्यतीते समये श्रांता निपेतुर्वानराः क्षितौ. २८४

तान् स ता रा सुतः प्राह, 'युक्तं प्रायोपवेशनम्
मासस्त्वृक्षबिले पूर्णो हरयः किं न बुद्ध्यत? २८५

इदानी म कृतार्थानां मर्तव्यं नात्र संशयः
तीक्ष्णदंडो हि सुग्रीवो वयमत्यपराधिनः. २८६

येन स्त्री श्री श्र मत्तेन भ्रातुर्ज्येष्ठस्य भुज्यते
अकार्यं तस्य किं, घातं मत्पितुर्यो ह्यकारयत.' २८७

कपिस्ता रा भिधस्तत्र तदोवाच, 'वयं बिले
प्रविश्य निर्भयाः सर्वे वसाम यदि रोचते.' २८८

उवाच म रुतः पुत्रो, 'यां धात्रीं[1] मन्यसे गुहाम्
अस्यास्त्वीषत्करं मन्ये लक्ष्मणेषोर्विदारणम्[2]. २८९

देवरा ज स्य बाणेन स्वल्पमेव कृतं तदा
लक्ष्मणो निशितैर्बाणैर्भिद्यात्पत्रपुटं यथा. २९०

---

१. रक्षणकर्त्रीम्. २. अत्र मातृकायां मकारस्यानुस्वारो नैव कृतः ।

धर्मोश्च य श्च सुग्रीवः सत्यसंधो महाव्रतः
ताराया: प्रियकामश्च स त्वां जातु न नाशयेत्.' २९१
प्राह ता रा त्मजो, 'भ्रातुर्जीवतो महिषीं प्रियाम्
धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः, २९२
भो हनू म न्! पश्यासि त्वं कं धर्मं तत्र वानरे
आदिष्टा मार्गितुं सीतां लक्ष्मणस्य भयाद्वयम्. २९३
न बंध ज नितं श्रेयो मरणं वानरर्षभाः
सद्गतेः कारणं मन्ये वरं प्रायोपवेशनम्.' २९४
विनिश्च य मिमं कृत्वा रुदन् दर्भेषु दुर्मुखः
वृद्धान्नत्वांगदो भूमौ विवेशास्वस्थमानसः. २९५
ते तं रा ज सुतं दृष्ट्वा तथावस्थं सुदुःखिताः
जांबवत्प्रमुखाः प्रायमुपविष्टा वनौकसः. २९६
परमा य स्तचित्तास्ते चक्रुः प्रायोपवेशनम्
सुग्रीवमभिनिंदतः प्रशंसंतश्च वालिनम्. २९७
स गृध्र रा जः संपातिर्दैवात्तं देशमागतः
भ्राता जटायुषः श्रीमान् विख्यातबलपौरुषः. २९८
प्लवंग म स्तान्प्लवगान् दृष्ट्वोवाच स हृष्टधीः,
'एषां प्रायोपविष्टानां भक्षिष्येऽहं मृतं मृतम्.' २९९
तच्छ्रुत्वा श्री[1] मतः पुत्रो मरुतः सुतमब्रवीत्,
'पश्य गृध्रमिषः कालः प्राप्तोऽस्माकं विपत्तये. ३००
न कृतं रा घवस्येष्टं कार्यं राज्ञश्च शासनम्
अस्माकमियमज्ञाता विपत्तिः सहसागता. ३०१
प्रियका म स्तथा धन्यो जटायुर्गृध्रनायकः
रावणान्मरणं प्राप्तः स गतिं परमां गतः. ३०२
प्राणान्प्र ज हता तेन गृध्रेंद्रेण जटायुषा
प्रियं कृतं दाशरथेः सख्युः सूनोर्महात्मनः. ३०३

---

१. श्रीमतो वालिनः

तथा व य मपि प्राणान् रामस्यैव महाप्रभोः
प्रियार्थं निश्चितास्त्यक्तुं स्नेहस्यानृण्यतार्थिनः.' ३०४
स गृध रा जस्तच्छ्रुत्वा तानुवाच प्लवंगमान्,
'कोऽयं गिरा घोषयति भ्रातुर्मम जटायुषः? ३०५
प्रियस्य म रणं कीशाः कंपयन्मे भृशं मनः
सूर्यांशुदग्धपक्षत्वादक्षमोऽहं विसर्पितुम् ३०६
समीपं ज गतीभृत्तो नीत्वा मां दयया द्रुतम्
वृत्तं यवीयसः कीशाः! कथयध्वं सविस्तरम्.' ३०७
ते तु प्रा य गताः कीशाः श्रद्दधुर्नैव तद्वचः
वंचनं भक्षणार्थं नः करोतीत्येव मेनिरे. ३०८
तारात्म ज प्रभृतयश्चक्रुः क्रूरां मतिं तदा,
'सर्वथा प्रायमासीनान्यदि नो भक्षयिष्यति, ३०९
झटित्य य ततः सर्वे वयमत्र वनौकसः
कृतकृत्या भविष्यामः सिद्धिमिष्टामितो गताः.' ३१०
ततस्ता रा त्मजः शृंगादवतार्य गिरेः स्वयम्
कथयामास गृध्राय तस्मै वृत्तांतमादितः. ३११
स श्रुत्वा म रणं भ्रातुः संपाती रावणात्तथा
रुरोदोवाच च कपीन् बाष्पसंदिग्धया गिरा, ३१२
'वियात श्री रथ वृद्धः शृण्वंस्तदपि मर्षये,
अशक्तो दग्धपक्षत्वाद्भ्रातुर्वैरविमोक्षणे. ३१३
आवां पु रा वृत्रवधे वृत्ते बंधू जयैषिणौ
आदित्यमुपयातौ स्वो[1] ज्वलन्तं रश्मिमालिनम्. ३१४
प्राप्तेऽर्के म ध्यमत्यार्तो जटायुरभवत्तदा
आच्छादितः स पक्षाभ्यां मया स्नेहेन वानराः! ३१५
तदानु ज मवन् जातो दग्धपक्षोऽर्कतेजसा
ततोऽहं पतितो विंध्ये पर्वतेऽस्मिन् यदृच्छया. ३१६

---

१. आवामुपयातौ स्वः.

गुहाल य इह भ्रातुस्ततः प्रभृति काचन
प्रवृत्तिर्न मया लब्धा श्रुताद्यैवेयमीदृशी.' ३१७

गृध्रं ता रा त्मजः प्राह, 'रावणं रावणालयम्
अंतिके यदि वा दूरे यदि जानासि शंस नः.' ३१८

विहंग म पतिः प्राह, 'लोकान् वेद्म्यखिलानहम्
क्षीरधेर्मंथनं देवासुरयुद्धं त्रिविक्रमम्. ३१९

हृतं मे ज रया तेजः प्राणाश्च शिथिला मम
रामस्य यदिदं कार्यं कर्तव्यं प्रथमं मया. ३२०

दृष्टा वि य ति रूपाढ्या सर्वाभरणभूषिता
क्रोशंती रामरामेति लक्ष्मणेति च भामिनी[1]. ३२१

तामहं ज गतीभर्तुर्जनकस्य महात्मनः
रावणेन हृतां कन्यां मन्ये रामस्य कीर्तनात्. ३२२

इतस्तो य निधेर्द्वीपे पूर्लंका शतयोजने
तामध्यास्ते विश्रवसस्तनुजो रावणाभिधः. ३२३

तस्यां सा रा जतनया रावणांतः[2]पुरे सती
रुद्धा वसति लंकायां राक्षसीभिः सुरक्षिता. ३२४

द्राग्विक्र म ध्वं प्लवगाः! सीतां द्रक्ष्यथ तत्र ताम्
ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ. ३२५

इहस्थः श्री मतीं सीतां तं च पश्यामि रावणम्
आ योजनशतात्साग्रादृध्राः पश्यंति नित्यशः. ३२६

मां वान रा! भवंतोऽब्धिं नयंतु भृशदुर्बलम्
प्रदास्याम्युदकं भ्रातुः स्वर्गतस्य महात्मनः.' ३२७

तथा ते म र्कटाश्चक्रुः स्वदेशे स्थापितं पुनः
उवाच जांबवान्, 'दृष्टा त्वया वान्येन जानकी?' ३२८

तमंड ज वरः प्राह, 'सुपार्श्वो नाम मत्सुतः

---

१. भामः दीप्तिः विद्यते अस्याः इति भामिनी, सुंदरीत्यर्थः २. हस्तदोषः—
—रावणांतपुरे.

आहारार्थं गतः प्रातः प्राप्तः सायमनामिषः. ३२९

पुत्रः प्रि य करोऽप्यंग! क्षुधितेन मया भृशम्
दुर्वाक्यैः पीडितः साधुर्मामुवाच क्षमापयन्. ३३०

ताताहा रा र्थमुद्युक्तो महेंद्रेऽहं नगे स्थितः
व्योम्न्यपश्यं स्त्रियं गौरीं हरंतं कज्जलप्रभम्. ३३१

गृहीतु म हमाहारमुत्प्लुतः पुरुषं स्त्रियम्.
स पुमान् प्रांजलिः प्राह मार्गं देहीति मां पितः! ३३२

त्यक्तः स ज नक! प्रह्व मया तूर्णं ततो गतः
न हि सामोपपन्नानां प्रहर्ता विद्यते भुवि. ३३३

सभाज य द्भिर्मां सिद्धैः पश्चादिति निवेदितम्
स रावणः सा च सीता रामस्य दयिता सती. ३३४

नंदिनीं ज नकस्यार्यां स्नुषां दशरथस्य ताम्
पश्यन् स्थितोऽहं रामेति लक्ष्मणेति च वादिनीम्. ३३५

कालात्य य स्य तातायं हेतुस्तेन निरामिषः
आगतोऽहमिति प्राह सुपार्श्वस्तनयो मम. ३३६

निशाक रा ख्यः सुतपा मुनिर्मामब्रवीत्पुरा,
'तिष्ठेह विष्णो रामस्य त्वं साहाय्यं करिष्यसि. ३३७

नाथेन म नुवंशस्य जानक्याः परिमार्गणे
प्रेषिताः कपयो दूता एष्यंतीह महाबलाः. ३३८

आख्येया श्री मतस्तेभ्यः संपाते महिषी त्वया
सर्वथा न तु गंतव्यमीदृशः क्व गमिष्यसि? ३३९

कार्ये सु रा णां विप्राणां रामस्येंद्रस्य चात्मनः
इह स्थित्वा कृते वत्स! त्वं सपक्षो भविष्यसि. ३४०

मुनिर्मा म ब्रवीदेवं पश्चात्स्वर्गं जगाम सः
साग्राण्यष्टौ सहस्राणि वर्षाण्यत्राभवन्मम. ३४१

मयात्म ज स्तदात्यर्थं वाग्भिः संतर्जितो रुषा
तेन सत्यपि सामर्थ्ये न त्राता जानकी यतः. ३४२

सम्प्रत्य य मिदं तस्य निशाकरमुनेर्वचः
तत्प्रसादान्नवौ पक्षावुत्पन्नौ मम पश्यत.' ३४३

तान्वान रा नुवाचाथ संपातिर्गृध्रभूपतिः,
'पक्षलाभो ममायं वः सिद्धिप्रत्ययकारकः.' ३४४

विहंग म स्तदेत्युक्त्वा जिज्ञासुः स्वां गतिं ततः
उत्पपात गिरेः शृंगात्पुनस्तरुणवन्मुदा. ३४५

श्रुत्वाऽङ्ग ज स्य वचनं ते लब्धप्रत्ययास्तदा
बभूवुर्हरिशार्दूला विक्रमाभ्युदयोन्मुखाः. ३४६

प्रेक्ष्य तो य निधिं कीशा आकाशमिव दुस्तरम्
निषेदुः सहिताः कार्यं कथमित्यब्रुवंस्तदा. ३४७

वाल्यात्म ज स्तानुवाच, 'किं विषण्णाः प्लवंगमाः ?
विषादो हंति पुरुषं बालं क्रुद्ध इवोरगः. ३४८

कोऽद्य तो य निधिं वीरो लंघयिष्यति तेजसा ?
कः करिष्यति सुग्रीवं सत्यसंधमरिंदमम् ? ३४९

सुतान्दा रा न् प्रसादेन कस्य पश्येम संगताः ?
यदि कश्चित्समर्थो नो ददात्वभयदक्षिणाम्. ३५०

यूयं स म र्थाः सर्वेऽपि प्रतिबंधो न वो गतौ
ब्रुवध्वं यस्य, या शक्तिः प्लवने प्लवगर्षभाः !' ३५१

तत्तस्य श्री मतः श्रुत्वा वालिसूनोर्वचस्तदा
आबभाषे गजस्तत्र, 'प्लवेयं दशयोजनम्.' ३५२

तथा प रा क्रमी प्राह, 'गवाक्षोऽहं तु विंशतिम्
शरभस्त्रिंशदृषभश्चत्वारिंशन्महामनाः. ३५३

प्लवंग म स्तु पंचाशत् गंधमादननामकः
मैंदः कीशोत्तमः षष्टिं सप्ततिं द्विविदः कपिः ३५४

तथा ते ज स्वितिलकः सुषेणोऽशीतिमित्यथ.'
ततो वृद्धतमस्तेषां जांबवान्प्रत्यभाषत, ३५५

अस्ये व य सि का शक्तिर्वैरोचानिमखे मया।

प्रदक्षिणीकृतः पूर्वं क्रममाणस्त्रिविक्रमः. ३५६

स मे प रा क्रमो नष्ट इदानीमहमंगद!

नवतिं योजनानां तु गमिष्यामि न संशयः. ३५७

न मे ग म नसामर्थ्यं संप्रत्यंगद! तादृशम्

नैतावता च संसिद्धिः कार्यस्यास्य भविष्यति. ३५८

तं वालि ज! उवाचा, 'हं गमिष्यामि शतं पुनः

निवर्तने तु मे शक्तिः स्यान्न वेति न निश्चितम्. ३५९

ब्रह्म का य ज आह, 'त्वं योजनानामसि क्षमः

कामं शतसहस्रं वा गंतुं प्रतिनिवर्तितुम्. ३६०

युवरा ज! न हि प्रेष्यः प्रेष्यैः प्रेषयिता क्वचित्

स्वामी कलत्रं सैन्यस्य, तस्मात्पाल्यः सदा भवान्.'

वालिका य ज आहा 'हं न गमिष्यामि नापरः

यद्यस्माभिः खलु पुनः कार्यं प्रायोपवेशनम्.' ३६२

तमाह रा जा ऋक्षाणां, 'चिंतामंगद! मा कुरु

एष संचोदयाम्येनं यः कार्यं साधयिष्यति.' ३६३

ततः स म रुतः पुत्रं प्रतीतं रहसि स्थितम्

उपेत्य तत्प्रभावज्ञस्तमुवाच प्रहर्षयन्. ३६४

'हनूमन्! श्री मतासि त्वं सुग्रीवेण समः स्वयम्

तेजसा लक्ष्मणेनापि रामेण प्रभुणापि च. ३६५

विहंग रा जपवनतपनैः समवेगवान्

हनूमन्नसि शक्तस्त्वमेकः सागरलंघने. ३६६

स्वर्वेश्या म हिता तात! विख्याता पुंजिकस्थला

शापेन सा केसरिणो भार्या जातांजनाभिधा. ३६७

तां प्रभं ज न आलोक्य सुंदरीं काममोहितः

बलात्पर्यष्वजत्तस्यां त्वं जातोसि महाबलः. ३६८

'गुणाल य स्तव सुतो महाबुद्धिपराक्रमः

लंघने प्लवने चैव भविष्यति मया समः.' ३६९

इति वी रा धिवीरांग! त्वन्मातरमुवाच यत्
भगवान् मारुतः सत्यं तत्सर्वं त्वयि दृश्यते. ३७०
दृष्ट्वा त्व म र्कमुदितं फलं मत्वा तदाशया
सद्यो जातो योजनानां शतानि त्रीणि खं गतः. ३७१
देवरा ज स्त्वय्यशनिं मुमोच शिखरे गिरेः
पततस्तव बालस्य वामो हनुरभज्यत. ३७२
नामधे य मतस्तेऽभूद्धनूमानिति मारुते!
दृष्ट्वा त्वां निहतं क्रुद्धस्त्रैलोक्यं नानिलो ववौ. ३७३
संभ्रांते ज गति ब्रह्मा प्रीत्या तुभ्यं वरं ददौ
अशस्त्रवध्यतां युद्धे स्वच्छंदमरणं हरिः. ३७४
कृते श्रे य सि ते देवैः प्रसन्नोऽभूत्पिता तव
त्वं हि वायुसुतो वत्स! प्लवने चापि तत्समः. ३७५
मया पु रा बलेर्यज्ञे प्रादुर्भूते त्रिविक्रमे
त्रिःसप्तकृत्वः पृथिवी परिक्रांता प्रदक्षिणा. ३७६
निर्मथ्य म मृतं याभिः प्रक्षिप्ताभिः पयोनिधौ
ता मयौषधयः सर्वाः संचिता देवशासनात्. ३७७
सोऽहं तु श्री मतः कार्यं कर्तुं रामस्य न क्षमः
समर्थस्त्वमिदानीं ते न सिंधोर्लंघने श्रमः. ३७८
अद्य त्वं रा हितोत्तिष्ठ स्वजनान्किमुपेक्षसे?
विक्रमस्व महावेगं विष्णुस्त्रीन् विक्रमानिव.' ३७९
इत्येवं म करावासं क्रमितुं शतयोजनम्
संस्तूयमानो हनुमान्व्यवर्धत महाबलः. ३८०
तं प्रभं ज नजं कीशा विस्मिता ददृशुस्तदा
त्रिविक्रमं कृतोत्साहं नारायणमिव प्रजाः. ३८१
आंजने य स्य वदनं जृंभमाणस्य तद्बभौ

---

१. आहिता त्वरा येन सः त्वराहितः, तत्संबुद्धौ. 'वाहिताग्न्यादिषु' इत्यनेन 'आहित'शब्दस्य परनिपातः.

अंबरीषोपमं[1] दीप्तं, स च वह्निरिव स्वयम्. ३८२

स समी रा त्मजो मध्याद्वानराणां समुत्थितः
अभिवाद्य हरीन् वृद्धान्प्रहृष्ट इदमब्रवीत्. ३८३

'औरसो म रुतः पुत्रः प्लवनेनास्मि तत्समः
सहस्रवारं शक्नोमि मेरुं कर्तुं प्रदक्षिणम्. ३८४

अहं भु ज द्वयस्यास्य वेगनुन्नांबुराशिना
समाप्लावयितुं लोकमुत्सहे सचराचरम्. ३८५

अहं तो य निधीन्सर्वाञ्छोषयिष्यामि तेजसा
अहं द्रक्ष्यामि वैदेहीं प्रमोदध्वं प्लवंगमाः! ३८६

लंकां भु ज बलेनाहं समुत्पाठ्याद्य वानराः!
गच्छेयमिति मे बुद्धिरि' त्युवाचानिलात्मजः. ३८७

प्रहर्ष य न् हरीन्सर्वान्महेंद्रस्य महागिरेः
आरुरोहोच्चशिखरं स्तुतो जांबवता पुनः. ३८८

वसुंध रा धरस्तेन बाहुभ्यां पीडितो यदा
कंपितो निःसृताह्यंबुशिलस्त्रस्तमृगव्रजः[2]. ३८९

समीक्ष्य म रुतः पुत्रं महेंद्रशिखरास्थितम्
प्रहृष्टा मुदिरं दृष्ट्वा मयूरा इव वानराः. ३९०

इति श्रीमंत्ररामायणे श्रीरामनंदनमयूरविरचिते किष्किधाकांडे
त्रिंशत्तमो मंत्रः समाप्तः.

---

## सुंदरकांडम्

उत्प्लुत्य स श्री कंठस्य मार्गणस्त्रिपुरं[3] यथा
लंकां जगाम जवनः पवनस्यौरसः सुतः. १

तद्वेगधा रा पतिता द्रुमास्तं क्षणमन्वयुः
प्रस्थितं दीर्घमध्वानं स्वबंधुमिव बांधवाः. २

---

१. अंबरीषः सूर्यः, तत्सदृशम्. २. निःसृताः अहयः अंबूनि शिलाश्च यस्मात् सः पशुवर्गः ३. बाणः

अन्वयुस्तं   म रुत्पुत्रमूरुवेगोत्थिता द्रुमाः
दानमानादिभिस्तुष्टाः सैन्या इव महीपतिम्. ३

व्योम्नि तद्भु ज दंडौ तौ ददृशाते प्रसारितौ
पर्वताग्राद्विनिष्क्रांतौ पंचास्याविव पन्नगौ. ४

छायाब्धेः प य सि व्यक्ता तदा मध्याह्निकी कपेः
दशयोजनविस्तीर्णा त्रिंशद्योजनमायता. ५

वस्त्रापहा   रा त्सहसा देहा इव शरीरिणाम्
वेगाज्जलोत्सारणतो विवृता जलजंतवः. ६

याति येन   म हाकायो वेगेन महता कपिः
तेन मार्गेण सहसा द्रोणीकृत[1] इवार्णवः. ७

दृष्ट्वा तमं   ज नापुत्रं प्लवमानं द्रुतं तदा
ववृषुः पुष्पवर्षाणि देवगंधर्वदानवाः. ८

मैनाकं तो   य राश्युक्तेर्विश्रामार्थं समुत्थितम्
विघ्नं मत्वोरसाधस्तं पातयामास मारुतिः. ९

'भ्रातः प्रभं   ज नेनाहं पूज्यस्त्वं मे तदात्मजः,
मयि विश्रम्य गच्छे' ति मैनाकाद्रिरुवाच तम्. १०

स्पृष्ट्वांजने   य स्तं प्राह, 'कार्यकालो गिरे!ऽद्य मे,
प्रतिज्ञा च कृता सौम्य! न स्थातव्यमिहांतरा.' ११

उक्त्वैवमा   रा त्वरया जगाम स महाबलः
मैनाकायाभयं प्रादात्तेन तुष्टः शचीपतिः. १२

ततः सुरा   म रुत्सूनोः परीक्षार्थं महौजसः
'विघ्नं कुरु त्वमि' त्यूचुः सुरसां नागमातरम्. १३

रुद्ध्वाध्वानं श्री मतः सा बिभ्रती राक्षसं वपुः
उवाच, 'मे प्रदिष्टस्त्वं सुरैर्भक्ष्यः प्लवंगम! १४

धात्रा पुरा   रा धनतः प्रसन्नेनैष मे वरः

---

१. द्रोणी हर्म्यादौ जलनिर्गमकाष्ठयंत्रं तज्जलधारायुक्त इव कृतो द्रोणीकृतः मेघेषु तदाघातेन तेभ्यो जलस्रवणादिति भावः.

दंतैस्त्वां भक्षयिष्यामि प्रविशेदं ममाननम्.' १५
इत्युक्त्वा सा म हद्वक्त्रं व्यादाय पुरतः स्थिता.
एवमुक्तः सुरसया प्रहृष्टवदनोऽब्रवीत्. १६
'भद्रे रामो ज गन्नाथः प्रविष्टो दंडकावनम्
रावणेन हृता तस्य प्रिया जनकनंदिनी. १७
तद्दर्शना य दूतोऽहं गमिष्ये रामशासनात्
कर्तुमर्हसि रामस्य साह्यं विषयवासिनि! १८
अथवा तां रा जपुत्रीं दृष्ट्वा रामं च तं प्रभुम्
त्वद्वक्त्रमागमिष्यामि सत्यं प्रतिशृणोमि ते.' १९
इत्युक्ता का म रूपा सा मया दृष्टो विधेर्वरात्
'न कश्चिन्मुच्यते मम' इत्युवाचोग्रदर्शना. २०
स उवाचां ज नेयस्तां क्रुद्धो दिग्योजनाननाम्
'कुरु त्वं तादृशं वक्त्रं येन मां विषहिष्यसि.' २१
इति व्यादा य वदनं स्थितामुक्त्वा स्वयं प्रभुः
दशयोजनविस्तारो हनूमानभवत्तदा. २२
प्रचकार ज वेनास्यं सा विंशद्योजनायतम्,
त्रिंशद्योजनविस्तारो हनूमान् बुद्धिमानभूत्. २३
ततः सा त्वा य तं चक्रे द्विगुणं वक्त्रमात्मनः
बभूव हनुमान् वीरः पंचाशद्योजनोच्छ्रितः. २४
पुनश्चका रा स्यमसौ षष्टियोजनविस्तृतम्
चक्रे स्वदेहं संख्यातः कपिः सप्ततियोजनम्. २५
चकार सा म हद्वक्त्रमशीत्या योजनैर्मितम्
बभूव सोऽनलप्रख्यो नवतिं योजनोच्छ्रयः. २६
सद्धर्मेण श्री रिव सा ववृधे सुरसा मुखम्
शतयोजनविस्तारं चकारातिभयंकरम्. २७
तदा समी रा त्मजनिर्बभूवांगुष्ठमात्रकः

---

१. साहाय्यम्. साह्यमिति आर्षः प्रयोगः. २. हस्तदोषः — **विषयवासिनी**.

वक्त्रे प्रविश्य निर्गत्य गगनस्थ उवाच ताम्. २८

'दाक्षायणि! म यि क्रोधो मास्तु देवि! नमोऽस्तु ते,
गमिष्येऽहं प्रविष्टोऽस्मि मुखं सत्यो वरस्तव.' २९

साब्रवी 'दं ज नासूनो! गच्छ सौम्य! यथासुखम्
समानय च वैदेहीं राघवेण महात्मना.' ३०

वायोस्तन य उक्तो जगामाथ पुनर्द्रुतम्
ब्रह्मदत्तवरात्तस्य च्छायां जग्राह सिंहिका. ३१

सुग्रीवोक्तां रा क्षसीं तां बुध्वा स ववृधे कपिः
वक्त्रं प्रसारयामास सा पातालांबरोपमम्. ३२

तस्या मुखे म हत्याशु संक्षिप्यात्मानमात्मवान्
निपपात सुरैर्दृष्टो राहोरास्ये शशीव सः. ३३

छित्त्वा हृदं ज नासूनुस्तस्यास्तत्क्षणमंबरम्
जगाम रामकार्यार्थी मनःसंपातविक्रमः. ३४

संक्षिप्य का य वृद्धिं च प्रवेगं च महामतिः
समासाद्यांबुधेस्तीरं लंबाद्रौ निपपात सः. ३५

लंबाद्रावं ज नायाः स स्थितः सूनुरनिश्वसन्
ददर्श गिरिवर्यस्य मूर्ध्नि लंकां वनैर्वृताम्. ३६

जगाम तां य शस्वींद्रो विश्वकर्मविनिर्मिताम्
रम्यां वृतां कांचनेन प्राकारेण महापुरीम्. ३७

ओतुमात्रो रा त्रिमुखे बभूवाद्भुतदर्शनः
ददर्श प्रविशंतं तमथ लंकाधिदेवता ३८

पुरस्तात्सा म हानादा वायुसूनोरतिष्ठत.
पप्रच्छ, 'कस्त्वं? केनासि कार्येणेह समागतः?' ३९

तामुवाच श्री हनुमान्, 'का त्वं द्वारेऽवतिष्ठसे?
किमर्थं चापि मां क्रोधाक्षिभर्त्सयासि दारुणे!' ४०

वस्वोकसा रा प्रतिमा साब्रवीत्त, 'महं कपे!

---

१. कुबेरपुरी अलका.

लंकास्मि दशवक्त्रस्य नियोगपरिपालिका.' ४१
हनूमांस्ता म थोवाच, 'लंकां द्रक्ष्यामि निस्तुलाम्
इत्यर्थमिह संप्राप्तः परं कौतूहलं हि मे.' ४२
पुनर्वात ज माहेयं पुरी रावणपालिता,
'मामनिर्जित्य न द्रष्टुं शक्यते वानर! त्वया.' ४३
तामांजने य स्स्तुत्वाह, 'मैवं, मार्गं प्रयच्छ मे
दृष्ट्वा पुरीमिमां भद्रे! पुनर्यास्ये यथागतम्.' ४४
सैवमुक्ता रा वणस्य पुरी नादं भयंकरम्
कृत्वा तलेनानिलजं ताडयामास वेगिता[1]. ४५
स प्लवंग म वर्योऽपि वामहस्तस्य मुष्टिना
ताडयामास तां स्त्रीति नातिक्रुद्धो विवेकवान्. ४६
पपात ग ज राजेन स्पृष्टा रंभेव[2] सा पुरी,
कृपां चकार तेजस्वी मन्यमानः स्त्रियं च ताम्. ४७
भृशोद्विग्ना य शोराशिं कपिं सा गद्गदाक्षरम्
उवाचागर्वितं वाक्यं परिभूता बलीयसा. ४८
'प्रसीद, वि ज यस्तेऽस्तु, मां त्रायस्व महाभुज!
मह्यं स्वयंभुवा दत्तो वरः पूर्वं महाभुज! ४९
वानरस्त्वां य दा कश्चिद्विक्रमाद्वशमानयेत्
तदा त्वया हि विज्ञेयं रक्षसां भयमागतम्. ५०
स कीशवी रा द्य प्राप्तः समयस्तव दर्शनात्
स्वयंभुविहितः सत्यो न तस्यास्ति व्यतिक्रमः. ५१
राक्षसाना म यं सौम्य! विनाशः समुपागतः
सीतानिमित्तं राज्ञश्च रावणस्य दुरात्मनः. ५२
तत्त्वं पुरीं श्री संपन्नां प्रविश्य कपिसत्तम!
विधत्स्व सर्वकार्याणि यानि यानीह वांच्छसि. ५३
रामस्य दा रा न्पुर्यां त्वमन्वेषय यथासुखम्.'

---

१. संजातवेगा. २. कदली.

इत्युक्तो द्वारतः कीशः प्राकारमवपुप्लुवे. ५४

द्विषतां वा म मंघ्रि स मूर्ध्नि चक्रे महामतिः
प्रविश्य रात्रौ तां लंकां ददर्श भवनान्यथ. ५५

द्रष्टुं देवीं ज नकजां रामस्य दयितां पुरि
भवनाद्भवनं गच्छन्न ददर्श मरुत्सुतः. ५६

स आंजने य स्तस्यां तान् विवेश महतो गृहान्
रावणभ्रातृतनयप्रधानानां महाजवः. ५७

तत्साचिव्यं रा त्रिनाथश्चक्रे लंकां प्रकाशयन्
पुष्पकं रावणस्यांतःपुरं सर्वं ददर्श सः. ५८

सुखसुप्ते म रारातौ ताः स्त्रियो विविधप्रभाः
ज्वलंतः[1] कांचना दीपाः प्रेक्षन्तोऽनिमिषा इव. ५९

ता विप्ररा ज र्षिसुता दैत्यगंधर्वयोषितः
रक्षसां चाभवन् कन्यास्तस्य कामवशं गताः. ६०

प्रियास्ताः प्रि य मास्ता नो तत्र काश्चिद्बलाद्धृताः
नान्यकामा नान्यपूर्वा वरार्हा जानकीं विना. ६१

पलाशरा[2] ज स्य यथा संति भार्या इमा इह
सीता यदीदृशी भद्रमेवास्येत्यब्रवीत्कपिः. ६२

भूयोऽर्चित य देवं सा विशिष्टा गुणतो ध्रुवम्
अतोऽयमस्यां कृतवान् कष्टं दुष्टो निशाचरः. ६३

प्राप्य सुखं रा क्षसेंद्रं परमोद्विग्नमानसः
तस्मादतित्रस्त इव सोऽपासर्पन्मरुत्सुतः. ६४

स्थानांतर म थासाद्य रावणं प्रेक्षते स्म सः
. ददर्श रूपसंपन्नामथ मंदोदरीं कपिः. ६५

मत्वा प्रियां श्री रामस्य तां स्त्रियं रूपसंपदा
हर्षेण महता युक्तो ननंद हरियूथपः. ६६

---

१. आर्षः शतृप्रत्ययः. २. पलं मांसं अश्नाति इति पलाशः, तेषां राजा तस्य राक्षसराजस्य.

स तामसा रा माश्चेव त्यक्त्वा बुद्धिं समुत्थिताम्
चकार चिंतामपरां हनूमानतिबुद्धिमान्. ६७

'राघवस्य म हिष्येवमुपस्थातुं परं जनम्
स्वप्तुं भोक्तुमलंकर्तुं नार्हत्येव कथंचन. ६८

न त्रिष्वपि ज गत्स्वन्यः कश्चिद्रामसमः पुमान्
अन्येयमि'ति निश्चित्य चचारान्यत्र मारुतिः ६९

योषितामा य ताक्षीणां सहस्राणि ददर्श सः
न तां नतांगीं लावण्यशीलभारेण जानकीम्. ७०

खिन्नचित्तो रा वणस्य तस्मादंतःपुराद्बहिः
निर्गत्य चिंतामकरोद्दीनो जानक्यदर्शनात्. ७१

'इदं खलु म मात्यर्थं धर्मलोपं करिष्यति
यत्प्रसुप्तपरस्त्रीणामद्य जातं विलोकनम्.' ७२

इत्येवमं ज नासूनुर्धर्मसाध्वसशंकितः
निःसृत्य पानभूमेः स चिंतयामास मारुतिः. ७३

'सीता न ध्रि य ते नूनं यन्न दृष्टा विचिन्वता
रावणेन हता बाला शीलरक्षणतत्परा. ७४

अदृष्ट्वा तां ज नकजां किं प्रवक्ष्यामि तान् कपीन्
किं वा वक्ष्यति मां वृद्धो जांबवानंगदश्च सः. ७५

कृत्वा निश्च य मद्याहं योग्यः प्रायोपवेशने
भूयोऽथवा विचेष्यामि न यत्र विचयः कृतः. ७६

नास्ति सीता रा जकन्या लंकायामिति सर्वथा
रामस्य प्रियभार्यस्य न निवेदयितुं क्षमम् ७७

निवेदने म हान् दोषस्तथा स्याद्निवेदने
कथं नु खलु कर्तव्यं विषमं प्रतिभाति मे. ७८

गत्वा यदि श्री काकुत्स्थं वक्ष्यामि परुषं वचः
सीता मया न दृष्टेति ततस्त्यक्ष्यति जीवितम्. ७९

---

१. सेवितुम्.

लोकानसा रा नखिलान् विना रामेण मन्यते
भृशानुरक्तः सौमित्रिस्तत्क्षणान्न भविष्यति. ८०
स प्लवंग म राजोऽपि प्राणांस्त्यक्ष्यत्यसंशयम्
रुमांगदश्च तारा च ताश्च रामस्य मातरः. ८१
रामं सानु ज मात्मेष्टं परं श्रुत्वा तथागतम्
भरतस्तमनुभ्राता शत्रुघ्नो न भविष्यति. ८२
वानराः क्ष य मेष्यंति सुग्रीवे राज्ञि संस्थिते[1]
इक्ष्वाकुकुलनाशश्च नाशश्चैव वनौकसाम्. ८३
मयीहस्थे रा घवौ तावाशया खलु सर्वथा
प्राणान् ध्रुवं धरिष्येते वानराश्च तरस्विनः. ८४
चितिं कृत्वा म हांतं वा प्रवेक्ष्याम्यरणीसुतम्
नेतः प्रतिगमिष्यामि तामदृष्ट्वासितेक्षणाम्.' ८५
स कीशकुं ज रो भूयश्चिंतयामास बुद्धिमान्,
'विनाशे बहवो दोषा जीवन् प्राप्नोति भद्रकम्. ८६
यावत्तामा य ताक्षीं नो पश्यामि प्रभुकामिनीम्
तावदेतां पुरीं लंकां विचिनोमि पुनःपुनः ८७
इमामद्य ज वेनाहमशोकवनिकामपि
गुर्वीमधिगमिष्यामि नहीयं विचिता मया. ८८
कृत्वा निश्च य मेवं स श्रीरामाय महात्मने
लक्ष्मणायाथ सीतायै सुग्रीवायोग्रतेजसे ८९
नत्वा समी रा त्मभवो रुद्रादिभ्यः कृतांजलिः
उदतिष्ठज्जगामायमशोकवनिकां प्रति. ९०
अनेकद्रु म संपन्नामशोकवनिकां गतः
कांचनीं शिंशुपां रम्यां महतीमारुरोह सः. ९१
समारुह्य श्री मतीं तां शिंशुपां पर्णसंवृताम्
अशोकवनिकाशोभामपश्यत्परमां कपिः. ९२

१. मृते सति.

तत्राविदू　रा न्प्रासादं सहस्रस्तंभमद्भुतम्
　　ददर्श तस्य निकटे वृक्षमूले प्रभोः प्रियाम्.　९३

तां वाससा　म लवता संवीतां राक्षसीवृताम्
　　उपवासकृशां दीनां निश्वसंतीं पुनःपुनः　९४

विलोक्य रा ज महिषीं सीतेयमिति बुद्धिमान्
　　तर्कयामास रामेण कथितैर्भव्यलक्षणैः　९५

यूथभ्रष्टा　य थारण्ये श्वभिः परिवृता मृगी
　　तथा तां राक्षसीरुद्धां दृष्ट्वाभूद्दुःखितः कपिः.　९६

'इयं सीता रा घवस्य महिषी परमप्रिया
　　प्रनष्टापि सती यस्य मनसो न प्रणश्यति　९७

अस्या देव्या म नस्तस्मिन् तस्य चास्यां प्रतिष्ठितम्
　　तेनेयं स च धर्मात्मा मूहूर्तमपि जीवति.'　९८

इत्याह सोंऽ ज नासूनुर्हृष्टः सीतां विलोक्य ताम्
　　जगाम मनसा रामं प्रशशंस च तं प्रभुम्　९९

घोराः काला य समहाशूलमुद्गरधारिणीः
　　ददर्श राक्षसीस्तत्र सदा मांससुराप्रियाः　१००

दशास्यो र　ज नीशेषे कामार्तः स्त्रीशतावृतः
　　तत्राजगाम सहसा वैदेहीगतमानसः.　१०१

उग्रतेजा　य द्यपि स प्रभंजनसुतस्तदा
　　शाखांतरेऽभवद्गूढो निर्धूतस्तस्य तेजसा.　१०२

समागते　रा क्षसेंद्रे दीपिकाभिः प्रकाशिते
　　प्रावेपत वरारोहा प्रवाते कदलीव सा.　१०३

ऊरुभ्यां क्षां म मुदरं बाहुभ्यां च पयोधरौ
　　संप्रच्छाद्योपविष्टा सा रुदती शीलसादरा.　१०४

स दिदृक्षुः श्री मतीं तामुपासर्पत रावणः
　　ददर्श दीनामासीनां धरण्यां संशितव्रताम्.　१०५

---

१. कृशाम्.

शुद्धप्रचा रा मत्यार्तामुवाच दशकंधरः,
'मां दृष्ट्वा देवि! कस्मात्त्वमप्रसन्ना भयाकुला? १०६

त्वामहं का म ये सीते! बहु मन्यस्व मां प्रिये!
रक्षोधर्मः परस्त्रीणां हरणं गमनं खलु. १०७

तथाप्यं बु ज पत्राक्षि! त्वां न स्प्रक्ष्याम्यहं बलात्
मयि विश्वसिहि प्राज्ञे! मैवं भूः शोकलालसा. १०८

पानानि श य नानि त्वां दिव्यान्याभरणानि च
अंबराणि महार्हाणि लभस्व मदिरेक्षणे! १०९

स्त्रीरत्नं त्वं रा वणं मां मैवं भूः प्राप्य मैथिलि!
यौवनं मास्तु ते मोघं कुरु गात्रेषु भूषणम्. ११०

यद्यत्तव म नोज्ञांगि! गात्रं पश्यामि शोभने!
तस्मिंस्तस्मिन्पृथुश्रोणि! चक्षुर्मम निबध्यते. १११

भव मे कं ज नेत्रे! त्वं भार्या मोहं विसर्जय
बह्वीनामुत्तमस्त्रीणां ममाग्रमहिषी भव. ११२

त्रिलोकेभ्यो य त्नवता यानि रत्नानि भामिनि!
हृतानि तानि सर्वाणि राज्यं चेदं ददामि ते ११३

तव पित्रे ज नकजे! तव हेतोर्विलासिनि!
प्रदास्यामि विजित्याहं सर्वामपि वसुंधराम्. ११४

असकृत्सं यं[1] ति मया भग्ना मग्ना भयार्णवे
अशक्ताः पुरतः स्थातुं मम सर्वे सुरासुराः. ११५

गतश्रिया रा जपुत्रि! तेन त्वं किं करिष्यसि?
द्रष्टुमप्यसमर्थस्त्वां शंके जीवति वा न वा! ११६

सीते लल[2] म यि त्वं ते ललंतु त्वयि बांधवाः
न स रामो मया तुल्यस्तेजसा तपसापि वा.' ११७

वाक्यं तस्य श्री मती सा श्रुत्वा रौद्रस्य रक्षसः
तृणमंतरतः[3] कृत्वा प्रत्युवाच महासती. ११८

---

१. युद्धे. २. रमस्व. ३. रावणस्य साक्षात्संभाषणानर्हत्वात् तृणव्यवधानकरणम्.

'मत्तः प्रवी रा धिपतेः कलत्रात्सत्कुलोद्भवात्
निवर्तय स्वदारेषु प्रीयतां ते मनः सदा. ११९

अकार्यं न म या कार्यमेकपत्न्या[1] विगर्हितम्
न मां प्रार्थयितुं योग्यस्त्वं सिद्धिमिव पापकृत्. १२०

इत्युक्त्वा सा ज नकजा राक्षसं रावणं खलम्
स्मृत्वा रामं परावृत्य स्थित्वा भूय उवाच तम्. १२१

'निशाचर! य था भार्यास्तवान्येषां तथा ध्रुवम्,
श्रेयस्कामेन तु सदा परिहार्याः परस्त्रियः. १२२

नात्र संतो रा त्रिचर! सतो वा नानुवर्तसे
रक्षसां त्वमभावाय न गृह्णासि सतां वचः. १२३

क्षपाचर! म नुष्येंद्रप्रिया लोभयितुं त्वया
नाहं शक्या, न खद्योतप्राप्या जातु रवेः प्रभा. १२४

उपाधाय[2] ज नेंद्रस्य तस्य तं सत्कृतं भुजम्
कथं नामोपधास्यामि भुजमन्यस्य कस्यचित्? १२५

मां समान य रामेण साधु रावण! दुःखिताम्
रामः सखा त्वया कार्यो वधं घोरमनिच्छता. १२६

धर्मज्ञोऽसौ ज गत्ख्यातः शरणागतवत्सलः
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि. १२७

मां चास्मै प्र य तो भूत्वा निर्यातयितुमर्हसि
अन्यथा त्वं हि कुर्वाणः परां प्राप्स्यसि चापदम्. १२८

शराः सुघो रा नामांका रामलक्ष्मणयोः क्षणात्
लंकां शून्यां करिष्यंति ज्वलितास्या इवोरगाः. १२९

राक्षसाध म! चौर्येण शून्यस्थाहं त्वया हृता
तयोस्त्यक्त्वाश्रमं दूरं गतयोर्नरसिंहयोः. १३०

उपाघ्राय श्री मतोर्न त्वया गंधलवं तयोः

---

१. एकः पतिर्यस्याः सा एकपत्नी तया. 'नित्यं सपत्न्यादिषु' इति ङीप्.

२. उपधानीकृत्य.

शक्यं संदर्शने स्थातुं शुना शार्दूलयोरिव. १३१

असंशयं रा जराजगिरिं वांबुपतेः[1] सभाम्
गतोऽपि त्वं दाशरथेरागस्कृत् न भविष्यसि.' १३२

तत्सीताया म हच्छ्रुत्वा परुषं वाक्यमीदृशम्
उवाच भूयस्तां राजा रक्षसां दशकंधरः. १३३

'लोके स्त्रीणां ज नः सर्व इष्टः सांत्वयिता खलु
त्वया तु परिभूतोऽहमसकृत्सांत्वयन्नपि. १३४

त्वयि तु न्या य तः प्राप्तं मम क्रोधं सुदारुणम्
सीते! त्वद्विषयः कामो निरुणद्धि हृदुस्थितः. १३५

वामः कामो रा जकन्ये! यस्मिन्नेव निबध्यते
जने तस्मिन्ननुक्रोशः स्नेहश्च खलु जायते. १३६

रक्षितव्यौ म या मासौ द्वौ पुरा योऽवधिः कृतः
ततः शयनमारोह मम त्वं वरवर्णिनि! १३७

आभ्यामूर्ध्वं ज नकजे! भर्तारं मामनिच्छतीम्
त्वां मम प्रातराशाय सूदाश्छेत्स्यंति खंडशः.' १३८

तां सीतां द य या देवगंधर्वतनयास्तदा
नेत्रैराश्वासयामासुस्तर्जितां तेन रक्षसा. १३९

आश्वासिता ज नकजा देवीभिरथ तं पुनः
उवाच, 'क्व गतो रामात्प्रभोरधम! मोक्ष्यसे १४०

वने हस्ती य था सिंहस्तथा रामो महामहाः
त्वं नीच! शशवच्छ्रेष्ठं क्षिपन्[2]निह न लज्जसे १४१

पापाविचा रा धम! ते न नेत्रे गलिते कथम्?
एवं व्याहरतः साध्वीं कथं जिह्वा न शीर्यति? १४२

भस्म त्वां पा म राद्याहं रामासंदेशतस्तथा
तपसः पालनाच्चापि न करोम्यात्मतेजसा. १४३

शूरो भ्राता श्री दुनाम्नो बलैः समुदितो वरैः

---

१. वरुणस्य. २. अधिक्षिपन् निंदन्.

त्वया राममपोह्यैवं दारचौर्यं कुतः कृतम्?' १४४

एवमुक्तो रा क्षसेंद्रो भृशं क्रुद्धोऽतिदुर्मतिः
उत्फाल्य नयने क्रूरे जानकीमन्ववेक्षत. १४५

'एवं पर म धृष्टे! त्वामर्थहीनमनुव्रते!
नाशयाम्यद्य वैदेहि! भृशं परुषभाषिणीम्. १४६

त्वं भद्रभा ज नं नासि दुर्वृत्तं बहु मन्यसे
श्रीमंतं मामनादृत्य गतश्रीकमनुव्रता १४७

वदस्यप्रि य मत्यर्थं प्रियवक्तारमीश्वरम्
वध्यासि मम निःशंकं कैव वक्तुमिहार्हति?' १४८

प्रोवाच घो रा बहुशो राक्षसीर्मांसभोजनाः,
'यथा मद्वशगा सीता क्षिप्रं भवति सर्वथा, १४९

तथाद्य सा म प्रमुखैरुपायैः कुरुताखिलाः.'
इत्याज्ञप्ता दशास्येन लोमहर्षणदर्शनाः. १५०

तथातिर ज सा व्याप्तं तर्जयंतं नृपात्मजाम्
तं धान्यमालिनी कांतं परिष्वज्येदमब्रवीत्. १५१

'मया क्रीड य थाकामं, सीतया किं तवानया?
विवर्णया कृपणया मानुष्या राक्षसेश्वर! १५२

नूनमेषा ज नकजा न महाभोगभाजनम्
अकामां कामयानस्य शरीरमुपतप्यते.' १५३

एवमुक्त्वा य शस्विन्या तयान्यत्रापसारितः .
प्रहसन्प्रस्थितो राजा प्रविवेश निवेशनम्. १५४

ता राक्षस्यो रा जकन्यां रावणाज्ञावशानुगाः
परं परुषया वाचा तर्जयंत्योऽब्रुवन्बहु. १५५

'पुलस्त्यस्य म हर्षेस्त्वं सूनोर्विश्रवसः स्नुषा
भवे'त्येकजटोवाच तथा हरिजटापरा १५६

'अत्यद्भुत श्री त्रिजगद्बलभोक्ता सुवंशजः
कुतो न रोचते भर्ता, किं त्वं प्रव्रजिते रता? १५७

भव भार्या रा जराजभ्रातुः प्रव्राजितं त्यज
अभिलाषो वरं दुग्धे मुग्धे कः कांजिके रसः. १५८
असकृद्धी म वीर्येण सुरगंधर्वदानवाः
निर्जिताः समरे येन स ते पार्श्वमुपागतः. १५९
तस्य त्वं भ ज तः सर्वां समृद्धिं जयतो जगत्
किमर्थं राक्षसेंद्रस्य भार्यात्वं नेच्छसेऽधमे १६०
दिवाकरो य स्य भयान्न तपत्यद्रयो जलम्
मुंचंति तरवः पुष्पं फलं वातो न वाति च, १६१
तं त्वं कथं रा क्षसेंद्रं दशास्यमवमन्यसे?'
'कामं खादत मां सर्वा, न करिष्यामि वो वचः. १६२
शक्रं पुलो म जादेवी श्रीवसिष्ठमरुंधती
तथाहमिक्ष्वाकुवरं रामं पतिमनुव्रता. १६३
सोऽस्तु भर्ता ज न्मजन्मन्यन्यं कांतं न कामये,
वामेनाप्यंघ्रिणा स्प्रष्टुं नाहमिच्छामि रावणम्.' १६४
एवं श्रुतं य दा वाक्यं राक्षस्यः क्रोधमूर्च्छिताः
भर्त्सयंति स्म परुषैर्वचनैस्तामनिंदिताम्. १६५
भर्त्स्यमाना ज नकजा राक्षसीभिः समंततः
रुदती शिंशपामूलं गत्वा तस्थौ तपस्विनी. १६६
विनताख्या, 'य दि त्वं नो वचनं न करिष्यसि
भक्षयिष्यामहेऽद्य त्वामि'त्युवाचातिनिर्दया. १६७
ता राक्षस्यो रा जपुत्रीं भर्तुर्विप्रियकारिणीम्
'त्वां मारयाम' इत्यूचुर्लोमहर्षणदर्शनाः १६८
विकटा ना म तामाह, 'भर्तारं रावणं भज
नो चेदुपात्स्य हृदयं भक्षयिष्याम्यहं तव.' १६९
एवं क्रूराः श्री मतीं तामन्याश्चोचुः सुदारुणम्
हंतव्या राक्षसेंद्रस्य यदाज्ञाभंगकारिणी. १७०
कुंडोदरी रा क्षसखी प्राह, 'मे दोहदो महान्

खादेयमस्या हृदयं कोमलायाः सबंधनम्.' १७१
विघसा ना म दुर्वृत्ता तदोवाच भयंकरम्,
'कंठमस्या नृशंसायाः पीडयामः किमास्यते? १७२
मृतेति र ज नीचर्यो! रावणाय निवेद्यताम्
ततोऽसंशयमेवास्मान् खादतेति स वक्ष्यति.' १७३
ततो निर्द य मश्राव्यमत्यंतं लोमहर्षणम्
उवाचाजामुखी, 'पिंडान्कुरुतेमां विशस्य तान्. १७४
यथायथं रा क्षसीभ्यः सर्वाभ्योऽपि विभागशः
विभजामानया मोघो विवादो मे न रोचते.' १७५
'आनीयता म द्य मद्यमि'ति शूर्पणखाब्रवीत्,
'भुक्त्वा पीत्वा च नृत्याम स्तुत्वा देवीं निकुंभिलाम्.'
निर्भर्त्सिता ज गत्पूज्या ताभिरेवं तदा भृशम्
सा बालारुदत्यार्ता प्रत्युवाच च ताः पुनः, १७७
'नरी न न्या य तो रक्षोभार्या भवितुमर्हति,
कामं खादत मां सर्वा, न करिष्यामि वो वचः.' १७८
उष्णैर्नेत्र ज लैः सीता स्नापयंती पयोधरौ
अशोकशाखामालंब्य वेपमानारुदद्भृशम्. १७९
'हा राम! प्रि य हा! सौम्य! सौमित्रे! गुरुवत्सल!
हा कौसल्ये! हा सुमित्रे!' इति सीता रुरोद सा. १८०
'पीडितायां रा क्षसीभिर्वियुक्तायाः प्रियेण मे
न ह्यस्ति जीवितेनार्थो मर्तुमप्यत्र दुर्घटम्. १८१
हृदयं म म येनेदं न दुःखेन विशीर्यते
अश्मसारमयं नूनमथवाप्यजरामरम्. १८२
ख्यातः पूज्यः श्री मद्भिरीड्यः[२] सानुक्रोशश्च राघवः
कृतज्ञोऽप्यदयो जातः शंके मद्भाग्यसंक्षयात्. १८३
निरुद्धाहं रा वणेन स्वल्पवीर्येण पापिना

---

१. छित्त्वा. २. श्रीमद्भिः ईड्यः (स्तुत्यः).

समर्थः खलु मे भर्ता नेहस्थां मां स बुध्यते. १८४

कामं लंका म हादुर्गं वारिधौ दुष्प्रधर्षणम्
न तु राघवबाणानां गतिरोधो भविष्यति. १८५

राक्षसानां ज नस्थाने सहस्राणि चतुर्दश
एकेनैव निरस्तानि स मां किं नाभिपद्यते? १८६

इहस्थां मां य शस्वींद्रो न जानीते रघूत्तमः
जानन्न खलु तेजस्वी धर्षणां मर्षयिष्यति. १८७

वृत्तं वक्ता रा घवाय यो गृध्रः श्वशुरो मम
पापेन रक्षसा सोऽपि मत्समक्षं रणे हतः. १८८

वर्तमाना म त्र चेन्मां जानीयाद्रघुनंदनः
लंकां महोदधिं चापि निर्दहेदस्त्रतेजसा. १८९

करोमि नि ज नाथेन रहिता रोदनं यथा
मत्तोऽधिकं करिष्यंति राक्षस्योऽत्र गृहे गृहे.' १९०

सीतां ता भू य एवोचुरनार्ये! पापनिश्चये!
राक्षस्यो भक्षयिष्यन्ति तव मांसमसंशयम्.' १९१

[१]राक्षसीस्त्रि ज टा वृद्धा प्रबुद्धा वाक्यमब्रवीत्
सीतां ताभिरनार्याभिर्दृष्ट्वा संतर्जितां तदा, १९२

'अनार्या यू य मात्मानं खादतार्या न जानकीम्
भक्षयिष्यथ दृष्टो हि मया स्वप्नोऽद्य दारुणः.' १९३

स्वप्नं पृष्टा रा क्षसीभिः कथयामास साथ तम्,
'राक्षसानामभावाय सीताभर्तुर्भवाय यः १९४

अद्य स्वप्ने म या दृष्टः शुक्लमाल्यानुलेपनः
रामः श्वेतगजारूढः शुक्लवासाः सलक्ष्मणः १९५

सीता च सु श्री रारूढा श्वेताद्रिं सिंधुवेष्टितम्
मुक्ता शुक्लांबरधरा शुक्लमाल्यानुलेपना. १९६

ततश्चेयं रा जपुत्री रामेण सह संगता

---

१. द्वितीयाबहुवचनमिदम्.

आरूढा पुष्पकं यानं प्रस्थिता चोत्तरां दिशम्. १९७

रावणश्च म या स्वप्ने दृष्टो रक्तस्रगंबरः
प्रस्थितः खरयानेन राक्षसैर्दक्षिणां दिशम्. १९८

दशास्यात्म ज वर्गश्च कुंभकर्णश्च तद्विधः
उष्ट्रारूढा गताः सर्वे सचिवा दक्षिणां दिशम्. १९९

एक एव य था रामः श्वेतच्छत्रो बिभीषणः
चतुर्भिः सचिवैर्दृष्टो मया स्वप्ने वियद्गतः. २००

लंका सार्ध रा त्रिचरैर्मुंडै रक्तस्रगंबरैः
सागरे पतिता दृष्टा भग्नगोपुरतोरणा. २०१

आगसाल म लं प्रोक्ता मयोपरमत द्रुतम्
पश्यध्वं न चिरादेनां सीतां प्राप्नोति राघवः. २०२

रामस्तीर्त्वा ज लनिधिं दयितादुःखदायिनीः
घातयेत्परमामर्षी युष्मान्सह निशाचरैः. २०३

महद्धो भ य मागामि तद्वलं परुषोक्तिभिः
अभियाचाम वैदेहीमेतद्धि मम रोचते. २०४

सर्वा यूयं ज नकजां भर्त्सितामप्यसाध्वसम्
याचध्वं रक्षसां घोरं भयं रामादुपस्थितम्. २०५

कुलजा द य या पूर्णा प्रसन्ना प्रणिपाततः
अलमेषा परित्रातुं राक्षस्यो महतो भयात्. २०६

वाममस्या रा जपुत्र्याः स्फुरच्चक्षुः प्रदृश्यते
कंपते बाहुरूरुश्च दक्षिणाया ह्यदक्षिणः २०७

पक्षी चोत्त म सामोक्तिः पुनःपुनरिमां सतीम्
आगतं शोभनं प्रत्युद्गच्छेति प्रेरयन्निव.' २०८

तां ह्रीमती श्री मती सा भर्तुर्विजयहर्षिता
उवाच, 'यदि तत्तथ्यं भवेयं शरणं हि वः.' २०९

पुनश्च सा रा जकन्या विलप्य बहुदुःखिता
जग्राह वेण्युद्ग्रथनं शाखां तस्य द्रुमस्य च. २१०

विषं शस्त्रम लभ्यं मे कंठमुद्बध्य जीवितम्
त्याज्यामित्यकरोद्बुद्धिं यावच्छोकाकुला सती. २११

तावत्पंकज पत्राभमस्फुरद्वाममीक्षणम्
भुजश्चोरुश्च तेनाशु पुनर्धैर्यमवाप सा. २१२

स आंजनेय स्तत्सर्वं दृष्ट्वा श्रुत्वा महामतिः
चिंतां चकार बहुधा सीतां दृष्ट्वा प्रहर्षितः. २१३

'यदि ह्यहं रा मरामां शोकोपहतचेतनाम्
अनाश्वास्य गमिष्यामि दोषवद्गमनं भवेत्. २१४

इतो गते म यि स्पष्टं शोकार्तेयं नृपात्मजा
परित्राणमपश्यंती सर्वथा जीवितं त्यजेत्. २१५

अत्रैव र ज नीशेषे कार्यमाश्वासनं मया
निशाचरीणां प्रत्यक्षमक्षमं चाभिभाषितुम्. २१६

पृच्छेद्रामो य दि स मां किं मां सीताब्रवीदिति
किमहं तं प्रति ब्रूयामसंभाष्य सुमध्यमाम्. २१७

रक्षणीया ज नकजा रामस्य कुशलोक्तिभिः
कथं नु खलु कर्तव्यं महत्कृच्छ्रगतो ह्यहम्? २१८

करोमि कं य त्नमहं किं कृत्वा सुकृतं भवेत्
रामलक्ष्मणसुग्रीवप्रसादः प्राप्यते कथम्? २१९

आसाद्याहं रा क्षसीनामंतरं[१] मानुषीं गिरम्
उदाहरिष्याम्येवं सन्नतिसूक्ष्मतनुः कपिः. २२०

मां रावणं म न्यमाना सीता भीता भविष्यति
यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्. २२१

अथवा तं श्री मदाख्यं श्रीराममनुकीर्तयन्
नैनामुद्वेजयिष्यामि सीतां तद्गतमानसाम्.' २२२

इति कृत्वा रा जदूतो मतिं मतिमतां वरः
समीपदेशे मधुरं वचनं व्याजहार सः. २२३

---

१. अनवधानसमयम्.

गुणानुत्त म शीलस्य सख्युर्वज्रभृतोऽतुलान्
राज्ञो दशरथस्यादौ वर्णयामास मारुतिः. २२४

तस्य चात्म ज मुख्यस्य श्रीरामस्य जगत्पतेः
लक्ष्मणस्य महाबुद्धेर्जनकस्य च धीमतः २२५

यत्संप्राप्तं य शश्चार्घ्यं त्यक्ते राज्ये गुरोर्गिरा
जगौ जनस्थानवासिरक्षःकदनमद्भुतम्. २२६

तस्या देव्या रा वणेन हरणं सोऽन्वकीर्तयत्
सुग्रीवेण ततः सख्यं बलिनो वालिनो वधम्. २२७

तदप्रति म सत्त्वौजाः सीतायाः परिमार्गणम्
आत्मना लंघनं सिंधोः सुग्रीवस्य निदेशतः. २२८

कीर्तयित्वा ज गादाथ, 'शनैर्दृष्टेयमीश्वरी
धन्योऽहं कृतकृत्योऽस्मि रामस्यैव प्रसादतः.' २२९

तच्छ्रुत्वा प्रि य मत्यंतं प्रथमं मुदिताभवत्
दृष्ट्वा कपिं ततः सीता भीता रावणशंकया. २३०

सोऽवतीर्या ज नासूनुर्विद्रुमाभाननो द्रुमात्
विनीतवेषः कृपणः प्रणिपत्योपसृत्य च. २३१

उवाचाधा य स शिरस्यंजलिं मधुरां गिरम्,
'का त्वं पद्मपलाशाक्षि क्लिष्टकौशेयवासिनि![1] २३२

तिष्ठस्युदा रा वृक्षस्य शाखामालंब्य भामिनि!
किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम्? २३३

किन्नु चंद्र म सा हीना पतिता विबुधालयात्
रोहिणी वारुंधती त्वं वसिष्ठांकपरिच्युता. २३४

जनकस्य श्री मती त्वं सुतेति प्रतिभासि मे
त्वां रामदयितां मन्ये तन्नामग्रहणादहम्. २३५

पंचवट्या रा वणेन बलात्प्रमथिता यदि
सीता त्वमसि भद्रं ते तन्ममाचक्ष्व पृच्छतः.' २३६

---

१. मलिनवस्त्रधारिणि!

सीतोवाच, 'म नुष्येंद्रो राजा दशरथः प्रभुः
तस्य स्नुषाहं रामस्य भार्या जनकनंदिनी. २३७

रावणेन ज नस्थानाद्धृताहं वत्स! मायया
द्वौ मासौ तेन मे कालो जीवितानुग्रहः कृतः. २३८

तन्मासद्व य तः पश्चादहं त्यक्ष्यामि जीवितम्.'
तच्छ्रुत्वा तां महाबुद्धिः सांत्वमुत्तरमब्रवीत्, २३९

'आज्ञयाहं रा घवस्य देवि! दूत इहागतः
वैदेहि! कुशली रामः स त्वां कौशलमब्रवीत्. २४०

लक्ष्मणश्च म हातेजा भर्तुस्तेऽनुचरः प्रियः
कृतवांच्छोकसंतप्तः शिरसा तेऽभिवादनम्.' २४१

तच्छ्रुत्वा सा ज नकजा संप्रहृष्टेदमब्रवीत्,
'एति जीवंतमानंदो नरं वर्षशतादपि. २४२

सत्या गाथे य मद्यांग! लौकिकी प्रतिभाति मे.
यत्त्वां पश्यामि कुशलं कथयंतं प्लवंगम!' २४३

इत्युक्त्वा सा ज नकजा पुनः शंकान्विताभवत्
समीपमागतं दृष्ट्वा तममन्यत रावणम्. २४४

वंदमानं य तात्मानं दीर्घमुच्छ्वस्य साब्रवीत्,
'रावणस्त्वमसि त्रासमुत्पादयसि मे पुनः.' २४५

अथवा त्वं रा घवस्य दूत एवासि वानर!
मनसो हि मम प्रीतिरुत्पन्ना तव दर्शनात्. २४६

यदि श्रीरा म दूतस्त्वमागतो भद्रमस्तु ते.
मम प्रियस्य रामस्य गुणान् कथय वानर!' २४७

गुणान् कपिः श्री रामस्य रूपं च सुमनोहरम्
सौमित्रेरपि सद्बुद्धिर्वर्णयामास तत्त्वतः. २४८

गुणान् श्रुत्वा रा घवयोर्लक्षणानि च सा पुनः
पप्रच्छ, 'सख्यं क्व कथं रामेण भवतामि'ति. २४९

स प्लवंग म नाथेन सुग्रीवेण समागमम्

विस्तरात्कथयामास मतिमान्मारुतात्मजः. २५०

स्वं च प्रभं ज नसुतं सुग्रीवसचिवं प्रियम्

कथयित्वा कविः शंकां तस्याश्चितामपानुदत्. २५१

'त्वद्भर्तुः प्रि य कृद्देवि ! सखा सर्वकपीश्वरः

महाप्रतापः सुग्रीवः स त्वां कौशलमब्रवीत्. २५२

सर्वान् रणे रा त्रिचरान् हत्वा सदशकंधरान्

अचिरात्त्वामितो देवि ! नेता जेता द्विषां प्रभुः. २५३

प्रबलाः स म रं कर्तुं वानरा मानराशयः

अत्रागमिष्यंत्यचिरात्सुग्रीवेण सहामिताः. २५४

संपातिना ज टायोस्त्वमग्रजेन निवेदिता

शतयोजनमंभोधिं तीर्त्वैकोऽहमिहागतः. २५५

रामांगुली य मेतत्त्वं गृहाणार्ये ! तदर्पितम्.'

इत्युक्त्वा स ददौ मुद्रामंजलौ धरणीभुवः. २५६

तद्गृहीत्वा ज नकजा प्रेक्षमाणांगुलीयकम्

भर्तारमिव संप्राप्ता मुदिताभूदथाब्रवीत्. २५७

'कुशली स य दि श्रीमान्सानुजो रघुसत्तमः

किं नु क्षितिं न दहति प्रलयाग्निरिवोत्थितः. २५८

शक्तिमंतौ रा घवौ हि सुराणामपि निग्रहे

ममैव तु न दुःखानामस्ति मन्ये विपर्ययः. २५९

कच्चिन्न प्रे म रहितो विवासान्मयि राघवः?

कच्चिन्मां व्यसनादस्मात्काकुत्स्थो मोचयिष्यति?' २६०

उवाच तां श्री हनुमान्, 'इहस्थां त्वां न वेत्ति सः

तेन त्वां नानयत्याशु शचीमिव पुरंदरः. २६१

श्रुत्वोक्तं मे रा घवस्त्वां क्षिप्रमेष्यति सानुजः

चमूं प्रकर्षन्महतीं हर्यृक्षगणसंयुताम्. २६२

करिष्यति म नुष्येंद्रो लंकां निहतराक्षसाम्

---

१. इतः सप्त श्लोकाः परलिखिताः सन्ति.

विष्टंभयित्वा बाणौघैरक्षोभ्यं वरुणालयम्. २६३

अदर्शन ज शोकेन राघवः परिपूरितः
न शर्म लभते सीते! सिंहार्दित इव द्विपः. २६४

यथा सुन य नं वक्त्रं पत्युर्द्रक्ष्यसि सत्वरम्
तथा शपे मंदरेण विंध्येन मलयेन च. २६५

नैव मांसं रा मभद्रो भुंक्ते मद्यं न सेवते
वन्यं विहितमश्नाति भक्तं[1] काले स पंचमे[2]. २६६

न दंशजं म शकजं स्पर्शं जानाति राघवः
अहीन्नापनयत्यंगात्त्वद्गतेनांतरात्मना. २६७

रामोऽनिद्रोऽज स्रमेव सुप्तोऽपि च कदाचन
सीतेति मधुरां वाणीं व्याहरन् प्रतिबुध्यते.' २६८

तमुवाचा य ताक्षी सा, 'यावदेव न पूर्यते
अयं संवत्सरः कालस्तावद्धि मम जीवितम्. २६९

मासोऽयमं ज नासूनो! वर्तते दशमः खलु
रावणेन नृशंसेन ममैष समयः कृतः. २७०

बिभीषणो य त्नपरो मम प्रत्यर्पणं प्रति
तेनानुनीतो दिक्तुंडो[3] न च तन्मन्यते खलः. २७१

न रोचते रा वणस्य मम प्रत्यर्पणं कपे!
अविध्यस्यापि सद्बुद्धे[4]र्वचो न कुरुते हृदि. २७२

या कला ना म सुमतिर्बिभीषणसुता कपे!
तया ममैतदाख्यातं माला प्रहितया स्वयम्.' २७३

अथोवाच श्री मतीं तां वायुसूनुर्विचक्षणः,
'सीते! श्रुत्वैव मद्वाक्यं क्षिप्रमेष्यति राघवः. २७४

अथवा त्वां रा जकन्ये! मोचयिष्यामि दारुणात्

---

१. ओदनम्. २. प्रातः सायं प्रातः सायं इति कालचतुष्टयं त्यक्त्वा पंचमे प्रातःकाले इत्येवं प्रकारेण दिनद्वयमतीत्य भुंक्ते इत्यर्थः ३. दिक्सख्यांकानि तुंडानि यस्य सः दशाननः ४. बुद्धेः.

अस्माद्दुःखादुपारोह मम पृष्ठमनिंदिते ! २७५

सरावणा म पि पुरीं वोढुं शक्तिर्ममास्ति हि,
प्रापयिष्यामि रामाय त्वामद्यैव नृपात्मजे !' २७६

सीतोवा'चां ज नासूनो ! कपित्वमुचितं तव
कथमल्पशरीरस्त्वं मामितो नेतुमिच्छसि ?' २७७

तस्याः प्रत्य य हेतोः स मेरुमंदरसन्निभम्
स्वाकारं दर्शयामास तं दृष्ट्वोवाच जानकी, २७८

'वत्स ! वायो रा त्मजस्त्वं गतिर्दीप्तिश्च तेऽद्भुता
प्राकृतोऽन्यः कथं चेमां भूमिमागंतुमर्हति ? २७९

अयुक्तं तु म या गंतुं कपिश्रेष्ठ ! त्वया सह
भवतो वायुवेगस्य वेगो मां मोहयिष्यति. २८०

प्रपतेयं ज लनिधौ पृष्ठाद्वेगवतस्तव
भवेयमाशु विवशा यादसामन्नमुत्तमम्. २८१

नाहमिच्छे य मन्यस्य गात्रं स्प्रष्टुं स्वतः कपे !
अनीशा चाप्यनाथा च रक्षःस्पर्शं तदा गता. २८२

यदि रामो ज गन्नाथो हत्वेह दशकंधरम्
मामितो गृह्य गच्छेत तत्तस्य सदृशं भवेत्.' २८३

स आंजने य स्तामाह, 'त्वयोक्तं शुभदर्शने !
सदृशं स्त्रीस्वभावस्य साध्वीनां विनयस्य च. २८४

अभिज्ञानं रा जपुत्रि ! प्रयच्छ त्वमपि प्रभोः
येन प्राप्तप्रत्ययं सत्प्रसन्नं भविता मनः.' २८५

देव्युवाच, 'म हेंद्रस्य पुत्रः काकः स मां पुरा
चित्रकूटेऽसकृत्तात ! दारयामास दुर्मतिः. २८६

ब्रह्मास्त्रेण श्री मताशु दर्भे संयोज्य मारुते !
प्रक्षिप्ते वायसस्त्रस्तस्त्रिजगत्सु परिभ्रमन्. २८७

स त्राणमा रा जनकादीश्वरात्परमेष्ठिनः
अप्राप्य शरणं रामं प्राप्तो मुक्तोऽक्षिहानतः. २८८

एतदेक म भिज्ञानमिमं चूडामणिं च मे
नय दर्शय रामाय सत्यप्रत्ययकारकम्.' २८९

एवमुक्तोऽ ज नासूनुर्नत्वा तां विश्वमातरम्
मणिमाशिषमादाय गमनायोपचक्रमे. २९०

तमुवाचा य ताक्षी सा बाष्पगद्गदया गिरा,
'हनूमन्कुशलं ब्रूयाः सहितौ रामलक्ष्मणौ. २९१

प्लवंगवी रा धिपतिं सुग्रीवं सचिवैर्युतम्
वृद्धान्त्सर्वान्कपींश्चापि ब्रूयास्त्वं कुशलं कपे! २९२

यथा च स म हाबाहुर्मां तारयति राघवः
अस्माद्दुःखांबुधेः शीघ्रं त्वं तथा कर्तुमर्हसि. २९३

प्लवंगमा ज लनिधिं तारिष्यंति कथं नु ते?
तारिष्यतः कथं तौ च दुस्तरं रामलक्ष्मणौ?' २९४

तदांजने य स्तामाह सुग्रीवो वानरेश्वरः
सखा रामस्य सत्वाढ्यस्तवार्थे कृतनिश्चयः. २९५

कोटिशस्ते ज सा पूर्णाः सत्त्ववंतो महाबलाः
मनःसंकल्पसंपाता[1] निदेशे तस्य वानराः. २९६

मत्तुल्यास्ते य त्नशीला मद्विशिष्टाश्च वानराः
मत्तः कोऽपि न हीनोऽयमहं तावदिहागतः. २९७

किं पुनस्ते रा ज्ञि! वीरा महाबलपराक्रमाः
न हि प्रकृष्टाः प्रेष्यंते प्रेष्यंते हीतरे जनाः. २९८

एष्यंति ते म हाल्लंकामेकोत्पातेन जानकि!
मम पृष्ठगतौ तौ च नृसिंहावागमिष्यतः २९९

त्वां नेष्यतः श्री मदीशौ हत्वा रावणमाहवे
शपे सत्येन ते देवि! लंकां भस्मीकरिष्यतः. ३००

इत्युक्त्वा तां रा जसुतां नत्वा निर्गत्य मारुतिः
बभंज तद्वनं कर्तुं युद्धं द्रष्टुं दशाननम्. ३०१

---

१. मनःसंकल्पवत् अतिदूरोत्पतनशीलाः.

राक्षसीनां म हद्रूपं स चकार भयावहम्.
तास्तं दृष्ट्वा महाकायं पप्रच्छुर्जनकात्मजाम्. ३०२
'कोऽयं जल ज पत्राक्षि ! किंनिमित्तमिहागतः
संवादश्च कृतोऽनेन त्वया तत्कथयाखिलम्.' ३०३
उवाच न्या य निपुणा रक्षसां कामरूपिणाम्,
'विज्ञाने मम का शक्तिर्नैव जानामि को ह्ययम्. ३०४
भीतास्म्येनं रा त्रिचरं वेद्म्यहं कामरूपिणम्
यूयमेवास्य जानीत योऽयं यद्वा करिष्यति. ३०५
अहिरेव म तो ज्ञातुमहेः पादाश्च संशयः.'
इत्युक्तास्तास्ततो भीता राक्षस्यो रावणं गताः. ३०६
शशंसू र ज नीचर्यो, 'वानरः कश्चिदागतः.
जानक्या कृतसंवादस्तिष्ठत्यमितविक्रमः. ३०७
राजन् ! सा तो य जाक्षी तं प्लवगं कृतसाहसम्
नास्माभिर्बहुधा पृष्टा निवेदयितुमिच्छति. ३०८
शक्रस्य रा ज राजस्य दूतो वायं महाबलः
प्रेषितो वापि रामेण सीतान्वेषणकांक्षया. ३०९
तेनैवाद्य य दत्यंतं प्रियं तव मनोहरम्
नानामृगखगाकीर्णं नाशितं प्रमदावनम्. ३१०
तस्मिन्वने रा क्षसेंद्र ! प्रदेशो नाशितोऽखिलः
यत्र सा जानकी देवी स एकोऽनेन रक्षितः.' ३११
तच्छ्रुत्वा स म हातेजा रावणो राक्षसेश्वरः
चिताग्निरिव जज्वाल कोपसंवार्तितेक्षणः. ३१२
लोचनाभ्यां श्री दशग्रीवः प्रापतन्नश्रुबिंदवः
दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिंदवः. ३१३
किंकराख्यान् रा क्षसान् स व्यादिदेश महाबलान्
भवनात्तेऽयुतान्यष्टौ निर्ययुर्विविधायुधाः. ३१४
स प्लवंग म शार्दूलः पुच्छमाविध्य भूतले,

'जयत्यतिबलो रामो लक्ष्मणश्च महाबलः. ३१५
स सुग्रीवो ज य ति नो राजा रामेण पालितः
दासोऽहं कोसलेंद्रस्य हनूमान्मारुतात्मजः. ३१६
अहं निर्भ य एवास्मि शिलावृक्षनखायुधः
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत्. ३१७
अर्दयित्वा रा क्षसानां पुरीं नत्वा च मैथिलीम्
समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम्.' ३१८
एवं तस्य म रुत्सूनोर्गर्जतो ध्वनिना खगाः
निपेतुर्नभसस्त्रस्तास्तेऽभवन्खलु किंकराः. ३१९
किंकरास्तेऽ ज नासूनुमभिपेतुरितस्ततः.
स तैः परिवृतः शूरैः सर्वतः सुमहाबलः. ३२०
आससादा य सं भीमं परिघं तोरणाश्रितम्
घोरं परिघमादाय जघान रजनीचरान्. ३२१
छिन्नाः क्षत ज दिग्धांगा हतशेषा निशाचराः
निहतान् किंकरान्सर्वान् रावणाय न्यवेदयन्. ३२२
प्रहस्तका य जं राजा प्राहिणोज्जंबुमालिनम्
अत्रांतरे कपिर्भंक्त्वा चैत्यप्रासादमद्भुतम्. ३२३
चैत्यस्तंभं रा मदूतो गृहीत्वा हंतुमागतान्
चैत्यपालान् शतं तेन जघान रजनीचरान्. ३२४
विश्राम्य ना म कार्यं[1] च जंबुमालिनमागतम्[2]
प्रगृह्य परिघं घोरं तं जघानानिलात्मजः. ३२५
तदाकर्ण्य श्री दबंधुः सप्तान्यान् मंत्रिनंदनान्
प्रेषयामास सबलान् स तानपि यमक्षयम्. ३२६
सेनापतीन् रा क्षसेंद्रो दुर्धरप्रमुखांस्ततः
पंच प्रहितवान् क्रुद्धः समरे दृष्टविक्रमान्. ३२७
जघान स म रे! तानप्यतितेजा मरुत्सुतः

---

१. पश्यताम्. २. प्रहस्तपुत्रम्.

कुमारमक्षं च ततश्चोदयामास रावणः. ३२८

अक्षमप्यं ज नापुत्रो धृत्वा चरणयोर्बलात्
आविध्य व्योम्नि चिक्षेप व्यसुं तार्क्ष्य इवोरगम्. ३२९

ज्येष्ठं तन य मिंद्रस्य जेतारं रावणस्ततः
मारुतेः प्रेषयामास निग्रहायास्त्रविद्वरम्. ३३०

स तेजस्वी रा क्षसेंद्रं नत्वा कृत्वा प्रदक्षिणम्
व्यालैश्चतुर्भिर्युक्तं स्वं रथमारुह्य निर्ययौ. ३३१

इंद्रजित्स म रश्लाघी मारुतिश्च महाबलः
यक्षसिद्धर्षयो द्रष्टुं तयोर्युद्धं समागताः. ३३२

समेतावं ज नामंदोदरीपुत्रौ महाबलौ
सुरासुरेंद्राविव तौ बद्धवैरौ विशारदौ. ३३३

अवध्यं सं य ति ज्ञात्वा ब्रह्मास्त्रेणेंद्रजित्कपिम्
बबंधाथ स निश्चेष्टोऽभवद्भुव्यपतत्तदा. ३३४

मारुतिः कं ज जास्त्रं तद्बुद्ध्वात्मनि कृतास्पदम्
मुहूर्तमात्रान्मुक्तिं च ज्ञात्वासीन्मिषविह्वलः. ३३५

'नैवास्ति भ य मस्त्रान्मे बद्धस्यैषदपि स्फुटम्
पितामहमहेंद्राभ्यां रक्षितस्यानिलेन च. ३३६

ग्रहणेऽथो रा क्षसैश्च महन्मे गुणदर्शनम्
राक्षसेंद्रेण संवादस्तस्माद्गृह्णंतु मां परे. ३३७

निश्चितार्थं म नस्येवं बबंधुः शणरज्जुभिः[१]
स मुक्तोऽस्त्रेण, सहते नास्त्रबंधोऽन्यबंधनम्. ३३८

ना सा जय श्री रिति तं दृष्ट्वा बद्धं निशाचरैः
मेने मनस्यगाच्चिंतामस्त्रतत्त्वविदिंद्रजित्. ३३९

स राक्षसै रा वणस्य समीपं हृष्टमानसैः
क्षिपद्भिस्ताडयद्भिश्च प्राकृष्यत कुबुद्धिभिः. ३४०

इंद्रजित्तं म हावीर्यमस्त्रमुक्तं प्लवंगमम्

---

१. शणः तृणविशेषः.

रज्जुबद्धं रावणाय सगणाय व्यदर्शयत्. ३४१

दृष्ट्वा तं रा ज राजस्य भ्रातरं कपिपंडितः
मनसा चिंतयामास तेजसा तस्य मोहितः. ३४२

'अस्मिन्नेको य द्यधर्मो न स्याद्राक्षसनायके
स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता.' ३४३

प्रहस्तस्तं रा वणस्य निदेशादिदमब्रवीत्,
'समाश्वसिहि भद्रं ते न भीः कार्या त्वया कपे! ३४४

प्रेषितोऽसि म हेंद्रेण कुबेरेण यमेन वा
वरुणेनालयं राज्ञो दूतस्त्वं विष्णुनाथवा. ३४५

नैव त्वं ते ज सा भासि रूपमात्रेण वानरः
मोक्षः सत्यादसत्यात्तु दुर्लभं तव जीवितम् ३४६

रावणाल य एतस्मिन्प्रवेशोऽद्य त्वया कपे!
किंनिमित्तः कृतो ब्रूहि तत्वतो, मोक्षसे[1] ततः.' ३४७

अब्रवीदं ज नापुत्रस्तदा रक्षोगणेश्वरम्
तेजसा भगवान्नंदी बाणो वेति विशंकितम् ३४८

'न शक्रस्य य मस्याहं श्रीदस्य वरुणस्य वा
जात्यैव कश्चित्प्लवगो विष्णुना नास्मि चोदितः. ३४९

अत्रागतो रा वणस्य दर्शनार्थमहं कपिः
तदिदं दुर्लभं, तेन नाशितं प्रमदावनम्. ३५०

रक्षोभिस्तु म या युद्धं रक्षार्थं कृतमात्मनः
त्वामेव द्रष्टुकामेन ब्रह्मास्त्रमनुवार्तितम्. ३५१

तवांतिकं श्री रामस्य कार्येणाहमिहागतः
प्रेषितोऽस्मि हरींद्रेण सुग्रीवेण महात्मना. ३५२

स त्वां भ्राता रा क्षसेंद्र! स्वयं कुशलमब्रवीत्
भ्रातुः शृणु समादेशमिह चामुत्र च क्षमम्. ३५३

हरेः सखा म हातेजा राजा दशरथः श्रुतः

---

१. मोक्ष्यसे.

तस्य ज्येष्ठः सुतो रामः प्रभुः सत्यपराक्रमः. ३५४

तस्य प्रिया ज नकजा लक्ष्मणस्तत्समोऽनुजः
स ताभ्यां दंडकारण्यमागतः पितुराज्ञया. ३५५

तद्भार्या प्र य ता नष्टा जनस्थाने पतिव्रता
सानुजो मार्गमाणस्तामृष्यमूकाद्रिमागतः ३५६

सलक्ष्मणो रा मभद्रः सुग्रीवेणाथ संगतः
तस्य तेन प्रतिज्ञातं सीतायाः परिमार्गणम्. ३५७

सुग्रीवस्य म नुष्याणामिंद्रेणापि महात्मना
राघवेण प्रतिज्ञातं हरिराज्यं निवेदितुम्. ३५८

प्रभुणा रा ज पुत्रेण हत्वा वालिनमाहवे
सुग्रीवः स्थापितो राज्ये हर्यक्षाणां[*] गणेश्वरः. ३५९

प्रभुणा सं य ति हतः शरेणैकेन रावण!
त्वया विज्ञातपूर्वः स वाली वानरपुंगवः. ३६०

तामन्वेष्टुं ज नकजां कोटिशः सत्यसंगरः
हरीन्संप्रेषयामास दिशः सर्वा हरीश्वरः. ३६१

अहं तु प य सां राशिं शतयोजनमायतम्
लंघयित्वा प्रभोर्भार्यां तां दिदृक्षुरिहागतः ३६२

भ्रमता सा रा ज कन्या दृष्टा तव गृहे मया
परदारान्महाप्राज्ञो नोप[1]रोध्धुं त्वमर्हसि. ३६३

सतामसं म ते घोरे सर्वधर्मार्थनाशके
न हि कर्मणि सज्जंते बुद्धिमंतो भवद्विधाः. ३६४

राघवस्य श्री मतः को लक्ष्मणस्य च धीमतः
शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि. ३६५

यो ऽ[2]प्यलीकं रा घवस्य कृत्वा सुखमवाप्नुयात्
राजंस्त्रिष्वपि लोकेषु विद्यते न स कश्चन. ३६६

तद्रावण! म या प्रोक्तं त्रिकालहितमर्थवत्

---

१. नोपरोद्धुम्. २. अप्रियम्. * हर्यृक्षाणाम्.

धर्म्यं मन्यस्व वचनं जानकी प्रतिदीयताम्. ३६७
नेयं शक्या ज रयितुं सासुरैरमरैरपि
विषसंपृक्तमत्यर्थं भुक्तमन्नमिवौजसा. ३६८
अवध्यत्वं य दप्यस्ति धर्मस्तत्र हि कारणम्
तस्मात्त्वया धर्महानिर्न कार्या राक्षसाधिप! ३६९
जनस्थाने रा क्षसानां विनाशं वालिनस्तथा
रामसुग्रीवसख्यं च बुद्ध्वा त्वं स्वहितं कुरु. ३७०
एकः काम म हं लंकां शक्तो नाशयितुं खलु
प्रभोराज्ञां विना नैतन्मया कार्यं दशानन! ३७१
प्रतिज्ञातं ज नेंद्रेण हर्यक्षगणसंनिधौ[2]
उत्सादनममित्राणां जानकी यैः प्रधर्षिता. ३७२
त्वद्गृहे ये य मानीता रुद्धा तिष्ठति रावण!
कालरात्रीति तां विद्धि सर्वलंकाविनाशिनीम्. ३७३
अपकुर्वन् ज गद्भर्तुः साक्षादपि पुरंदरः
न सुखं प्राप्नुयादन्यः किं पुनस्त्वद्विधो जनः ३७४
जगतां त्र य मप्येतद्राजन्! संहृत्य लीलया
पुनरेव तथा स्रष्टुं शक्तो रामो महाबलः. ३७५
सलक्ष्मणं रा घवं यः प्रतियुध्येत रावण!
सर्वथा सर्वभूतेषु सर्वकालेषु नास्ति सः ३७६
विष्णुना स म शीलस्य कृत्वा विप्रियमीदृशम्
रामस्य राजसिंहस्य दुर्लभं तव जीवितम्.' ३७७
वातसूनोः श्री मतस्तच्छ्रुत्वा वचनमुद्धतः
आज्ञापयद्वधं तस्य रावणः क्रोधमूर्छितः ३७८
बिभीषणो रा क्षसेंद्रं वारयामास सूक्तिभिः.
'दूतोऽवध्यो महाराज क्षमस्वे'ति पुनःपुनः. ३७९
'प्रेषितोऽथ म तिक्रूरो यैर्दूतो राक्षसेश्वर!

१. आहारशक्तिबलेन. २. हर्यृक्षगणसंनिधौ.

तेष्वेव पात्यतां दंडो न कोऽप्यस्य वधे गुणः. १८०

युद्धायोद्यो ज येदेव तावयं रामलक्ष्मणौ
युद्धप्रिय महाराज! जीवत्यस्मिन् महान्गुणः.' १८१

तन्मनःप्रि य माकर्ण्य भ्रातुर्वाक्यमथाब्रवीत्
' कपीनां किल लांगूलमिष्टं भवति दारुणम्. १८२

तदस्य वी रा द्य कपेर्दीप्यतां दुर्मतेर्द्रुतम्
स्वस्वामिनिकटं पापस्तेन दग्धेन गच्छतु. १८३

सचत्वरं म म पुरं रक्षोभिः परिणीयताम्.'
इत्याज्ञापयदत्युग्रः पुत्रघाताततप्तधीः. १८४

तच्छ्रुत्वा रा ज वचनं राक्षसाः कोपकर्कशाः
अवेष्टयंत लांगूलं जीर्णैः कार्पासिकैः पटैः. १८५

स आंजने य स्तु तदा व्यवर्धत कुतूहली
शुष्कमिंधनमासाद्य वनेष्विव हुताशनः. १८६

परिषिच्यां ज नासूनोः पुच्छं तैलेन भूयसा
वर्धमाने तत्र शीघ्रं ज्वलनं समयोजयन्. १८७

इतोऽन्यतो य थादेशं नेतॄन् दैवहतान् कपिः
लांगूलेन प्रदीप्तेन राक्षसांस्तानताडयत्. १८८

तं मारुतिं रा क्षसास्ते लंकायां सर्वतस्तदा
परिगृह्य ययुर्हृष्टा घोषयंतोऽस्य कर्म तत्. १८९

शंखभेरी म हानादैश्चारयंति स्म तां पुरीम्
तच्छ्रुत्वा राक्षसीप्रोक्तं सीताग्निं शरणं ययौ. १९०

सख्युः सूनोः श्री मदग्निः प्रार्थितः प्रभुकांतया
संप्रदीप्तोऽपि लांगूललोमैकमपि नादहत्. १९१

प्रदीप्तेऽग्नौ रा मदूतश्चिंतयामास सन्मतिः
संप्रदीप्तोऽप्ययं कस्मान्न मां दहति पावकः? १९२

दृश्यते च म हाज्वालः करोति च न मे रुजम्
हिमस्य पिंड इव मे लांगूलाग्रे प्रतिष्ठितः १९३

अथवायं ज नकजाभर्तुः शीतः प्रभावतः
सागरस्यादरस्ताद्दाक्षिमाग्निर्न करिष्यति ? ३९४

सीताया द य या नूनं तेजसा राघवस्य च
पितुश्च मम सख्येन न मां दहति पावकः. ३९५

भूयः स वी रा धिपतिश्चिंतयामास चेतसि
कथमस्मद्विधस्यैवमधमैर्बंधनं कृतम् ३९६

प्रतिक्रिया म या योग्या कार्या बुद्धिमतेति सः
छित्वा पाशानुत्पपात ददाह विनदन् पुरीम्. ३९७

स कीशकुं ज रो भूयः परिघं तोरणाश्रितम्
गृहीत्वा रक्षिणः सर्वान्सूदयामास राक्षसान्. ३९८

पितुः सखा य मनलं समृद्धैरक्षसां गृहैः
कृतज्ञस्तर्पयामास साधु प्रत्युपकारवित्. ३९९

ततो धनं ज यस्यायं कुर्वंस्तर्पणमीप्सितम्
राजादिभवनाग्रेषु विचचार महाकपिः. ४००

लंकां निर्भ य चेताः स भवनाद्भवनं व्रजन्
ददाह रुद्रप्रहितः शरो दैत्यपुरीमिव. ४०१

तृणैधसां रा शिशतैर्यथा वह्निर्न तृप्यति
तथैषदपि नो तृप्तः कृते रक्षोवधे कपिः. ४०२

लंकां सर्वां म हातेजा दग्ध्वा लांगूलपावकम्
निर्वापयामास तदा समुद्रे हरिपुंगवः. ४०३

लंकां दग्ध्वा श्री हनुमान् पश्चात्तप्तोऽभवत्तदा
आत्मानं गर्हयन्नेवं चिंतयामास दुःखितः. ४०४

'धिगस्तु मां रा घवस्य प्रियां विस्मृत्य पावकः
उद्दीपितोऽत्र लंकायां, दग्धा नूनं तपस्विनी. ४०५

कार्यनाशो म हानद्य क्रुद्धेनायं मया कृतः
धन्या विवेकिनः संतो हंत ! सत्यमहं कपिः. ४०६

नूनं देवी ज नकजा सा दग्धा लंकया सह

हा! मया दहता लंकां न सीता परिरक्षिता. ४०७

यदर्थम य मारंभस्तत्कार्यमवसादितम्

लंकायाः कश्चिदुद्देशो न ह्यदग्धः प्रदृश्यते. ४०८

धिग्धिग्भार्य रा जस्तं मे कार्यसर्वस्वघातिना

कथं शक्यो मया द्रष्टुं रामः स च हरीश्वरः?' ४०९

निमित्तानि म हा बुद्धिर्दृष्ट्वा शुभफलानि सः

किंचित्स्वस्थो वातसूनुस्ततः पुनरचिंतयत्. ४१०

'अथवा से ज सा स्वेन रक्षिता जनकात्मजा

न नशिष्यति कल्याणी नाग्निरग्नौ प्रवर्तते. ४११

धर्मात्मा प्र थ तो रामः प्रियां तस्यातितेजसः

स्वचारित्राभिगुप्तां न स्प्रष्टुमर्हति पावकः ४१२

नूनं धर्म ज यो रामप्रभावेनाद्य मां कपिम्

सुकृतेन च सीताया नादहात्किमु तां सतीम्? ४१३

एवं चिंत य ता तेन चारणानां महात्मनाम्

आत्मानं स्तुवतां वाक्यं श्रुतमंबरचारिणाम्. ४१४

'अहो! समी रा त्मजेन साट्टप्राकारतोरणा!

लंका दग्धा न सीतेति विस्मयोऽद्भुत एव नः.' ४१५

तत्सुधोप म माकर्ण्य वाक्यं स पवनात्मजः

जगाम यत्र सा देवी नत्वा तामब्रवीन्मुदा. ४१६

'दिष्ट्याऽक्षतां श्री मति! त्वां पश्यामि जनकात्मजे!

अयमागत एवाहं रामसुग्रीवलक्ष्मणैः' ४१७

इति सीतां रा जसुतां समाश्वास्य मरुत्सुतः

नत्वा पृष्ट्वा पुनः क्षिप्रं निर्जगाम मनोगतिः. ४१८

ततो गिरि म रिष्टाख्यमारुह्योत्प्लुत्य खं गतः

तद्भारपीडितो भूमौ निमग्नः स महानगः ४१९

तं मैनाकं ज लनिधौ स्पृष्ट्वा तार्क्ष्यगतिः कपिः

आगच्छन् दूरतो दृष्ट्वा महेंद्रमकरोत् ध्वनिम्. ४२०

श्रुत्वांजने य निनदं जांबवानब्रवीत्कपीन्,
'सर्वथा कृतकार्योऽयमस्य नादो हि तादृशः.' ४२१
ते कीशवी रा वृक्षाग्राद्वृक्षाग्राणि तमागतम्
शिखराच्छिखराग्राणि दृष्ट्वा जग्मुर्दिदृक्षवः. ४२२
गिरेस्ततो म हेंद्रस्य शिखरे पादपाकुले
पपात नभसाऽच्छिन्नपक्षोऽद्रिरिव मारुतिः. ४२३
प्लवंगकुं ज राः सर्वे परिवार्योपतस्थिरे
वृद्धांस्त्वांगदं चाथ 'दृष्टा सीते' ति सोऽब्रवीत्. ४२४
आदायोपा य नान्यार्या मूलानि च फलानि च
पूजां चक्रुर्मरुत्सूनोर्जांबवत्प्रमुखा मुदा. ४२५
सविस्तरं ज गत्प्राणतनयो वृत्तमादितः
कथयामास स श्रीमान् धीमान् ह्रीमान् पराक्रमी. ४२६
अंगदाद य उत्कृष्टप्रतापं वातनंदनम्
तुष्टुवुर्हृष्टरोमाणः 'साधु साध्वि' ति तेऽब्रुवन्. ४२७
ततोंऽगदो रा जपुत्रोऽब्रवी'द्धत्वा दशाननम्
अस्माभिरर्पणीया सा रामाय जनकात्मजा.' ४२८
तमुवाच म हाबुद्धिर्जांबवान् 'प्रभुणा स्वयम्
विचेतुं वयमाज्ञप्ता नानेतुं वालिनंदन! ४२९
अस्माभिस्तु श्री मदाज्ञा यथा कार्यं तथा खलु
प्रवृत्तिरेव सीताया निवेद्याशु महाभुज! ४३०
कथंचित्तां रा जकन्यामस्माभिर्निर्जितां प्रभुः
चेन्नाभिरोचयेद्रामस्तत्सर्वं विफलं भवेत्.' ४३१
तत्ते सूक्त म मगृह्णंत साधु साध्विति चाब्रुवन्
महेंद्राग्रात्समुत्पत्य पुप्लुवुः प्लवगर्षभाः ४३२
ते प्रवृत्तिं ज गन्नर्त्रे समाख्यातुं प्रहर्षिताः
आगच्छंतो मधुवनं समासेदुः प्लवंगमाः. ४३३
सुग्रीवस्य य दत्यर्थं प्रियं नंदनसंनिभम्

मातुलः कपिराजस्य नाम्ना दधिमुखः कपिः. ४३४
कीशैरहो रा त्रमेव यस्य प्राणपरायणः
तत्प्राप्य ते मधुवनं सर्वभूतमनोहरम्. ४३५
कुमारं ते म धून्यत्तुमभ्ययाचंत लोलुपाः
फलानि च सुगंधीनि मूलानि च कृतश्रमाः ४३६
युवराजोऽ ज नापुत्रप्रतापेन प्रहर्षितः
तेषामाज्ञां ददौ तत्र यथेष्टमधुभक्षणे. ४३७
सर्वे पीत्वा य थेष्टं ते मधूनि मधुलोलुपाः
अभक्षयन्सुगंधीनि मूलानि च फलानि च. ४३८
ते प्रहर्ष ज ग्मुरथ प्राज्यपानमदोत्कटाः
केचिन्नृत्यंति गायंति प्रहसंति रुदंति च. ४३९
द्रुमाग्रात्प्रि[1] य संपाता द्रुमाग्रं जग्मुरुत्कटाः
न तत्र मत्तो नो कश्चिन्नात्र दृप्तो न कश्चन. ४४०
विध्वंसिते रा जवने कोपाद्दधिमुखः कपिः
निवारयामास हरींस्ते तं धिक्चक्रुरुन्मदाः. ४४१
लब्ध्वा तेऽनु म तिं सर्वे मारुतेरंगदादपि
क्रुद्धं दधिमुखं वीरास्ताडयामासुरुद्धताः. ४४२
सुग्रीवाय श्री मते स क्रुद्धो दधिमुखः स्वयम्
गत्वा निवेदयामास यदंगदमुखैः कृतम्. ४४३
पप्रच्छ वी रा धिपतिः सुग्रीवं लक्ष्मणस्तदा,
'किमयं दुःखितो राजन्! वानरो वक्ति तद्वद.' ४४४
स प्लवंग म राजस्तं लक्ष्मणं प्राह, 'राघव!
भुक्तं मधुवनं कीशैरंगदप्रमुखैर्बलात्. ४४५
दृष्टा देवी ज नकजा ध्रुवं रघुकुलोत्तम!
नैषामकृतकार्याणामीदृशः स्याद्व्यतिक्रमः. ४४६
ताडिता भ य मुत्सृज्य वनपालाः प्लवंगमैः.

१. प्रियः संपातः उड्डानं येषां ते.

कृतं निर्विषयं सर्वं वनं दत्तवरं[1] मम.' ४४७

एवं श्रुत्वा रा जवाक्यं युक्तिमद्रामलक्ष्मणौ
प्रहर्षमतुलं प्राप्तौ सीतादर्शनलालसौ. ४४८

मातुलं सा म कुशलः सुग्रीवः प्राह, 'तद्वनम्
पालय त्वं यथापूर्वं प्रेषयाशु कपींश्च तान्.' ४४९

स गत्वा स ज वस्तत्र स्थितान् दधिमुखः कपीन्
अंगदं युवराजं च दृष्ट्वोवाच कृतांजलिः. ४५०

'युवराज! य दज्ञानादपराद्धं क्षमस्व तत्
द्रष्टुमिच्छति राजा त्वां सहैभिर्हरियूथपैः. ४५१

प्लवंगरा ज स्त्वामाशु प्लवगैः सह पश्यतु
प्रहृष्टो न तु रुष्टोऽसौ वनं श्रुत्वा प्रधर्षितम्.' ४५२

अंगदो न य वित्तूर्णं श्रुत्वा दधिमुखेरितम्
जगाम हनुमन्मुख्यैः सह सुग्रीवसंनिधिम्. ४५३

कृत्वाग्रतो रा जसुतं हनूमंतं च वानराः
जग्मुरुत्पत्य गगनं यंत्रोत्क्षिप्ता इवोपलाः. ४५४

श्रुत्वा तेषां म हानादान्सुग्रीवः प्राह राघवम्,
'समाश्वसिहि भद्रं ते दृष्टा देवी न संशयः. ४५५

हनूमता श्री मता सा दृष्टा नान्येन राघव!
नास्त्यस्य कर्मणो हेतुः साधने तद्विधोऽपरः.' ४५६

पेतुः प्रवी रा गर्जंतः प्रदेशेषु समेषु खात्
रामलक्ष्मणसुग्रीवचरणेष्वपि ते ततः ४५७

हनूमांश्च म हाबाहुः प्रणम्य शिरसा ततः
नियतामक्षतां देवीं राघवाय न्यवेदयत्. ४५८

हनूमतो ज नकजा संदृष्टेत्यमृतोपमम्
आकर्ण्य वचनं रामो हर्षमाप सलक्ष्मणः. ४५९

निश्चितार्थे य शोराशौ सुग्रीवं पवनात्मजे

---

१. वरत्वेन देवैरस्मभ्यं दत्तम्.

लक्ष्मणः प्रीतिमान्प्रीतं बहुमानादवैक्षत. ४६०

'क्व वर्तते रा जकन्या कथं चापि मयी'ति तान्
रामे पृच्छति ते कीशाः प्रेरयंति स्म मारुतिम्. ४६१

प्रणम्य स म रुत्पुत्रः सीतायै तद्दिशे च तम्
मणिं दत्त्वा राघवाय सर्वं वृत्तं न्यवेदयत्, ४६२

'लंघयित्वा ज लनिधिं शतयोजनमायतम्
सीतामपश्यं लंकायां रावणस्य पुरि प्रभो! ४६३

कृशांगी नि य ता दृष्टा राक्षसीभिः सुतर्जिता
रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया. ४६४

मनोरथं ज नकजा त्वयि संन्यस्य दुःखिता
एकवेणीधरा दीना नित्यं चिंतापरायणा. ४६५

दत्त्वांगुलीं य कं वंशं कीर्तयित्वा गुणांश्च ते
सा मया नरशार्दूल! शनैर्विश्वासिता सती. ४६६

दत्त्वा मणिं रा जपुत्री काकवृत्तं च साब्रवीत्
त्वां लक्ष्मणं च कुशलं सुग्रीवं चावदत्सती.' ४६७

इत्येवं स म रुत्पुत्रः प्रोवाच प्रांजलिर्नतः
रामो भक्तमयूराणां मुदिरो मुदितस्ततः. ४६८

इति श्रीमन्मंत्ररामायणे श्रीरामनंदनमयूरविरचिते श्रीसुंदरकांडे षट्त्रिंशो मंत्रः.

---

## युद्धकांडम्

हनूमदुक्तं श्री रामः श्रुत्वातीव प्रहर्षितः
उवाच वाक्यं यद्योग्यं सुप्रियश्रवणोत्तरम्. [1] १

'कृतं कार्यं पं [2] रा शक्यं धीमतानिलसूनुना
न ह्यन्यं परिपश्यामि यस्तरेत्तं महोदधिम्. २

लंकां हि को ना म विशेत्प्रविष्टश्चापि निष्क्रमेत्?
भृत्यकार्यं हनुमता सुग्रीवस्य महत्कृतम्. ३

---

१. सुप्रियस्य सीताशुद्धेः श्रवणात् उत्तरं अनंतरम्. २. परैः अशक्यम्.

श्रेष्ठं यशोऽस्य ज गति नियोगादधिकं कृतम्
न चात्मा लघुतां नीतः सुग्रीवश्चापि तोषितः. ४

अहं रघ्वन्व[2] य श्चायं लक्ष्मणश्च महाबलः
वैदेह्या दर्शनेनाद्य धर्मतोऽनेन रक्षिताः. ५

प्रियाख्यातुर्व[3] रा हस्य वायुसूनोर्महात्मनः
मनः खिन्नं ममाकर्तुः कर्मणः सदृशं प्रियम्. ६

मया त्विदानीं म नसा विचार्यैव पुनःपुनः
सर्वस्वभूतोऽयं दत्तः परिष्वंगोऽस्य मारुतेः.' ७

इत्युक्त्वा प्रीति ज नितप्रभूतपुलकः प्रभुः
कृतकार्यं हनूमंतं तं रामः परिषस्वजे. ८

पप्रच्छ तं प्रि य तमाप्राप्त्युपायं प्रभूत्तमः,
'वीर! सा कीदृशी? लंका दुर्जया या सुरासुरैः. ९

सुदुष्पारस्य ज लधेः कथं नाम महामते!
हरयो दक्षिणं पारं गमिष्यंत्यंजनात्मज!' १०

इत्युक्त्वा तामा य ताक्षीं सीतां मत्वातिदुर्लभाम्
शोकसंभ्रांतहृदयः पुनर्ध्यानमुपागमत्. ११

उवाच वान रा धीशस्तं रामं शोकविह्वलम्,
'किं त्वया तप्यते वीर! यथान्यः प्राकृतस्तथा? १२

मैवं भूः पर म ज्ञाता त्वं हि राम! महाबलः
त्यज संतापमखिलं कृतघ्न इव सौहृदम्. १३

लब्धा प्रवृत्तिः श्री मत्या ज्ञातश्च निलयो[4] रिपोः
संतापस्याद्य ते स्थानं नैव पश्यामि राघव! १४

लंघयित्वा न रा धीश! पयोधिं लीलया वयम्
आरोक्ष्यामः पुरीं लंकां हनिष्यामश्च ते रिपुम्. १५

इमे शूराः स म र्थाश्च सर्वथा हरियूथपाः
त्वत्प्रियार्थकृतोत्साहाः प्रवेष्टुमपि पावकम्. १६

---

१. आज्ञायाः. २. रघूणां अन्वयः वंशः. ३. प्रियस्य आख्याता तस्य. ४. गृहम्.

सेतुं निबध्य ज लधौ लंकां हरिबलं गतम्
रावणो निहतः प्राप्ता जानकीत्युपधारय. १७
इमे हि हर य स्तत्र लंकायां कामरूपिणः
तानरींन्विधमिष्यंति शिलापादपवृष्टिभिः.' १८
इत्येवं कपि रा जस्य श्रुत्वा वचनमर्थवत्
प्रतिजग्राह काकुत्स्थो हनूमंतमथाब्रवीत्, १९
सर्वथापि स म र्थोऽस्मि सागरस्यास्य लंघने
तपसा सेतुनास्त्रेण पयसः शोषणेन वा. २०
कति दुर्गाण्यां ज नेय! द्वाराणि द्विषतः पुरः
लंकाया गुप्तिकर्माᳲपि ब्रूहि संख्यां बलस्य च.' २१
तं वायुतन य स्तज्ज्ञः कथयामास राघवम्,
'दृढानि राम! चत्वारि द्वाराण्यस्या महाबल! २२
परिखा* सह ज ग्राह मीनैर्न्याप्ता भयंकराः
द्वारेषु तासां चत्वारः संक्रमाः परमायताः. २३
प्राकारः स्वच्छ य शसां राशे! तस्याः पुरो महान्
सौवर्णो रत्नखचितो यंत्रैर्गुरुभिराचितः. २४
पूर्वद्वारि दु र्धर्षा अयुतं भीमराक्षसाः
नियुतं दक्षिणद्वारि चतुरंगबलान्विताः. २५
दश लक्षाणि म नुजश्रेष्ठ! राम! निशाचराः
पश्चिमद्वारमाश्रित्य तिष्ठंति प्रियसाहसाः. २६
तथैव राम श्री मंस्ते न्यर्बुदं सुमदोद्धताः
रात्रिंचरा महाकाया उत्तरद्वारमाश्रिताः. २७
महोत्साहाः पं रा नीकध्वंसदक्षा महाबलाः

---

१. संरक्षणकर्म. * अत्र विसर्गः कविमातृकायां न लिखितः २. सहजाः तत्रोत्पन्नाः ये ग्राहाः नक्रा मीनाश्च तैः ३. दुर्गप्रवेशार्थं कृताः सेतवः ४. नगर्याः ५. परैः पराभवितुं अशक्याः ६. दश सहस्राणि. ७. लक्षसंख्याकाः. ८. दशकोटिसंख्याकाः. ९. परेषां अनीकं (सैन्यं) तस्य ध्वंसे दक्षाः.

+१०

स्वामिकार्यपरा नित्यं सन्नद्धा[1] युद्धलालसाः. २८

लंकायां मध्य[2] म स्कंधे चतुरंगबलान्विताः
सपादकोटिः प्रबलास्तिष्ठंति रजनीचराः. २९

ते संक्रमा रा ज सिंह! ध्वस्ता दग्धा च सा पुरी
प्राकारश्च मया भग्नः परिखाश्चावपूरिताः. ३०

कपीनाज्ञाप य क्षिप्रमंगदादीन्महाबलान्
बलैकदेशः क्षपितो मयैव रघुनंदन! ३१

सर्वसैन्येन रा जेंद्र! त्वं चेद्गंतुमना असि
मुहूर्तेन तु युक्तेन प्रस्थानमभिरोचय.’ ३२

श्रुत्वा वचन म र्थाढ्यं मरुत्सूनो रघूत्तमः
सुग्रीवमब्रवी‘द्राजन्! मुहूर्ते विजये शुभे ३३

हत्वा दशास्यं ज नकक्षितिपालसुतां सतीम्
कर्तुं प्रहृष्टां मां चाद्य प्रयाणमभिरोचय. ३४

[3]ताराबलं ज य करं ममाद्य प्लवगेश्वर!
श्रुत्वाभियानं मे सीता स्पृहामेष्यति जीविते.’ ३५

एवमाकर्ण्य ज गतां भर्तुर्वाक्यं यशस्करम्
हरीनाज्ञापयामास प्रस्थानाय हरीश्वरः. ३६

सेनापतिर्न य पटुः कृतो नीलः पुरःसरः
ऋषभो दक्षिणे पार्श्वे स्ववामे गंधमादनः. ३७

सेनायाः प्रचु रा याश्च पश्चाद्भागेऽथ जांबवान्
अधिरुह्य हनूमंतं श्रीरामो लक्ष्मणोऽगदम् ३८

सेनार्णवस्य म ध्ये तु सुग्रीवो वानरेश्वरः
राघवाभ्यां सह श्रीमान् बभौ सूर्य इवोदितः. ३९

ततः प्रयाते श्री रामे हारिः शतबलिः[4] स्वयम्
भ्रमन् ररक्ष दशभिः कोटिभिर्हरिवाहिनीम्. ४०

---

१. कृतसंनाहाः २. पुरमध्यसेनानिवेशस्थाने. ३. नक्षत्रबलम्. ४. कश्चन वानरवाहिनीपतिः.

असंख्यं वान रा नीकं गर्जमानं रणोत्सुकम्
　　विलंघ्य सह्यं संप्राप्तं तीरं लवणवारिधेः. ४१

सेनां प्लवंग म पतिस्तत्र वेलावनेषु ताम्
　　आज्ञया रामचंद्रस्य स्थापयामास निर्भयाम्. ४२

दुस्तरं तं तु ज लधिं विलोक्य रघुनंदनः
　　सीतां स्मृत्वा वियोगार्तो विलापमकरोद्भृशम्. ४३

'अनाथेव प्रि य तमा सनाथाप्यद्य लक्ष्मण!
　　स्वभावतन्वी सा नूनं शोकेनानशनेन च. ४४

भूयस्तनुत रा सीता देशकालविपर्ययात्
　　रक्षो हत्वा हरिष्यामि कदा तस्या मनोऽन्यथाम्? ४५

दुःखं दूरेति म म नो वत्स! दुःखं हृतेति न
　　एतदेवानुशोचामि वयो[1]ऽस्या ह्यतिवर्तते. ४६

कदा नु सा रा ज सुता देवकन्योपमा मम
　　सोत्कंठा कंठमालंब्य मोक्ष्यत्यानंदजं जलम्?' ४७

एवं भृशं प्रि य तमां स्मृत्वा शोचंतमग्रजम्
　　आश्वासयामास धीरः सौमित्रिर्विविधोक्तिभिः. ४८

'रावणो वात ज निना दृष्ट्वा कर्म तथा कृतम्
　　पप्रच्छ राक्षसान्कार्ये ह्रिया किंचिदवाङ्मुखः. ४९

आगमिष्यति य लेन राम! उल्लंघ्य सागरम्
　　एकेन तत्कृतं कर्म बहवः कपयः किमु? ५०

हता रक्षोव रा दग्धा दुर्धर्षा नगरी मम
　　तेन वानरमात्रेण दृष्टा सीतानुभाषिता. ५१

उच्यतां नः स म र्थं यत्कृतं च सुकृतं भवेत्
　　किं करिष्यामि भद्रं वः किं वो युक्तमनंतरम्. ५२

तेऽज्ञास्तमूचुः 'श्री मंस्त्वं न चिंतां कर्तुमर्हसि

---

१. अस्याः वयः प्राणावस्थितिकालः मासद्वयमात्रं जीवनमित्युक्तेः यद्वा यौवनमिति प्राकृतवद्वादः इति तिलकव्याख्यायाम्.

महाराज ! जितः श्रीदः पुष्पकं च त्वया हृतम्. ५३

मृत्युस्त्वया प रा भूतो वासुकिस्तक्षकोऽपि सः
त्वद्भयादिच्छता सख्यं कन्या दत्ता मयेन ते. ५४

दानवाश्च स म र्थास्ते भग्ना लब्धवराः पुरा
मायाश्चाधिगता बह्वयः कुंभीनस्याः पतिर्जितः. ५५

रामाधिकाश्च ज गतीपतयो निर्जिता रणे
मेघनादेन विजितः शक्रो मुक्तो विधेर्गिरा. ५६

राजन्नापत्त्वे य मद्य प्राकृतादागता जनात्
हृदि नैव त्वया कार्या त्वं वधिष्यसि राघवम्.’ ५७

अथ प्रहस्तो रा जानं तत्सेनानीस्तदाब्रवीत्,
‘वयं प्रमत्ता विश्वस्ताः कपिना तेन वंचिताः. ५८

करिष्यामि वि म र्त्यां क्ष्मां कृत्स्नामकपिमोजसा,
भक्षयिष्यामि तं राममाज्ञापयतु मां भवान्.’ ५९

तं दुर्मुखोऽपि ज गतः पीडकं दशकंधरम्
तथैवोवाच दुर्बुद्धिर्वज्रदंडोऽपि राक्षसः. ६०

सर्व एवान य ज्ञास्ते तस्य रक्षःपतेस्तदा
सचिवा भ्रातरः पुत्राश्चक्रुः प्रोत्साहनं भृशम्. ६१

सौमित्रेः साग्र ज स्याथ सुग्रीवस्य हनूमतः
हननायोत्थितान्सर्वान् वारयित्वा बिभीषणः ६२

प्रांजलिर्विन य ज्ञस्तं प्रोवाचाग्रजमीश्वरम्,
‘तव किं राक्षसेंद्रस्य रामेणापकृतं पुरा ? ६३

हतः खरोऽप रा धीति रामेण समरागतः
वैरं समुद्दीपयता त्वया तस्य प्रिया हृता. ६४

अनिष्टमिद म स्त्यंत हरणं परयोषितः
महाराज ! त्वया त्याज्या सीता भीता मतिर्मम. ६५

प्रसादये त्वां श्री मंतं, तथ्यं पथ्यं वचो मम
गृहाण त्वं, महाराज ! दीयतामस्य मैथिली. ६६

सौभाग्यवत्यो रा क्षस्यः संतु संतुष्टमानसाः
त्वं तु मंतुमिमं कर्तुं नाथ! नार्हसि दारुणम्.' ६७

इत्थं वदति म र्यादामार्गभाजि बिभीषणे
विसर्जयित्वा तान् राजा प्रविवेश स्वकं गृहम्. ६८

भ्रातुर्गृहं र ज न्यंते गत्वा तं पुनरेव सः
अब्रवीद्रामराजाय सीतायाः प्रतिपादनम्. ६९

'यदाप्रभृति य त्नेन त्वयानीता नृपात्मजा
तदाप्रभृति दृश्यंते निमित्तान्यशुभानि नः. ७०

रोचये वीर! रा माय वैदेही प्रतिदीयताम्
भीतास्ते मंत्रिणो वाच्यमवश्यं तु मया हितम्.' ७१

मंत्रिणामिति म ध्ये तं भ्राता भ्रातरमब्रवीत्.
सीताभिलाषी दुष्टस्तमुवाच दशकंधरः, ७२

'न पश्याम्यत्र ज गति कुतश्चिद्भयमण्वपि
न जातु प्राप्स्यति पुनः सीतां रामो बिभीषण! ७३

स्वयं सहायो य द्यस्य त्रिदशेंद्रो भविष्यति
ममाग्रतः कथं स्थास्यत्यबलो लक्ष्मणाग्रजः?' ७४

इत्युक्त्वा सोऽनु ज मथ स्यंदनं दशकंधरः
समारुह्य ययौ भव्यां सभां मण्युज्ज्वलप्रभाम्. ७५

'शुभं समास्था य रथं स्वाग्रजस्य बिभीषणः
तां संसदं ययौ, सर्वे मिलिता यत्र राक्षसाः. ७६

निषसाद स रा जानं नत्वा रत्नासने शुभे
अथाब्रवीद्दशमुखः सर्वांस्तान् रजनीचरान्. ७७

कुंभकर्णस्ये म मर्थं स्वभ्रात्राहमचोदयम्
अयं हि सुप्तः षण्मासानधुनैव समुत्थितः. ७८

इयं हि सीता श्री तुल्या मयानीता निजां पुरीम्,
सा तु संवत्सरं कालं मामयाचत जानकी. ७९

तन्मयाप्यभि रा मायाः प्रतिज्ञातं वचः शुभम्

श्रांतोऽहं सततं कामाघ्रातो हय इवाध्वनि. ८०

दूतेनाथ म    म प्रोक्तं सुग्रीवप्रमुखान् हरीन्
पुरस्कृत्य समुद्रस्य तीरे प्राप्तौ नृपात्मजौ. ८१

न दातव्या कं    ज नेत्रा हंतव्यौ रामलक्ष्मणौ
कामो ममायं तद्यूयं यतध्वं कार्यसिद्धये.' ८२

कुंभकर्णो न    य भ्रातुः प्रियं तत्सदसि स्वयम्
उवाच प्रथमं धर्मन्यायोपेतं सतां मतम्. ८३

'त्वया परस्त्री    रा जेंद्र! न समीक्ष्य स्वयं हृता
महाननर्थः संप्राप्तः किं मंत्रेणाधुना प्रभो!? ८४

गते तोये स    म ग्रे किं सेतुना राक्षसेश्वर!
संदीप्ते सदने देव! कूपस्य खननेन किम्? ८५

प्रियार्थमग्र    ज स्याथ सोऽब्रवी'द्रामलक्ष्मणौ
हनिष्यामि ससुग्रीवान्भक्षयिष्यामि वानरान् ८६

मा चिंतां कुरु    य द्राजन्! प्रियं तद्व्रज निर्भयः
वानरा वा नरा देवाः के वान्येऽपि ममाग्रतः.' ८७

महापार्श्वः प्रां    ज लिस्तं क्रुद्धं रावणमब्रवीत्,
'ईश्वरस्येश्वरः कोऽस्ति तव शत्रुनिबर्हण!? ८८

आक्रम्याक्रम्य    य त्नेन सुंदरीं राक्षसेश्वर!
बलात्[1]कुक्कुटवृत्तेन सीतां भुङ्क्ष्व रमस्व च.' ८९

कुंभकर्णः प    रा नाजाविंद्रजिच्च महाबलः
अस्माभिः सहितौ हंतुं समर्थावपि वज्रिणम्.' ९०

महापार्श्वं त    म त्याह प्रोवाच दशकंधरः,
'मया पूर्वं बलाद्भुक्ता सुंदरी पुंजिक[2]स्थला. ९१

एवं पुनस्त्वं श्री मत्तो बलादन्यां गमिष्यसि

---

१. कुक्कुटरीत्या. "कुकुक्टीनां कामिकुक्कुटसंयोगे क्रोधो जातिधर्मः" इति वात्स्यायनः. अथापि संक्रुद्धाः कुक्कुटीरनुभुज्य कुक्कुटा यद्वत् सुखिनस्तद्वत्त्वमपि भव इति तिलकव्याख्यायाम्. २. काचन देवाङ्गना.

फलिष्यत्येव ते मूर्धा मां ब्रह्मेत्यशपद्रुषा. ९२

शापभीतो व  रा रोहां वैदेहीं शयने शुभे
नारोहयेऽहमबलां बलाद्बलवतां वरः. ९३

आसादयति  म र्त्यो मामज्ञात्वा मत्पराक्रमम्
सागरस्येव मे वेगो मारुतस्येव मे गतिः. ९४

महोल्काभिः कुं  ज रेंद्रं यथा राममहं तथा
आजावादीपयिष्यामि ससहायं महेषुभिः.' ९५

इति धर्मन्या  य हीनं श्लाघमानं दशाननम्
बिभीषणो महाबुद्धिरनुजोऽग्रजमब्रवीत्. ९६

'सीताव्याली प रा नर्थहेतुर्मास्यां मनः कुरु
परस्त्रियानया किं ते ? रामायैषा प्रदीयताम्. ९७

यावन्न लंका  म त्युग्राः कीशा दंष्ट्रानखायुधाः
आगतास्तावदेवेयं सीता रामाय दीयताम्. ९८

हरेर्यथा ग  ज स्तद्वद्राघवस्याग्रतः क्षमः
स्थातुं न कुंभकर्णोऽयं नेंद्रजित्कोऽपि नापरः. ९९

कदाचित्कोऽपि  य मतो विमुक्तो भविता जनः
रामस्य सन्निधिं प्राप्य त्वं तु जीवन्न मुच्यसे.' १००

ततः प्रहस्तो 'ज गति देवादिभ्यो न नो भयम्.'
इत्यब्रवीद्भृशं मत्तो, बिभीषण उवाच तम्. १०१

'कर्तुं पराज  य स्तस्य रामस्य न मया त्वया
कुंभकर्णेन वा शक्यो राज्ञा वापि च सर्वथा. १०२

राममुक्ताः श  रा घोरा न प्रविष्टास्तनौ तव
तेन प्रहस्त ! पुरतो रावणस्य विकत्थसे. १०३

अयं राजा तु  म हता व्यसनेनांतहेतुना
अन्वास्यते पराभूतो भवद्भिरहितैर्जडैः. १०४

---

१. भङ्गं प्राप्स्यति. २. इयं सीताव्याली (सर्पिणी). २. सेव्यते.

रक्ष्यः सुहृद्भिः श्री मांस्तु निगृह्यापि कचग्रहात्[1]
यथा भीमबलैर्भूतैर्गृहीतो हितकारिभिः' १०५

इंद्रजित्तं प रा नर्थशांतिकामं पितुर्हितम्
गर्हयामास दुर्वृत्तो सद्वृत्तं सदसि स्फुटम्. १०६

'त्वमत्र वंशे म हिते भीरुरल्पबलोऽबुधः
भीरो! भीषयसे किं नः पिता मे रत्नभुक् प्रभुः. १०७

जितो जयंत ज नको मया वज्रधरो रणे
क्व वयं विश्वजेतारः क्व प्लवंगसखो नरः?' १०८

तमाबभाषे य क्षेंद्रशीलः साधुर्बिभीषणः
मंत्रे बालस्त्वमानीतो येन वध्यः स दुर्मतिः. १०९

इंद्रजित्वं न रा ज्ञोऽस्य हितः पुत्रोऽस्यारिर्ध्रुवम्
निवारयसि न प्राप्तं रामाद्नाशं सुदुर्मते! ११०

अविवेकी त्व म ल्पज्ञस्तीक्ष्णो वध्योऽसि बालिशः
रामलक्ष्मणयोर्बाल! वज्रकोट्यधिकाः शराः.' १११

उक्तवंतं नि ज हितं शुद्धभावं बिभीषणम्
अब्रवीत्परुषं वाक्यं रावणः कालचोदितः ११२

'ज्ञातीनां ज्ञात य स्तुष्टा भवंति व्यसने सदा
वसेत्सहाहिना, नैव ज्ञातिना शत्रुसेविना. ११३

दले सरसि ज स्यांबुबिंदुः श्लेषं न गच्छति
तथैषदप्यनार्ये हि सौहृदं सर्वथा जने. ११४

मम भाग्योद य स्ते न प्रियो ज्ञातिरसि स्फुटम्
विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम्.' ११५

एवं वक्ता प रा सुः स मुहूर्तेऽस्मिन् भवेत्परः
कृतघ्न! त्यक्तमर्याद! त्वां तु धिक् कुलपांसन!.' ११६

एवमुक्तः स म तिमान् परुषं वाक्यमुच्चकैः
न्यायवादी गदापाणिरुत्पपातासनात् द्रुतम्. ११७

---

१. केशग्रहणपर्यंतमनुचितं कृत्वा सुहृद्भिः संरक्ष्यो राजेति तात्पर्यम्.

सार्धं चतुर्भिः श्री मान् स्वैः सचिवैर्नभासि स्थितः
अब्रवीद्रावणं क्रुद्धः सभायामवमानितः, १११८

'यथेष्टं ब्रूहि रा जन्मां ज्येष्ठः पितृसमोऽसि मे
परुषं न क्षमाम्युक्तं न त्वं धर्मपथे स्थितः. ११९

हितकामेन म हितं वाक्यमुक्तं दशानन!
न गृह्णंत्यकृतात्मानः कालस्य वशमागताः. १२०

सुलभास्ते द्य ज त्वं ये पुरुषाः प्रियवादिनः
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः. १२१

तन्मर्षयतु य च्चोक्तं गुरुत्वाद्धितमिच्छता
आत्मानं सर्वथा रक्ष पुरीं चेमां सराक्षसाम्. १२२

स्वस्ति तेऽस्तु सु रा राते! सुखी भव मया विना
त्वामापृच्छय गमिष्यामि धर्मन्यायौ मतौ मम.' १२३

तमेवमुक्त्वा म तिमान् यत्र रामः सलक्ष्मणः
तं देशमागतो व्योम्नि चतुर्भिः सचिवैः सह. १२४

दृष्ट्वा तं व्योम्नि ज गतीधराभं रावणानुजम्
सुग्रीवस्याज्ञया हंतुमुत्पेतुः कपयो रुषा. १२५

स महात्मा वि य द्वर्ती सुग्रीवं तांश्च वानरान्
उवाच, राक्षसपतेरनुजोऽहं बिभीषणः, १२६

जनस्थानाद्धृ ज कन्या जानकी मायया हृता
दशकंठेन सा रुद्धा शुद्धाचारा प्रभुप्रिया. १२७

स मया सम य ज्ञेन प्रार्थितो तद्धितार्थिना
साधु निर्यात्यतां सीता रामायेति पुनःपुनः. १२८

हितं वचो न रा ज्ञा मे गृहीतं परुषं बहु
प्रोक्तं ततस्तं त्यक्त्वाहं रामं शरणमागतः. १२९

शरण्याय स म र्थाय राघवाय महात्मने
निवेदयत मां क्षिप्रं बिभीषणमुपस्थितम्.' १३०

स्वयं कपींद्रः श्री राममुवाच, 'रघुनंदन!

रावणस्यानुजः साक्षादागतोऽत्र बिभीषणः. १३१

निवेदयत रा माय क्षिप्रं मां शरणागतम्
इति वक्ति महाराज! चतुर्भिः सचिवैः सह. १३२

अहं तु वध्यं म न्ये तं, शत्रुपक्षे न विश्वसेत्.'
पप्रच्छ रामः सर्वांस्ता'न्कथं कार्यमि'ति प्रभुः. १३३

तत्र तारात्म ज स्तद्वदृषभो जांबवानपि
अन्ये च शंक्य इत्याहुः परीक्ष्यश्च विशेषतः. १३४

अंजनातन य स्तज्ज्ञः प्रोवाच प्रांजलिस्तदा,
'दौरात्म्यं रावणे दृष्ट्वा विक्रमं च तथा त्वयि. १३५

शरणं त्वां ध रा धीश! शरण्यं भक्तवत्सलम्
बिभीषणोऽयं संप्राप्त इति मन्ये रघूत्तम! १३६

न लक्ष्यतेऽस्य म तिमन्! ब्रुवतो दुष्टभावता
प्रसन्नं वदनं चापि तस्मान्मे नास्ति संशयः. १३७

निःशंकोऽयं रा ज वर्य! न शठः परिसर्पति
न चास्य दुष्टा वागस्ति तस्मान्मे नास्ति संशयः. १३८

उद्योगं ते न य ज्ञस्य दृष्ट्वा दुष्टं च रावणम्
वालिनं च हतं श्रुत्वा सुग्रीवं चाभिषेचितम्. १३९

राज्यकामाद्वि ज गतां नाथार्यं रावणानुजः
बुद्धिपूर्वमिह प्राप्तः कार्यस्ते तस्य संग्रहः. १४०

यथाशक्त्याश य स्तस्य ज्ञात्वोक्तोऽयं मया प्रभो!
प्रमाणं त्वं हि शेषस्य श्रुत्वा बुद्धिमतां वर!' १४१

प्रसन्नात्माथ रा जेंद्रस्तच्छ्रुत्वा मारुतेर्वचः
प्रत्यभाषत दुर्धर्षः श्रुतवानात्मनि स्थितम्. १४२

विवक्षितं म म श्राव्यं भवद्भिः श्रेयसि स्थितैः
मित्रभावेन संप्राप्तं न त्यजेयं कथंचन. १४३

मामागतो यः श्री मान्स सत्कार्यो बंधुवन्मया
दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम्.' १४४

सुग्रीवः पुन रा हा'र्ये! व्यसनं प्राप्तमग्रजम्
यस्त्यक्तवान् कृतघ्नोऽयं कमन्यं न परित्यजेत्.' १४५

तमुवाचासी म सत्त्वः प्रभुः कारुण्यसागरः
व्यसनेषु प्रहर्तारो ज्ञातयोऽन्ये च शत्रवः. १४६

सुप्रसिद्धं रा ज वृत्तमिदं लक्ष्मण! लौकिकम्
पापाद्राज्ञो भयं प्राप्तस्तस्मादयमिहागतः. १४७

मम त्वस्माद्भ य प्राप्तिर्नास्ति ज्ञातेर्हि साध्वसम्
राज्यकामः स्वोपजीव्यविरोधं न करिष्यति. १४८

संत्येव चतु रा लोके सर्वत्र प्लवगेश्वर!
तस्माद्विभीषणो ग्राह्यः प्राप्तो भ्रातुर्महद्भयम्. १४९

न भ्रातरः स म स्तास्तु भवंति भरतोपमाः
पुत्रा वा मद्विधास्तात! सुहृदो वा भवद्विधाः.' १५०

सलक्ष्मणः प्रां ज लिस्तं सुग्रीवः पुनरब्रवीत्,
'प्रहर्तुं त्वयि विश्वस्ते मयि वा लक्ष्मणेऽपि वा. १५१

दशाननेना य मिह प्रभो! संदिष्ट आगतः
जिह्मधी राक्षसो वध्यः सचिवैः सह सर्वथा.' १५२

तमुवाचार्त ज नहृत्तोषदो रघुनंदनः,
'दुष्टोऽदुष्टोऽपि वास्त्वेष न मे कर्तुं क्षमोऽहितम्. १५३

पिशाचासुर य क्षा ये पृथिव्यां ये च राक्षसाः
अंगुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर! १५४

श्रूयते हि पु रा व्याधः शत्रुः शरणमागतः
कपोतेनार्चितस्तात! स्वैश्च मांसैर्निमंत्रितः. १५५

कंडुगीताः सु म हिता गाथाः शृणु कपीश्वर!'
इत्युक्त्वा ताः स्वयं रामो जगौ सर्वसतां मताः. १५६

---

१. शरणागतरक्षणं परमो धर्म इति कपोतवृत्तांतेनाह श्रूयत इति. (कश्चन कपोतः स्वभार्याया हंतारं शरणागतं व्याधं शीतनिवारणार्थमग्न्यादि दत्वा स्वैर्मांसैस्तर्पितवान्.) २. कंडुना (कण्वपुत्रेण) गीताः ३. उत्तमाः.

'प्राणैः सहैव श्री स्त्याज्या रक्षता सुकृतं यशः
न प्रांजलिः शत्रुरपि त्रस्तः शरणमागतः. १५७

महती हि प रा भूतिस्त्यजतः शरणागतम्
तस्मादहं करिष्यामि कंडोर्वचनमुत्तमम्. १५८

रघोर्वंशेऽत्र म हति प्रभवो बहवोऽभवन्
ते सर्वे हि महात्मानः शरणागतपालकाः. १५९

जगत्सु त्रिष्व ज सुतः ख्यातो दशरथः प्रभुः
तत्पुत्रोऽहं कथं त्यक्तुं शक्नुयां शरणागतम्! १६०

सकृत्प्रपन्ना य सखे तवास्मीति च याचते
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम. १६१

आनयैनं त्व रा वान्सन् दत्तमस्य मयाऽभयम्
बिभीषणो वा सुग्रीव! यदि वा रावणोऽस्त्वयम्.' १६२

स्तुत्वा प्लवंग म पतिः श्रीरामं जगतां पतिम्
आनयामास गगनात्समाहूय बिभीषणम्. १६३

जहार यद्र ज स्तादृगहल्याया महद्रजः
निपपात तयोर्मूर्ध्ना पादयोः स बिभीषणः. १६४

उवाच सद य श्रेष्ठ! रावणेनावमानितः
तस्यानुजोऽहं त्वामद्य शरण्यं शरणागतः. १६५

त्यक्त्वा लंका रा ज धानी मित्राणि च धनानि च
भवद्गतं हि मे राज्यं जीवितं च सुखानि च.' १६६

राघवो विन य ज्ञं तं सांत्वयित्वाब्रवीत्स्वयम्,
' आख्याहि मम तत्त्वेन राक्षसानां बलाबलम्.' १६७

सोऽब्रवीदिति, 'रा जेंद्र! वरदानात्स्वयंभुवः
अवध्यः सर्वभूतानां रावणो लोकरावणः. १६८

कुंभकर्णो म म ज्येष्ठः शक्रप्रतिबलो युधि
मणिभद्रस्य जेतास्य प्रहस्तो वाहिनीपतिः. १६९

ज्येष्ठः सुतोऽस्य श्री मान्स मेघनादाभिधः प्रभो!

जातो नाम्नेंद्रजिज्जित्वा युधींद्रं सुमहाबलः. १७०
तथा महोद रा ख्यश्च महापार्श्वोऽप्यकंपनः
तस्योपसेनापतयो लोकपालसमा युधि. १७१
सर्ववीरोत्त म! स्वामिन्! लंकायां कामरूपिणः
दशकोटिसहस्राणि रक्षसां संति मुख्यशः. १७२
ये लोकपाला ज न्ये ते भग्नाः सर्वे सुरैः सह.'
बिभीषणवचः श्रुत्वा स्वयं रघुवरोऽब्रवीत्, १७३
'हत्वा रक्षोना य कं तं सप्रहस्तानुजात्मजम्
राजानं त्वां करिष्यामि सत्यमेतच्छृणोतु मे. १७४
अथोऽब्रवीत्स, 'रा जेंद्र! राक्षसानां वधे पुरः
प्रधर्षणेऽहं साहाय्यं करिष्यामि यथाबलम्.' १७५
इति ब्रुवाणं म धुरं परिष्वज्य बिभीषणम्
रामः प्रीतोऽनुजं प्राह, 'समुद्राज्जलमानय. १७६
तेन त्वमाशु ज लधेर्जलेनेमं बिभीषणम्
अभिषिंचाद्य राजानं रक्षसां वीरमानद!' १७७
एवमुक्तः प्र य तधीरभ्यषिंचद्बिभीषणम्
मध्ये वानरमुख्यानां राजानं राजशासनात्. १७८
सद्यःप्रसादं ज गतां भर्तुर्दृष्ट्वा प्लवंगमाः
प्रचुक्रुशुर्महात्मानं 'साधु साध्वि'ति चाब्रुवन्. १७९
अथाब्रवी'त्तो य राशिं तराम कथमित्यमुम्'
बिभीषणं वायुसूनुः सुग्रीवश्च महामतिम्. १८०
प्रत्युवाच, स रा जायं राघवस्तेजसां निधिः
सागरं पूर्वजकृतं शरणं गंतुमर्हति. १८१
सगरेणाय म ब्धिर्हि खानितः सागरस्ततः
कर्तुमर्हति रामस्य ज्ञातेः कार्यं महोदधिः.' १८२
बिभीषणोक्तं श्री भर्तुः सागरस्योपवेशनम्
प्रकृत्या धर्मशीलस्य तद्रामस्याप्यरोचत १८३

कुशास्तीर्णेऽम्बु रा शेः स श्रीरामो विमले तटे
संविवेश[1] तदा साक्षाद्वेद्यामिव हुताशनः. १८४

ततो निविष्टां म हतीं ध्वजिनीं पतिपालिताम्
अभ्येत्य दृष्ट्वा शार्दूलः प्रतिगम्य दशाननम् १८५

कथयामास 'ज लधेः प्रतीरे रामलक्ष्मणौ
सीतायाः पदमायातौ, तत्सैन्यं सागरोपमम्. १८६

दानं वा साम य त्नेन भेदो वाऽत्र प्रयुज्यताम्
बलं निविष्टं खं व्याप्य सर्वतो दशयोजनम्.' १८७

शुकं नाम त्व रा युक्तं ततः संदिश्य राक्षसम्
प्राहिणोत्सामभेदार्थं सुग्रीवं प्रति रावणः. १८८

शुको विहंग म तनुर्व्योम्नि स्थित्वा कपीश्वरम्
उवाच, 'त्वं मम भ्राता महाराजकुलोद्भवः १८९

रामस्य भार्यां ज यतां वरोऽहमहरं यदि
किं तत्र तव सुग्रीव! किष्किंधां प्रति गम्यताम्. १९०

त्यजतो मां प्रि य सखं नास्त्यर्थस्तव कश्चन
अनर्थः प्रत्युत, प्राप्तुं लंकाऽशक्या नृवानरैः.' १९१

तं खमुत्प्लुत्य ज गृहुर्वानराः पीडितः शुकः
उवाच 'दूतान्न घ्नंति राम! तत्साधु वार्यताम्.' १९२

'दूतः प्राणात्य य मयं नार्हतीति' प्रभोर्वचः
श्रुत्वा तं मुमुचुः कीशाः श्रीशाज्ञावशवर्तिनः. १९३

गगनस्थः स रा जानं शुकः सुग्रीवमब्रवीत्
'किं मया लघु वक्तव्यो रावणो लोकरावणः.' १९४

वानरेंद्रस्त म वद 'नानुकंप्योऽसि मे सखा
रामस्यारिस्त्वमस्माकं वध्यो वालीव बालिश! १९५

भ्राता न स त्वां श्री कंठो रामात् पाप! न मुच्यसे
एतत्प्रत्युत्तरं दत्तं निवेदय दशाननम्.' १९६

---

१. निद्रितवान्.

तदांगदस्तं रा जानमब्रवी'देष राक्षसः
दूतश्चारोऽपि तुलितं सर्वं सैन्यमनेन नः. १९७

लंकां रक्षोध म स्यास्य गमनं मे न रोचते,
गृह्यतां पुनरत्रायं बध्यतां वानरेश्वर!' १९८

राजाज्ञया तं ज गृहुर्विलपंतमनाथवत्!
तत्प्रार्थितोऽब्रवीद्रामो 'मुच्यतां दूत आगतः.' १९९

कुशेषु रामो य तवाक् प्रतिशिश्ये पयोनिधेः
वरमिच्छन्निशास्तिस्र उपधाय भुजं प्रभुः २००

न ददौ वारि रा शिः स यदा दर्शनमुद्धतः
प्रभुर्मुमोच विशिखान् विविशुस्तेंऽबुधेर्जले. २०१

व्याकुलोऽभूत्स म हता तेजसा सागरः प्रभोः
मामेत्युक्त्वा समुत्पत्य सौमित्रिर्धृतवान् धनुः. २०२

उवाच रामो 'ज लधेः शोषितस्येषुतेजसा
परं तीरं गमिष्यंति पद्भिरेव प्लवंगमाः.' २०३

इत्युक्त्वा प्रल[1] य भ्रप्रभः प्रभुवरः पुनः
ब्रह्मणोऽस्त्रेण संयोज्य शरं धनुषि संदधे. २०४

चापे विकृष्टे ज लधिः प्रक्षुब्धः प्रलये यथा
पर्वतप्रतिमोर्मिर्व्यतिचक्राम योजनम्. २०५

सर्वः प्रासभ य स्तेन ब्रह्मास्त्रेणाभवद्भृशम्
सकंपा गिरयः कृत्स्ना, निष्प्रभोऽभूद्दिवाकरः. २०६

सिंधुमध्याद्द्व रा कारो नानारत्नैर्विभूषितः
उदयाद्रेरिव रविः सागरः स्वयमुत्थितः. २०७

स उपागम्य म धुरमुवाचामंत्र्य राघवम्
'स्वभावे तात तिष्ठंति भूतान्यहमपि प्रभो! २०८

राजेंद्र! राम! श्री मंस्त्वं कुरु सेतुं मयि प्रभो?
ग्राहा न प्रहरिष्यंति जल[2]स्तंभो न मे मतः. २०९

---

१. प्रलयकालीनसूर्यसमतेजाः २. जलस्य स्तंभः द्रवत्वनाशः.

मत्स्वभावो न रा धीश ! यदगाधोऽहमप्लवः
गाधत्वं तु विकारो मे, क्षमस्व कुरु मद्वचः.' २१०
तमब्रवीद्रा म भद्रः, 'शृणु मे वरुणालय !
अमोघोऽयं महाबाणः कस्मिन् देशे निपात्यताम्.' २११
प्रभुं प्रोवाच ज लधिः पापैर्दस्युभिराकुलः
द्रुमकुल्याभिधो देशः शरोऽयं तत्र पात्यताम्.' २१२
तस्मिन्स्थाने सा य कं तं मुमोच रघुपुंगवः
तत्र व्रणोऽभवत्तोयमुत्पपात रसातलात्. २१३
व्रणः कूपः श रा ज्जातो विश्रुतः सोऽक्षयोदकः
तत्स्थलं मरुकांतारमिति नाम्नाऽभवद्भुवि. २१४
ददौ वरांश्च म रवे, सुक्षीरो विविधौषधिः
पशव्यश्चाल्परोगश्च स देशः स्नेहवानभूत्. २१५
उवाच रामं ज लधि 'र्विश्वकर्मसुतो नलः
करोतु मय्ययं सेतुं धारयिष्याम्यहं प्रभो !' २१६
एवमुक्त्वा तो य राशिस्तदैवांतर्हितोऽभवत्
नगैरगैर्नलः सेतुं चकार शतयोजनम्. २१७
हृष्टैः कीशैः कुं ज राभैस्तदाह्ना प्रथमेन सः
रचितः सागरे सेतुर्योजनानि चतुर्दश. २१८
प्लवंगमैरा य तः स द्वितीयाह्ना कृतत्वरैः
कृतः पयोनिधौ सेतुर्योजनानि तु विंशतिः. २१९
तृतीयेन त्व रा वद्भिर्बद्धोऽह्ना सेतुरंबुधौ
योजनानि महाकायैरेकविंशतिरेव सः. २२०
चतुर्थेनाथ म हता तैरुत्साहेन वारिधौ
द्वाविंशतिर्योजनानि निर्मितः सेतुरद्भुतः २२१
प्रतापतोऽथ श्री जानेस्तस्याह्ना पंचमेन तैः
सत्रयोविंशतिः सेतुर्योजनानि विनिर्मितः. २२२

---

१. अनार्यः २. तलस्पर्शत्वम्

कीशैर्धराध　रा कारैः कृतः सेतुर्धराधरैः
दशयोजनविस्तीर्णः शतयोजनमायतः. २२३

नलसेतुं त　म मराः सिद्धगंधर्वदानवाः
सीमंतमिव पाथोधौ ददृशुस्तेऽतिविस्मिताः. २२४

प्लवंगसेना　ज लधिं सा तेन नलसेतुना
तीर्णा त्रिभिरहोरात्रैः पुरःसरबिभीषणा. २२५

मरुतस्तन　य स्कंधं राम आरुह्य सागरम्
सौमित्रिरंगदस्कंधं तीर्णः सेनापुरःसरः. २२६

महर्षिभिः सु　रा स्तत्र पुण्यैर्मंदाकिनीजलैः
समभ्यषिंचन् द्विषतो जयस्वेत्यब्रुवन्प्रभुम्. २२७

उत्तीर्य सिंधु　म थ तां लंकां पर्वतमूर्धनि
दृष्ट्वा प्रभूक्तः सुग्रीवो मोचयामास तं शुकम्. २२८

दशाननं द्वि[१]　ज तनुः शुकः क्षिप्रमुपागमत्
हसन्नुवाच तं राजा, 'लूनपक्षः कुतो भवान्?' २२९

स शुकस्तत्र　य त्पासं बंधनं तर्जनं स्वयम्
वाचिकं चाब्रवीद्रामागमनं सेतुबंधनम्. २३०

'ऋक्षवानर　ज न्मानो महात्मानो महाबलाः
दुर्जयाः समरे राजन्नसंख्याताः समागताः. २३१

सीतां वाऽस्मै प्र य च्छाशु युद्धं वा राक्षसेश्वर!
पुरीप्राकारमायांति क्षिप्रमेकतरं कुरु.' २३२

रावणस्तद्वि　रा क्रुद्धस्तमुवाच, 'सुरासुराः
यदि मां प्रतियुध्येरन्न प्रदास्यामि मैथिलीम्. २३३

स राघवो म　म बलं नाज्ञासीदेव निस्तुलम्
कपिसैन्यैः सहागत्य तेन मां योद्धुमिच्छति.' २३४

दक्षावमात्यौ　श्री मान्स प्राहिणोच्छुकसारणौ
हरिरूपधरौ वीरौ प्रविष्टौ कपिवाहिनीम्. २३५

---

१. विहंगमरूपः.

बलं तद्वान रा णां तावचिंत्यं लोमहर्षणम्
नाशक्नुवातां संख्यातुममात्यौ शुकसारणौ. २३६

तौ गृहीत्वा स म तिमान्प्रतिच्छन्नावपि स्वयम्
आचचक्षे राघवाय दर्शयित्वा बिभीषणः. २३७

तौ दृष्ट्वा तं रा ज सिंहमूचतु'रावणाज्ञया
आवां बलं परिज्ञातुमागताबि'ति कातरौ. २३८

प्रहसन्सद य स्वांतस्तावुवाच रघूत्तमः
'कृतं कार्यं यथोक्तं चेच्छंदतः प्रतिगम्यताम्. २३९

न दृष्टं चेच्च रा वेतत्सुग्रीवस्य महद्बलम्
बिभीषणो वा कात्स्न्र्येन पुनः संदर्शयिष्यति. २४०

ग्रहणं प्राप्य म त्तो मा भेतव्यं खलु राक्षसौ!
बिभीषण! सखे! मुंच, चारौ वध्यौ न सर्वथा. २४१

वित्तेशस्यानु ज स्तत्र वक्तव्यो वचनं मम
यद्बलं स्वं समाश्रित्य सीतां मे हृतवानसि. २४२

तद्रणे दर्श य श्वस्त्वं सप्राकारां सतोरणाम्
लंकां चमूं च पश्यारे! शरैर्विध्वंसितां मया.' २४३

इति श्रुत्वा तं 'ज ये'ति प्रोक्त्वा लंकां ततो गतौ
तौ दशाननमब्रूतामनुभूतं यदात्मना. २४४

'कौसल्यातन य स्तस्य तत्तुल्यो लक्ष्मणोऽनुजः
बिभीषणश्च मतिमान्सुग्रीवश्चेंद्रविक्रमः. २४५

चत्वारस्ते प रा क्रांताः सप्राकारामिमां पुरीम्
उत्पाट्य संक्रामयितुं सर्वे तिष्ठंतु वानराः. २४६

लंकामेकः स म र्थोऽस्ति जेतुं तिष्ठंतु ते त्रयः
राजन्नलं विरोधेन सीता रामाय दीयताम्.' २४७

उवाच राजा श्री मांस्तं सारणं, 'जानकीमहम्
न प्रदास्यामि रामाय त्वं त्रस्तस्तद्ग्रहाद् ध्रुवम्. २४८

को हि नाम प रा क्रम्य रणे मां जेतुमर्हति?

स इत्युक्त्वारुरोहोच्चं प्रासादं तद्दिदृक्षया. २४९

ष्ट्वा प्लवंग　म बलं सर्वत्रार्णवसन्निभम्

पप्रच्छ सारणं तेषां नामसंख्यादि रावणः. २५०

एष नीलो ग　ज श्चैष सेतुहेतुर्नलस्तथा

एषोऽगदो वालिपुत्रो जांबवानृक्षराडयम्. २५१

कामरूपं　य त्तेजः सैन्यं चापि प्रधानतः

सारणः कथयामास तौ च श्रीरामलक्ष्मणौ. २५२

न्यसंख्या गि　राऽशक्या सुग्रीवसचिवा हि ये

एषां कोटिसहस्राणि नव पंच च सप्त च. २५३

संख्यातास्तेऽ　म राणां तेजोगुणसमन्विताः

तथा शंकुसहस्राणि तथा वृंदशतानि च.' २५४

त्वोत्कर्ष रा　ज राजभ्राता रामस्य वर्णितम्

भर्त्सयामास तौ वीरौ कथांते शुकसारणौ. २५५

इन्यां भवंतौ　य न्मूढौ शत्रुपक्षप्रशंसिनौ

यदि पूर्वोपकारैर्मे न क्रोधो मृदुतां व्रजेत्.' २५६

तावमात्यौ　ज नितत्रासौ तावथ रावणः

शार्दूलं प्रेषयामास चरमन्यैश्चरैः सह. २५७

विश्य सैन्यं　य लेन स पश्यन् मायया वृतः

बिभीषणेन शार्दूलो ग्राहितः पापधीरिति. २५८

ोक्षितः सोऽपि रा मेण वध्यमानः प्लवंगमैः

अन्येऽपि राक्षसाः कीशैर्निगृहीता दयालुना. २५९

शार्दूलः स्व　म थनं बलिभिर्वानरैः कृतम्

पृष्टो राक्षसराजेन कथयामास सांजलिः, २६०

यथा समर्थः　श्री रामस्तथा राजन्! बिभीषणः

तेन सैन्ये प्रविष्टोऽहं गृहीतस्ताडितः परैः. २६१

रिणीतोस्मि[1]　रा जंस्तैर्बलमध्येऽत्यमर्षणैः

---

१. परितः नीतोऽस्मि.

यथा हनूमान् लंकायां बध्वाऽस्माभिः पुरा प्रभो! २६२
पारिणीय च म न्यूग्रे रक्ताद्रोऽहं प्लवंगमैः
रामसंसदि नीतोऽस्मि कृपया तेन मोचितः. २६३
कपिसैन्ये भ्र ज न् वध्यश्चरस्तेषामसंशयम्
आयुःशेषात्प्रसादाच्च प्रभोर्जीवन्निहागतः.' २६४
इत्युक्त्वा स भ य व्यग्रः शार्दूलः सुरशत्रुणा
पुनः पृष्टोऽब्रवीन्मुख्यान्सुग्रीवादीन्सुरांशजान्. २६५
विद्युज्जिह्वं सु रा रातिर्महामायमथाब्रवीत्
'शिरो रामस्य सशरं धनुश्च कुरु माचिरम्.' २६६
चक्रे तथैव म नसः सीताया मोहकृत्स तत्
दृष्ट्वा दशाननस्तस्मै भूषणं स्वं ददौ मुदा. २६७
ततः श्रीदानु ज स्तन्वीमशोकवनिकागताम्
सीतां ददर्श दुष्टात्मा तामुवाच पतिव्रताम्. २६८
'जानक्याश्रित्य य स्य त्वं वीर्यं मामवमन्यसे
स हतो राक्षसै रात्रौ, सुप्तोऽब्ध्युत्तररोधसि. २६९
छिन्नं मूलं ते ज ढेऽद्य त्वद्दर्पो निहतो मया,
भव मैथिलि! भार्या मे, किं मृतेन करिष्यसि? २७०
बिभीषणो नि य मितो, हतौ सुग्रीवमारुती
दिशं प्रव्राजितः शेषैर्लक्ष्मणः प्लवगैः सह. २७१
प्रहस्तेन प रा भूतो हतो भर्ता तवाबले!
क्षतजार्द्रं रजोध्वस्तमिदं तस्याहृतं शिरः.' २७२
शृण्वंत्यां पर म क्रूरां वार्तां तस्यां दशाननः
उवाच राक्षसीं 'येन रामस्य शिर आहृतम्. २७३
तमानयाशु, श्री हीनं पत्युः पश्यत्वियं शिरः'
इति श्रुत्वा तयाहूतो विद्युज्जिह्वो निशाचरः. २७४
तच्छिरो धनु रा दाय मायावी विनयान्वितः
प्रणामं शिरसा कृत्वा रावणस्याग्रतः स्थितः. २७५

तमुवाच स  म त्यांशो, 'विद्युज्जिह्व ! सकार्मुकम्
अग्रतः कुरु सीतायाः शीघ्रं दाशरथेः शिरः.' २७६

धनुः शिरोंयु  ज युतं सीतायाः पुरतस्तदा
निक्षिप्यादर्शनमगात्स मायावी क्षपाचरः. २७७

सीता दृष्ट्वा प्रि  य स्यैव मत्वा तत्कार्मुकं शिरः
विजगर्हेऽत्र कैकेयीं क्रोशंती कुररी यथा. २७८

बाला गता ध  रा मार्ता सा छिन्ना कदली यथा
तच्छिरः समुपाघ्राय विललापायतेक्षणा. २७९

'हा ! हतास्म्यद्य म  न्नाथ ! पितृवाक्पालनव्रत !
त्वन्नाशात्पश्चिमावस्थां गतास्मि विधवा कृता.' २८०

विलप्य देवी  ज गतीसंभवा बहुशस्तदा
उवाच रावणं दीना मर्तुकामा पतिव्रता. २८१

'साधु मां घात  य क्षिप्रं रामस्योपरि रावण !
समानय पतिं पत्न्या कुरु कल्याणमुत्तमम्.' २८२

विलपंत्यां रा  ज पुत्र्यामागत्य रजनीचरः
उवाच राक्षसं 'त्वाशु[1] प्रहस्तो द्रष्टुमिच्छति.' २८३

एतच्छ्रुत्वा स  य क्षेशभ्राता क्षिप्रं विनिर्गतः
जगामादर्शनं शीर्षं तच्च कार्मुकमुत्तमम्. २८४

राक्षसानां स  रा जा तु मंत्रिभिः सह निश्चयम्
युद्धस्य कृत्वा स्वबलं सिद्धं चक्रे महाबलः. २८५

सीतां मोहानि  म ग्नां तां सरमा नाम राक्षसी
आश्वासयामास सखी बिभीषणमनःप्रिया. २८६

मा भैस्त्वमार्ये  श्री मांस्ते कुशली सानुजः पतिः
रावणेन कृता माया माऽयासं शोकतो व्रज. २८७

सिंधुमुत्तीर्य  रा मस्ते सखि ! साध्वि ! समागतः
उपस्थितं त्वां कल्याणं, शीघ्रं पत्या समेष्यसि. २८८

---

१. त्वा+आशु=त्वां सत्वरम्.

दशकंठस्य म रणं प्राप्तं नास्त्यत्र संशयः
मोक्ष्यते ग्रथितां रामो वेणीमेणीदृशस्तव. २८९

त्वमाज्ञां कुरु ज न्माहं कृतार्थं कर्तुमात्मनः
आगमिष्यामि रामे ते निवेद्य कुशलं वचः.' २९०

सीतोवाचा'ऽऽश्र य स्तस्य रावणस्य दुरात्मनः
त्वया निवेदनीयो मे वर एष वृतः सखि !.' २९१

सत्वरा सख रा शिः सा सरमा परमादृता
तथेत्युक्त्या द्रुतं गुप्ता ययौ यत्र दशाननः. २९२

बिभीषणस्य म हिषी बुद्ध्वा दशमुखाशयम्,
आगत्य पार्श्वं जानक्या प्रीत्या दत्तासनाऽब्रवीत्. २९३

'शृणु सीतेऽस्य ज ननी तथा मातामहश्च यः
ताभ्यां बोधः कृतो यत्नात्त्वन्मोक्षार्थं पुनःपुनः. २९४

बोधितोऽप्यन य ज्ञोऽयं रावणः सखि ! दारुणः
न त्वामुत्सहते मोक्तुमर्थमर्थपरो यथा. २९५

अमृतस्त्वां रा ज पुत्रि ! क्रूरो मोक्तुं दशाननः
जातु नोत्सहते स्पष्टो निश्चयोऽस्य समंत्रिणः. २९६

एनं पापाश य मरिं हत्वा रामः सलक्ष्मणः
सीतेऽयोध्यां प्रति क्षिप्रं त्वां नेष्यत्यासितेक्षणे !.' २९७

मंत्रकाले सु रा रातेर्भेरीशंखरवाकुलः
शब्दोऽभूत्कपिसैन्यानां कंपयन् धरणीं मुहुः. २९८

माल्यवान्नाम म तिमान् राज्ञो मातामहः स्वयम्
धर्मन्यायाविदां मुख्यो बोधयामास रावणम्. २९९

'न नाशनीया श्री रेषा त्वयाऽधर्मेण रावण !
रामाय दातुं योग्येयं सीता, प्राप्तं यतो भयम्.' ३००

इवाच रक्षो रा जस्तं, 'वनादानीय सुंदरीम्
किमर्थं प्रतिदास्यामि मनुष्यस्य भयादहम्? ३०१

द्विधा भज्येय म प्येव न नमेयं तु कस्यचित्

एष मे सहजो दोषः स्वभावो दुरतिक्रमः. ३०२

कृपणो मनु ज स्त्वं तु रणे शाखामृगाश्रयम्
वधिष्यामि प्रतिज्ञेयं सत्या विश्वजितो मम.' ३०३

व्रीडितः स्वाल य मगात्क्रुद्धे रक्षसि माल्यवान्
लंकायास्तु तदा गुप्तिं कारयामास रावणः. ३०४

पूर्वद्वारे प रा सद्यं प्रहस्तं वाहिनीपतिम्
लंकाया दक्षिणद्वारे महापार्श्वमहोदरौ ३०५

ज्येष्ठं च पश्चि म द्वारे स्थापयामास नंदनम्
व्यादिदेशोत्तरद्वारे रावणः शुकसारणौ. ३०६

राजराजानु ज स्तस्मिन्स्स्वयं च कृतनिश्चयः
कथयामास लंकाया गुप्तिं ज्ञात्वा बिभीषणः. ३०७

अमात्यास्तस्य य स्तेन लंकां गत्वा विरूपिणः
पनसानलसंपातिप्रभृत्याख्याः समागताः. ३०८

तैः संविधानं ज वनैर्लंकाया यन्निवेदितम्
तत्सर्वं विनिवेद्याथ कुंभकर्णानुजोऽब्रवीत्. ३०९

'अयुते द्वे ह य स्थानां गजारोहास्तथाऽयुतम्
अयुतं च रथारूढाः साग्रा कोटिश्च रक्षसाम्. ३१०

एकैकस्यात्र रा जेंद्र! युद्धार्थं रक्षसः प्रभो!
परीवारः सहस्राणां सहस्रमुपतिष्ठति. ३११

कर्तव्यो नात्र म न्युस्त्वां कोपयेऽहं न भीषये,
समर्थो ह्यसि वीर्येण सुराणामपि निग्रहे.' ३१२

ततोऽब्रवीत्स श्री रामो, 'नीलो वानरपुंगवः
प्रहस्तं प्रतियोद्धा स्याद्वानरैर्बहुभिर्वृतः. ३१३

अंगदः कपि रा जस्य पुत्र एष महाबलः
दक्षिणे बाधतां द्वारे महापार्श्वमहोदरौ. ३१४

हनूमान् पश्चि म द्वारे निष्पीड्येंद्रजितं स्वयम्
प्रविशत्वप्रमेयात्मा कपिभिर्बहुभिर्वृतः. ३१५

यः सदाशावि ज यकृत् प्रजापीडक उद्धतः
तस्याहं राक्षसेंद्रस्य स्वयमेव वधे धृतः. ३१६

वानरेंद्रः स्व य मयं जांबवांश्च महायशाः
राक्षसेंद्रानुजश्चैष गुल्मे[2] भवतु मध्यमे. ३१७

वयं सदा न रा कारा: सह योत्स्यामहे परान्
न कार्यं मानुषं रूपमृक्षैः कपिभिराहवे.' ३१८

एवमुक्त्वा स म तिमान्ससुग्रीवविभीषणः
आरुरोह सुवेलाद्रिं लक्ष्मणेन सह प्रभुः. ३१९

ते सुवेलस्य ज गतीधरस्य शिखरे स्थिताः
ददृशुर्यूथपा व्योम्नि रचितामिव तां पुरीम्. ३२०

प्राकारवल य स्थैस्तैर्नीलवर्णैर्निशाचरैः
ददृशुस्ते हरिश्रेष्ठाः प्राकारमपरं कृतम्. ३२१

तान् दृष्ट्वा ते वि ज यिनो राक्षसान् युद्धकांक्षिणः
मुमुचुर्विविधान्नादान् वानरा रामसन्निधौ. ३२२

वानरैः प्रल य प्रोद्यद्घनैरिव महारवैः
लंका प्रकंपिता सर्वा धीः श्रीश्चामरविद्विषाम्. ३२३

सततं भ्रम रा लुब्धाः सौगंधिक इवांबुजे
भ्रमराः समरापास्तस्वारिपोर्यशसि प्रभोः. ३२४

ततोस्तमग म त्सूर्यः संध्यया प्रतिरंजितः
पूर्णचंद्रप्रदीप्ता च क्षपा समभिवर्तत. ३२५

सौवर्णमेकं श्री मत्ते त्रिकूटशिखरं वरम्
ददृशुस्तत्र तां लंकां निर्मितां विश्वकर्मणा. ३२६

विचित्रां भास्व रा कारां प्रासादैरुपशोभिताम्
दशयोजनविस्तीर्णामद्भुतां द्विगुणायताम्, ३२७

वनैर्मनोर म गुणैः समंतादुपशोभिताम्
प्रातर्विलोक्य हरयो रम्याण्युपवनानि ते ३२८

---

१. दिग्विजयकारी. २. सेनासन्निवेशे.

विविशुर्वांशु ज वनाः सुग्रीवस्य निदेशतः
जग्मुर्दिशो भयात्तेषां नागाः सिंहाः खगा मृगाः. ३२९

ततो रामो वि य त्युच्चैः सुवेलस्य महागिरेः
आरुरोह ससुग्रीवश्चित्रं शृंगं द्वियोजनम्. ३३०

तत्र स्थितः स रा जेंद्रो दिशः सर्वा विलोकयन्
ददर्श लंकां कनकप्राकारेण विराजिताम्. ३३१

दशकंठं चा म राम्यां श्वेतच्छत्रेण शोभितम्
तस्या गोपुरशृंगस्थं ददर्श सुदुरासदम्. ३३२

तं कुबेरानु ज न्मानं दृष्ट्वाऽशु स कपीश्वरः
उत्थाय पुप्लुवे क्रोधात्प्रभो रामस्य पश्यतः. ३३३

सुग्रीवो निर्भ य स्वांतस्तृणीकृत्य दशाननम्
पतितो गोपुरे स्थाने सोऽब्रवीत्परुषं वचः ३३४

'भर्तू रामस्य ज गतां सखा दासोऽस्मि राक्षस!
न मया मोक्ष्यसेऽद्य त्वं पार्थिवेंद्रस्य तेजसा.' ३३५

इत्युक्त्वा सर य स्तार्क्ष्य इव तस्योपरि द्विषः
पपाताकृष्य मुकुटं पातयामास भूतले. ३३६

तमाह र क्षो रा जो, 'रे! निर्मर्याद प्लवंगम!
सुग्रीवस्त्वं परोक्षे मे हीनग्रीवो भविष्यसि.' ३३७

ततः प्लवंग म पतिर्निशाचरपतिर्बली
नियुद्धं चक्रतुर्घोरं विश्वविस्मयकारकम्. ३३८

कृत्वा नियुद्धं श्री दस्य आज्ञा तेन सहातुलम्
सुवेलस्य पुनः शृंगमाजगाम महायशाः. ३३९

तमुवाच न रा धीशः, 'सखे! सुग्रीव! साहसम्
कर्तुं नार्हसि भूयस्त्वं मम प्राणो बहिश्चरः.' ३४०

अथावरुह्य म हतः सुवेलाग्राद्रघूत्तमः
रुरोध, तानि लंकाया द्वाराणि, प्रबलैर्बलैः. ३४१

अनुस्मरन् रा ज धर्ममाहूयांगदमब्रवीत्,

'गत्वा सौम्य! दशग्रीवं ब्रूहि मद्वचनादिदम्. ३४२

ऋषिदेवाहि य क्षाणामवलिप्तेन यत्त्वया
त्यक्त्वा ह्रियं दयां नानाप्रकारं पीडनं कृतम्. ३४३

तद्भोविप्रसु रा राते! दाराहरणकर्षितः
आगतोऽहं ससुग्रीवो लंकाद्वारे व्यवस्थितः. ३४४

गमिष्यसि त्वं म हर्षिराजर्षिपदवीमरे!
मद्बाणैर्निहतो युद्धे भविष्यसि यदि स्थिरः. ३४५

बलेन येन ज नकतनयां माययाधम!
मामतिक्रामयित्वा त्वं हृतवांस्तन्निदर्शय. ३४६

सीतां त्वमादा य यदि त्वभ्येषि शरणं न माम्
अराक्षसमिमं लोकं कर्तास्मि निशितैः शरैः. ३४७

धर्मात्मा तेऽनु ज न्मायं श्रेष्ठो मां शरणं गतः
लंकैश्वर्यमिदं श्रीमत् ध्रुवं प्राप्नोत्यकटकम्. ३४८

न राज्यमन य ज्ञेन भोक्तुं क्षणमपि त्वया
शक्यं मूर्खसहायेन पापेनाविदितात्मना. ३४९

कृत्वा धृतिं प रा मद्य त्वं युध्यस्व मया सह,
मृतो रणे मद्विशिखैः पाप! पूतो भविष्यसि. ३५०

चक्षुःपथं म म प्राप्य न जीवन्प्रतियास्यसि
यद्याविशसि लोकांस्त्रीन् खगीभूतो निशाचर! ३५१

जघन्[1]यजं त्वां श्री दस्य हितं वाक्यं ब्रवीम्यहम्
सुदृष्टा क्रियतां लंका क्रियतां चौर्ध्वदेहिकम्.' ३५२

इत्थमुक्तः स रा मेण तारेयोऽक्लिष्टकर्मणा
जगामाकाशमाविश्य मूर्तिमानिव हव्यवाट्. ३५३

ददर्शासीन म व्यग्रं रावणं सचिवैः सह
तस्थौ तस्याविदूरेण निपत्याग्निसमप्रभः. ३५४

ततो भर्तुर्नि ज गतां श्रावयामास तद्वचः,

---

१. कनीयांसं भ्रातरम्.

‘दूतोऽहं कोसलेंद्रस्य रामस्याक्लिष्टकर्मणः. ३५५

अंगदस्तन य स्तस्य वालिनश्चेत्त्वया श्रुतः

आह त्वां राघवो रामः कौसल्यानंदवर्धनः. ३५६

निष्पत्य त्वं सु रा राते! युध्यस्व, पुरुषो भव,

हंतास्मि त्वां सहामात्यं सपुत्रज्ञातिबांधवम्. ३५७

त्रयो लोकाः सु त्र नसो भविष्यंति हते त्वयि

बिभीषणस्य चैश्वर्यं भविष्यति महात्मनः. ३५८

उद्धारिष्यामि ज गतीसुराणां त्वाद्यकंटकम्

हरेरिभ इव स्थातुं न त्वं मम पुरः क्षमः. ३५९

देवदानव य क्षाणां गंधर्वोरगपक्षिणाम्

शत्रुमुन्मूलयिष्यामि त्वामहं लीलया रणे. ३६०

उक्तं सत्यं नि ज वचः करिष्यामि दशानन!

न चेत्सत्कृत्य वैदेहीं प्रणिपत्य प्रदास्यसि.’ ३६१

तारायास्तन य स्येत्थं श्रुत्वा स परुषं वचः

रुष्टः शशास सचिवानसकृद्गृह्यतामिति. ६६२

जगृहुर्युव रा जानं चत्वारो रजनीचराः

ग्राहयामास तारेयो बलं दर्शयितुं तदा. ३६३

स तान् विहंग म समान् भुजसक्तान्महाबलः

समादायोत्पपाताशु प्रासादं शैलसन्निभम्. ३६४

यदोत्पपात श्री मान्त्स प्रबलः पक्षिराडिव

तस्योत्पतनवेगात्ते निर्धूताः पतिता मृताः. ३६५

तस्य पादभ रा क्रांतः प्रासादः स महानपि

पफाल शतधा वज्रप्रहाराद्धिमवानिव. ३६६

प्लवंगमानां म ध्ये स रामपार्श्वमुपागतः

भंक्त्वा प्रासादशिखरं नाम विश्राव्य चात्मनः. ३६७

ततः प्रवृत्त ज न्यं तद्दारुणं कपिरक्षसाम्

कबंधा उत्थिता यत्र दुस्तराः शोणितापगाः. ३६८

ताराधास्तन य स्तत्र रात्रियुद्धे भयंकरे
तमिंद्राजितमत्युग्रं चकार विरथं बली. १६९

महामायः स रा श्रौ तावदृश्यो रामलक्ष्मणौ
बबंध शरबंधेन कूटयोधी निशाचरः. १७०

बद्धौ भुजंग म वैरैर्विद्यया शरतां गतैः
निष्पंदौ पतितौ वीरौ मूर्छितौ रामलक्ष्मणौ. १७१

जातौ स्वक्षत ज स्रुत्या भूयस्या समराजिरे
तौ रामलक्ष्मणौ दृष्टौ पुष्पिताविव किंशुकौ. १७२

तावुवाच वि य द्वर्ती रावणिर्मा सुरेश्वरः
द्रष्टुमासादितुं वापि न शक्तः किं पुनर्युवाम्. १७३

यमलोकं रा ज पुत्रौ नयामीति वदन् शरैः
निर्बिभेद पुनस्तीक्ष्णैः प्रजहर्ष ननाद च. १७४

तयोर्जगन्ना थ कयोः शरीरेऽगुलमंतरम्
न ह्यविद्धं बभूवोग्रैः फणिभिर्बाणतां गतैः. १७५

दृष्ट्वा स्वरश रा क्रांतौ जगत्यां जगतां पती
बिभीषणश्च सुग्रीवः संतापं परमं गतौ. १७६

कपयो हनु म न्मुख्या व्याकुला पारिवार्य तौ
तस्थुर्द्यां च भुवं चापि वीक्षमाणा वनौकसः. १७७

सलक्ष्मणं तं श्री रामं पारिवार्य स्थितान् कपीन्
यूथपानिषुभिर्घोरैरताडयदरिंदमः. १७८

एवं सर्वान् प रा भूय हर्षयन् सर्वराक्षसान्
प्रहृष्टो रावणिर्लंकां प्रविवेश महायशाः. १७९

बिभीषणोऽथ म तिमानब्रवीद्वानरेश्वरम्,
'पर्यवस्थापयात्मानमनाथं मां च संकटे. १८०

त्वं वैक्लव्यं त्य ज क्षिप्रं न मृतौ रामलक्ष्मणौ,
पश्येमौ न जहाति श्रीरग्रेऽपीयं न हास्यति. १८१

तस्मादाश्वास य स्वांतं बलं च प्लवगाधिप!

यावत्सैन्यानि सर्वाणि पुनः संस्थापयाम्यहम् ३८२

एवमाश्वास्य रा जानं राक्षसेंद्रो बिभीषणः
विद्रुतं वानरानीकं तत्समाश्वासयत्पुनः. ३८३

इंद्रजित्सुस म थैस्त त्प्रियं पित्रे न्यवेदयत्
उत्पपातासनाद्धृष्टः स पुत्रं परिषस्वजे. ३८४

बिभीषणाग्र ज न्मा ता राक्षसीरब्रवीत्स्वयम्,
'हताविंद्रजिताख्यात[1] वैदेह्या रामलक्ष्मणौ. ३८५

तां पुष्पकं प्र य त्नेन समारोप्यायतेक्षणाम्
दर्शयध्वं हतौ मर्त्यौ युद्धे दाशरथी इति. ३८६

यदाश्रयाद्रा ज पुत्री गर्वान्मां नोपतिष्ठते
सोऽस्या भर्ता सह भ्रात्रा निहतो रणमूर्धनि. ३८७

दृष्ट्वा रामक्ष य मियं निरपेक्षाद्य मैथिली
मामुपस्थास्यतेऽगत्या सर्वाभरणभूषिता.' ३८८

तथेत्युक्त्वाशु रा क्षस्यः सीतामारोप्य पुष्पकम्
निन्युस्त्रिजटया सार्धं सापश्यद्रामलक्ष्मणौ. ३८९

तौ मृतावेव म त्वा सा विललाप पतिव्रता,
'पुत्रिण्यविधवेत्यूचुर्ये मां तेऽनृतवादिनः ३९०

विहाय दीनां श्री मान्मां करुणोऽयं कथं गतः?
हा कौसल्ये! हा सुमित्रे! हा कैकेयि! सुतौ मृतौ! ३९१

लक्षणानि ध रा देवैर्यान्युक्तानि शुभान्यलम्
तान्यद्य निहते रामे वितथान्येव सर्वशः.' ३९२

तथा रामस्य म हिषीं कृपणां बहुविह्वलाम्
परिदेवयमानां तां राक्षसी त्रिजटाब्रवीत्, ३९३

'मा विषादं प्र ज शुभे! भर्तायं तव जीवति
मूर्च्छितः सानुजो रामो मुखयोः श्रीः शुभानयोः. ३९४

हते पत्यावा य ताक्षि! योधानां वदनान्यलम्

---

१. वैदेह्या आख्यात (सीतायै कथयत).

विवर्णानि भवंत्येषां न तथा, न मृताविमौ. ३९५

इदं हि राज रा जस्य विमानं पुष्पकं महत्
दिव्यं त्वां धारयेनैव यद्येतौ गतजीवितौ. ३९६

विस्रब्धा भव म द्वाक्यैरनुमानैः सुखोदयैः
अहतौ पश्य काकुत्स्थौ स्नेहादेतद्ब्रवीमि ते.’ ३९७

एवमुक्ता त्रि ज टया सीता सुरसुतोपमा
कृतांजलिरुवाचेमामेवमास्त्विति सा सती. ३९८

सन्निवर्त्य वि य द्यानं सीता त्रिजटया सह
अशोकवनिकां भूयो राक्षसीभिः प्रवेशिता. ३९९

ततः स वीरोऽ ज कुलप्रदीपः प्रत्यबुध्यत,
भ्रातरं दीनवदनं पर्यदेवयदातुरः, ४००

‘पंचत्वमद्य य द्येष प्राप्तः सौमित्रिरात्मवान्
किं नु मे सीतया कार्यं? परित्यक्ष्याम्यसूनहम्. ४०१

शक्या लोकेषु रा मा मे सीता तुल्या विचिन्वता
न लक्ष्मणसमो भ्राता सचिवः सांपरायिकः. ४०२

किं नु वक्ष्यामि म म तां कौसल्यां मातरं? बत!
किं कैकेयीं किं सुमित्रां पुत्रदर्शनलालसाम्? ४०३

साधुर्गुणाढ्यः श्री मान् यः पातितो हंत! मत्कृते
धिङ् मां दुष्कृतकर्माणमनार्यं दुःखभाजनम्. ४०४

अस्यामेव ध रा यां स्वं देहं त्यक्ष्याम्यहं बत!
तत्तु मिथ्या प्रलपितं मां प्रधक्ष्यत्यसंशयः. ४०५

यल्लंकायां नो म यायं कृतो राजा बिभीषणः
अस्मिन्मुहूर्ते सुग्रीव! प्रतियातुमितोऽर्हसि. ४०६

पुरस्कृत्यात्म ज ममुं ससैन्यस्तर सागरम्
शोकेन सत्त्वहीनं त्वां रावणोऽभिभविष्यति. ४०७

यत्तु शक्यं व य स्येन सुहृदा वा परं मम
कृतं सुग्रीव! तत्सर्वं भवताधर्मभीरुणा. ४०८

यत्कार्यं वान रा! मित्रैर्भवद्भिर्हनुमन्मुखैः
तत्कृतं तेन तुष्यामि स्वस्ति वोऽस्तु यशस्विनः. ४०९
अनुज्ञातास्ते म या ये समुत्तीर्याऽब्धिमागताः
भो ऋक्षा! वानराः! सर्वे यथेष्टं गंतुमर्हथ.' ४१०
यैः श्रुतं तस्य ज गतीभर्तुस्तत्परिदेवितम्
रुरुदुस्ते भृशं दीना ऋक्षाश्च कपयः समम्. ४११
स्थापयित्वा प्र य त्नेन सर्वाः सेना बिभीषणः
आजगाम गदापाणिस्त्वरितं यत्र राघवः. ४१२
तमंजनाभं ज विनं दृष्ट्वा सर्वे वनौकसः
दिशः प्रदुद्रुवुर्भीता मत्वा रावणिमागतम्. ४१३
हेतुं तेषां भ य स्याथ ज्ञात्वा राजा बिभीषणम्
जांबवंतमुवा'चैतान् पर्यवस्थापय द्रुतम्. ४१४
जांबवान्वान रा न्सर्वान्पलायनपरान्स्वयम्
सांत्वयामास संत्रस्तान्सन्निवर्त्य महाजवः. ४१५
बिभीषणः स म क्लेशो दृष्ट्वा तौ रामलक्ष्मणौ,
'हा हे'त्युक्त्वा स शोकार्तो रुरोद विललाप च. ४१६
'जिह्मेन[1] हंत श्री मंतौ वंचितावृजुविक्रमौ[2]
जीवन्नद्य विपन्नोऽस्मि नष्टराज्यमनोरथः. ४१७
कृतः सकामोऽ रा तिर्नो मेघनादेन रावणः'
विलपंतं परिष्वज्य तमुवाच हरीश्वरः. ४१८
भविष्यति स म ग्रस्ते कामो धैर्यं सखे! कुरु
त्यक्त्वा मोहं निहंतारौ रावणं रामलक्ष्मणौ.' ४१९
अथ वाल्यनु ज स्तत्र सुषेणं श्वशुरं तदा
अब्रवी'द्गच्छ किंष्किधां गृहीत्वा रामलक्ष्मणौ. ४२०
दशास्यस्यात्य य महं कृत्वा पुत्रादिभिः सह
मैथिलीमानयिष्यामि शक्रो नष्टामिव श्रियम्. ४२१

---

१. कुटिलमतिना. २. ऋजुः सरलः विक्रमः ययोस्तौ.

सुषेणो वान रा धीशमब्रवी'त्क्षीरसागरे
चंद्रद्रोणौ गिरिश्रेष्ठौ वर्तेते वानरेश्वर! ४२२
तत्रौषध्यौ ते म हत्यौ विद्येते नामनी तयोः
संजीवकरणीत्येवं विशल्यकरणीति च. ४२३
ओषधी ते च ज वनाः संपातिपनसादयः
यांस्त्वानयितुमाश्वेको हनूमान्वा महाजवः. ४२४
हताः सुराः सं य ति ये दैत्यैस्तान् धिषणः[1] स्वयम्
याभ्यामुत्थापयामास निर्मिताभ्यां स्वयंभुवा.' ४२५
तस्मिन्काले द्वि ज श्रेष्ठो महता पक्षवायुना
कंपयन्सार्णवां क्षोणीमाजगाम भुजंगभुक्[2]. ४२६
दुद्रुवुस्तेऽह य स्त्रस्ताः पक्षिराजे समागते
जाता व्राता[3] वानराणां मुदिता रुदिताकुलाः. ४२७
जयाशिषा न रा धीशौ प्रतिपूज्य खगेश्वरः
विममर्श[4] च पाणिभ्यां मुखे चंद्रसमप्रभे. ४२८
स्पृष्टास्तेन स म स्तास्ते तयोः संरुरुहुर्व्रणाः[5]
सुवर्णे च तनू स्निग्धे प्रभ्वोराशु बभूवतुः. ४२९
धृतिश्च शक्तिः श्री स्तस्य सानुजस्य प्रभोस्तदा
द्विगुणाभूत्स्मृतिर्बुद्धिर्लीलया मानुषाकृतेः. ४३०
सस्वजे च सु रा धीशप्रतिमौ तावुभौ मुदा
रामस्तमब्रवी'दावां व्यसने रक्षितौ त्वया. ४३१
यथा तातं प्रे म सिंधुं यथाजं च पितामहम्
तथा भवंतमासाद्य हृदयं मे प्रसीदति. ४३२
को भवान् वि र[6] ज स्के त्वं वसानो वसने शुभे
दिव्यस्रगंगरागश्च दिव्याभरणभूषितः.' ४३३
विनतातन य स्तेऽहं सखा प्राणो बहिश्चरः

---

१. बृहस्पतिः. २. भुजंगान् भुंक्ते सः गरुडः ३. समूहाः. ४. पस्पर्श. ५. यथापूर्वं संरूढमांसा बभूवुः ६. विगतं रजः मलः ययोस्ते निर्मले वस्त्रे.

नाम्ना गरुड इत्युक्त्वा पृष्ट्वा सोऽगाद्यथागतम्. ४३४

प्रहृष्टा वान रा दृष्ट्वा नीरुजौ रामलक्ष्मणौ
सिंहनादं तदा नेदुर्लांगूलं दुधुवुश्च ते. ४३५

ततः प्लवंग म वरा द्रुमानुत्पाट्य कोटिशः
लंकाद्वाराण्युपाजग्मुर्युद्धकामा महाबलाः. ४३६

राजराजानु ज स्तेषां ज्ञात्वा हर्षस्य कारणम्
संशयस्थं बलं मेने धूम्राक्षं प्राहिणोदथ. ४३७

कृतः कीशक्ष य स्तेन धूम्राक्षेण रणाजिरे
गिरेः शिखरमादाय स हतो वायुसूनुना. ४३८

वज्रदंष्ट्रं च ज न्यार्थं प्रेषयामास रावणः
अंगदस्तस्य चिच्छेद शिरस्तदसिना रणे. ४३९

अकंपनं ज य स्यार्थे निर्गतं रावणाज्ञया
हनूमानवधीद्युद्धे तरुणा तरुणार्करुक्. ४४०

प्रहस्तोऽथ सु रा नीकपराभवविचक्षणः
रावणप्रहितो युद्धे नीलेन शिलया हतः. ४४१

अथ श्रुत्वा प्र म थितं प्रहस्तं वाहिनीपतिम्
निर्ययौ स्वयमेवोग्रः क्रूरकर्मा दशाननः. ४४२

हंतुं सुकंठः श्री दस्य भ्रातरं भीमविक्रमम्
गृहीत्वाद्रेर्महाशृंगमभिदुद्राव वेगवान्. ४४३

सायकैर्यातु रा जस्तच्चूर्णीकृत्य महाबलः
शरेणैकेन सुग्रीवं पातयामास भूतले. ४४४

शैलान्गृहीत्वा म हतो गवाक्षगवयर्षभाः
प्रदुद्रुवुस्तेऽपि शरैस्तेन विद्ध्वा निपातिताः. ४४५

यथा वातेन ज लदा भग्नास्तेन वलीमुखाः.
जग्मुः शरण्यं शरणं रामं कामं भयाकुलाः, ४४६

कोदंडमादा य परं हंतुं गंतुं समुद्यतम्

---

४. कंपितवन्तः.

प्रांजलिर्लक्ष्मणो राममब्रवीदग्रतः स्थितः, ४४७
'पर्याप्तोऽहं प रा भूतौ रावणस्य दुरात्मनः
आर्य! कार्यमिदं कर्तुमनुजानीहि मां प्रभो!' ४४८
तं सोऽब्रवी'त्स म र्थोऽसि गच्छ यत्नपरो भव
आत्मानं रक्ष सौमित्रे! रावणो हि महाबलः' ४४९
परिष्वज्याग्र ज मथो नत्वा सौमित्रिराहवम्
ययौ ददर्श दिक्तुंडं छादयंतं शरैररीन्. ४५०
तं वायुतन य स्तस्य समासाद्य रथं रणे
उवाच दक्षिणं बाहुमुद्यम्याद्भुतविक्रमः, ४५१
'अवध्यत्वं कं ज जस्य वराद्देवासुरादिभिः
प्राप्तं त्वया दशग्रीव! वानरेभ्यस्तु ते भयम्. ४५२
दक्षिणो मम य[1] त्तोऽयं बाहुरद्य समुद्यतः
विधमिष्यति ते देहे भूतात्मानं[2] चिरोषितम्.' ४५३
संक्रुद्धो यातु रा जस्तमब्रवी'त्प्रहर द्रुतम्
ततः पराक्रमं ज्ञात्वा त्वां वधिष्यामि वानर!' ४५४
तमब्रवीत्स म रुतः सूनुः क्रुद्धं दशाननम्,
'त्वं मया निहतं पूर्वमक्षमात्मसुतं स्मर.' ४५५
रोषेण बंधुः श्री दस्य तलेनोरसि मारुतिम्
आजघानाहतस्तेन स चचाल मुहुर्मुहुः. ४५६
स्थैर्यं कृत्वा सु रा रार्ति तलेनैवाजघान सः
दशग्रीवः कंपितोऽभूद्भूमिकंपे यथाचलः. ४५७
दृष्ट्वा विसंज्ञ म मरा ऋषयो वानरा मुदा
विनेदुः स[3]त्वथाश्वास्य रावणो हरिमब्रवीत्, ४५८
'साधु वानर! ज न्ये त्वं श्लाघनीयोऽसि वीर्यतः.'
तमब्रवीत्कपि'र्वीर्यं धिगस्तु मम रावण! ४५९

---

१. यत्नवान्. २. जीवात्मानम्. ३. सावधानो भूत्वा. आङ्पूर्वात् श्वसतेः स्वार्थे णिच्.

जीवस्यद्यापि   य स्त्वं मे[1] निःशंकं तलताडितः
सकृत्तु प्रहरेदानीं दुर्बुद्धे[2]! किं विकत्थसे? ४६०
ततस्त्वामम   रा राते! मामको मुष्टिरुद्धतम्
लोकपीडाकरं मत्तं नयिष्यति यमक्षयम्,' ४६१
ततः स पर   म क्रुद्धो मुष्टिमावृत्य दक्षिणम्
पातयामास वेगेन वानरोरसि वीर्यवान्. ४६२
स प्रभंजन   ज स्तेन ताडितो दृढमुष्टिना
पुनःपुनः संचचाल प्रवाते विटपी यथा. ४६३
दृष्ट्वा वायोः का य जं तं व्याकुलं दशकंधरः
समुत्सृज्य महातेजा नीलं प्रति समभ्यगात्. ४६४
समाश्वस्तः सोऽ ज नाजो दृष्ट्वा नीलेन संगतम्
उवाच मारुति'र्नेदं युक्तं ते दशकंधर!' ४६५
क्षिप्ता नीलेन   य इलाधरा[3] वृक्षाश्च भूरिशः
रावणस्तान्प्रचिच्छेद शरैरशनिसंनिभैः. ४६६
ह्रस्वरूपः   सु रा रातेर्ध्वजाग्रे निपपात सः
जज्वाल रावणः क्रोधात्ततो नीलो ननाद च. ४६७
सौमित्रिहनु   म द्रामा रावणास्याग्निनंदनम्
दृष्ट्वा ध्वजाग्रे चापाग्रे किरीटाग्रे च विस्मिताः. ४६८
तथैव बंधुः   श्री दस्य कपिलाघवविस्मितः
अस्त्रमाहारयामास दीप्तमाग्नेयमद्भुतम्. ४६९
चुक्रुशुर्वान   रा हृष्टा भ्रान्तं दृष्ट्वा दशाननम्.
क्रुद्ध आग्नेयसंयुक्तं शरमादाय रावणः, ४७०
अब्रवीन्नील   'म य त्वं जीवितं रक्ष वानर!'
इत्युक्त्वाऽस्त्रप्रयुक्तेन शरेण तमताडयत्. ४७१
नीलः पपात   ज गतीपृष्ठे तत्कालमेव सः
परं पितुश्चात्मनश्च तेजसा न मृतस्तदा. ४७२

---

१. मया. २. हस्तदोषः–दुर्बुधे. ३. इलायाः पृथिव्याः धराः पर्वताः.

ततोऽरातिर्ज    य प्रेप्सुः सौमित्रिमभिदुद्रुवे
स तमा'हार्हसि कपीन्द्र योद्धुं पश्य मां स्थितम्.' ४७३
तमुवाच  सु  रा राति'र्दिष्ट्या दृष्टोऽसि राघव
अस्मिन् क्षणे मृत्युलोकं यास्यसि त्वं ममाशुगैः.' ४७४
अब्रवीत्स  स  म न्युस्तं 'किं पाप! त्वं विकत्थसे?
महाप्रभावा गर्जंति न जातुचिदसत्तम!' ४७५
ततः श्रीदानु  ज श्चक्रे युद्धं सौमित्रिणा सह
सौमित्रिश्च महातेजास्तस्य चिच्छेद सायकान्. ४७६
सुमित्रातन    य स्याथ ललाटे स दशाननः
निचखान शरं घोरं ब्रह्मदत्तं पविप्रभम्. ४७७
स रामस्यानु   ज स्तेन व्याकुलोऽभूत्क्षणं पुनः
संज्ञां प्राप्य महातेजाः शत्रोश्चिच्छेद कार्मुकम्. ४७८
त्रिभिस्तीक्ष्णैः सा य कैस्तमाजघानाशु मर्मणि
स चचाल पुनः संज्ञां कृच्छ्रात्प्राप दिगाननः. ४७९
ततः शक्तिं स्व  रा माशु ब्रह्मदत्तां महाबलः
प्रेषयामास संक्रुद्धां कालीं व्यालीं नवामिव. ४८०
शरैरस्त्रैः  स  म थैस्तां जघान भरतानुजः
तथापि शक्तिः सा तस्य विवेशैव भुजांतरम्. ४८१
[२]ब्राह्मयापि शक्त्या श्री मान्स ताडितोऽपि स्तनांतरे

---

१. दिक्संख्याकानि दशेति यावत् आननानि यस्य स दशाननः रावण इत्यर्थः.
२. महाप्रभावया ब्रह्मशक्त्या ताडितस्यापि सौमित्रेः कुतो वधो नाभूत्? तत्राह ब्राह्मयेति. श्रीमान्सः (लक्ष्मणः) ब्राह्मयापि शक्त्या स्तनांतरे ताडितोऽपि आत्मानं प्रति विष्णोरमीमांस्यभागं (अचिंत्यमंशम्) अनुस्मरत्. अडभाव आर्षः. अयं श्लोको मूलतः कविनोद्धृतोऽतस्तत्रत्या व्याख्या पाठकेभ्य उपह्रियते—भरतानुजः संख्ये ऊद्धर्तुं शक्यो नाभूत् कुतस्तत्राह शक्त्येति. अमोघया ब्रह्मशक्त्या स्तनांतर आहतः सौमित्रिर्विष्णोरमीमांस्यं निःसंशयविष्णुभागत्ववंतमियत्तया चिंतयितुमशक्यं वा विष्णोर्भागमात्मानं प्रत्यनुस्मरदन्वस्मरत्. न हि स्वीयं स्वं हि बाधतीत्याशयेन ब्रह्मशक्ति-

विष्णोरमीमांस्यभागमात्मानं प्रत्यनुस्मरत्. ४८२

द्वाभ्यां भुजाभ्यां रा जा तं जग्राहोपैत्य सत्वरम्
चालनेऽपि क्षमो नाभूत्किं तस्योद्धरणे पुनः. ४८३

तदानीं मुत म भ्येत्य रावणं वायुनंदनः
आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना. ४८४

राजराजानु ज स्तेन वमन्रुधिरमाकुलः
पपात मूर्च्छितो नेदुर्देवदैत्यमहर्षयः. ४८५

कपिस्तमान य त्तूर्णं रामाभ्याशं सुभक्तिमान्
शक्तिस्तमुत्सृज्य गता रावणस्य रथं प्रति. ४८६

*आश्वस्तोऽभूद रा तिघ्नो मुहूर्ताद्भरतानुजः
रावणोऽपि पुनर्योद्धुं धनुर्बाणान्समाददे. ४८७

दृष्टप्लवंग म वधो रामो रक्तांतलोचनः
हनूमंतं समारुह्य रावणं समभिद्रवत्. ४८८

तमाह मनु ज च्छ्रया, 'तिष्ठ कृत्वा ममाप्रियम्
क्व नु राक्षसशार्दूल! गत्वा मोक्षमवाप्स्यसि? ४८९

कर्ता तव क्ष य स्याहं पुत्रैः पौत्रैः प्रियैः सह
क्षणाद्येन जनस्थानं सर्वं नीराक्षसं कृतम्.' ४९०

एवमुक्तः सोऽ ज नाजं वहंतं राघवं रणे
आजघान शरैर्दीप्तैः पूर्ववैरमनुस्मरन्. ४९१

तस्यांजनाका य भुवः कालानलविषोपमैः
ताडितस्य शरैर्भूयस्तेजोवृद्धिरभूत्तदा. ४९२

रामो राक्षस रा जेन दृष्ट्वा भक्तं कृतव्रणम्
चकार विरथं सूतं हयान् हत्वा निरायुधम्. ४९३

छित्वा ध्वजं हि म करप्रभं छत्रमथेषुभिः

---

मूलापत्राणार्थं भगवत्तेजोंऽश एवाहमस्मीति ध्यातवान्. नटवदंगीकृतमनुष्यत्वस्येतरेषां दृढप्रतीत्यर्थं परं न सर्वदा तथा ध्यानं एवं च ब्रह्मभावनया लक्ष्मणेन स्वशरीरस्य गरीयस्त्वमापादितमित्युक्तं भवति इति. * इदमर्धं तालप्रतिसारितादुपरि कविनैव लिखितम्.

किरीटकूटं चिच्छेद जघानोरसि राक्षसम्. ४९४

वज्रप्रहारैः श्री मान्यो न चचाल दशाननः

स रामबाणाभिहतो मुमोह धनुरत्यजत्. ४९५

तमुवाच प रा धीनं राघवो विरथं खलम्,

'अलं श्रांतोऽसि राजंस्त्वं युद्धे नास्त्यद्य ते बलम्. ४९६

गच्छ मुक्तोऽस्य म र्त्यारे! विश्रांतः श्वस्त्वमाहवम्

पुनः सैन्यैः परिवृतो योद्धुमेहि मया सह. ४९७

प्रेक्षिष्यसि भु ज स्थं मे वीर्यमाजौ स्वकैः सह

परिश्रांतं मृत्युवशं नयामि त्वां न राक्षस!' ४९८

एवमुक्तो भ य व्याप्तो हतदर्पो निशाचरः

विवेश लंकां रामेण लीलया युधि निर्जितः. ४९९

श्रीरामेण प रा भूतो बभूव व्यथितेंद्रियः

मातंग इव सिंहेन गरुडेनेव पन्नगः. ५००

उवाच पर म व्यग्रः प्रेक्षमाणो निशाचरान्,

'व्यर्थं तपो मे यद्युद्धे मानुषेणास्मि निर्जितः. ५०१

इदं तत्कंज ज वचो घोरं मामभ्युपस्थितम्,

मानुषेभ्यो विजानीहि भयं त्वमिति तत्तथा. ५०२

देवदानव य क्षैस्तैर्गंधर्वोरगराक्षसैः

अवध्यत्वं मया प्राप्तं, मानुषेभ्यो न याचितम्. ५०३

अनरण्यो[१]ऽपि ज गतीपतिर्मामशपत्पुरा

शप्तोऽहं वेदवत्या[२] च सेयं जनकनंदिनी. ५०४

उमा[३] शंभोः प्रि य तमा मह्यं कैलासचालने

---

१. अनरण्यो नाम श्रीरामपूर्वजो नृपती रावणं शशाप मत्कुलजो दाशरथिस्त्वां संयुगे वधिष्यतीति. २. पुरा किल ब्रह्मर्षेः कुशध्वजस्य सुता वेदवती नाम विष्णुप्राप्त्यर्थं हिमवत्पार्श्वे तपश्चचार, तपस्यंतीं तां रावणो धर्षितवान्. ततश्च वन्हौ प्रविशंती सा रावणं शशाप त्वद्वधार्थमहं पुनरुद्भविष्यामीति. ३. उमाशापः कैलासशिखरचालनवेलायां रावणस्य स्त्रीनिमित्तं मरणमिति तिलके.

नंदीश्वरश्चोपहासे घोरं शापं ददौ पुरा. ५०५

तद्राक्षसाः! स्म रा म्यद्य निमित्तं मद्भयस्य यत्

यूयं प्रियाः सहाया मे यत्नं कर्तुमिहार्हथ. ५०६

महासत्त्वो म म भ्राता कुंभकर्णो विबोध्यताम्,

प्रयत्नः क्रियतां दुर्गप्राकारद्वाररक्षणे. ५०७

संरक्षणीया श्री रद्य प्रयत्नेन निशाचराः!

सुखं स्वपिति निश्चितः कुंभकर्णो विबोध्यताम्. ५०८

स हि संख्ये प रा क्रांतः ककुदं सर्वरक्षसाम्

वानरान् राजपुत्रौ च क्षिप्रमेव हनिष्यति. ५०९

रामेण संग्रा म इह प्रभग्नस्य सुदारुणे

भविष्यति न मे शोकः कुंभकर्णे विबोधिते.' ५१०

भर्त्रेत्युक्ताः प्र ज ग्मुस्ते कुंभकर्णनिवेशनम्

गंधमाल्यं महद्भक्ष्यमादाय रजनीचराः. ५११

ते कुंभकर्णं य त्नेन महता राक्षसोत्तमाः

दिनद्वयेनायुतशः कृच्छ्रेण प्रत्यबोधयन्. ५१२

प्रबुद्धो मांस रा शीन्स भुक्त्वा नानान्नपर्वतान्

सहस्रशो मद्यकुंभान् पीत्वा स्नातो घटश्रुतिः. ५१३

यूपाक्षात्स स म ग्रं तत्सचिवाद्वृत्तमात्मनः

प्रबोधकारणं श्रुत्वा कुंभकर्णस्तमब्रवीत्. ५१४

'हरिसैन्यं रा ज पुत्रौ तौ चाहं रामलक्ष्मणौ

जित्वा प्रथममेवाजौ ततो द्रक्ष्यामि रावणम्,' ५१५

महोदरो न य ज्ञस्तं कुंभकर्णं तदाब्रवीत्,

'श्रुत्वा प्रभुवचः शत्रून्पश्चादपि विजेष्यसि.' ५१६

स प्रतस्थेऽग्र ज स्यादौ दर्शनार्थं महातनुः

---

१. यस्माद्वानरमूर्तिं मां दृष्ट्वा राक्षसदुर्मते । मौर्ख्यान्मामवजानीषे परिहासं च मुंचसि ॥ तस्मान्मद्रूपसंयुक्ता मद्वीर्यसमतेजसः । उत्पत्स्यंति वधार्थाय कुलस्य तव वानराः ॥ इति नंदिकेश्वरः शशाप.

कुंभकर्णः पदन्यासैः कंपयामास मेदिनीम्. ५१७

बहिस्थाः कप य स्तस्य व्रजतो राजवर्त्मनि
दर्शनात्कुंभकर्णस्य त्रस्ताः सर्वे पलायिताः. ५१८

केचिच्छरण्यं रा जेंद्रं राघवं शरणं ययुः
क्रममाणं महाकाशं पुरा नारायणं यथा. ५१९

तथा दृष्ट्वा त म त्युग्रं रामो दशरथात्मजः
कोऽयमत्युच्छ्रितः श्रीमानित्यपृच्छद्विभीषणम्. ५२०

बिभीषणस्तं श्री मंतं राघवं जगतः पतिम्
प्रणम्याकथयत्तस्य नामवीर्याद्यशेषतः. ५२१

'राम! येन सु रा धीशः साक्षात्कालश्च निर्जितः
ऐरावतैकदंतेन वासवो युधि ताडितः. ५२२

भक्षिताश्च स म र्थेन प्रजा येन महौजसा
यं दृष्ट्वा त्रिदशाः सर्वे कालोऽयमिति मोहिताः. ५२३

ब्रह्मा यमाह ज नितस्त्वं हि विश्रवसा ध्रुवम्
प्रजानाशाय तत्पाप! मृतकल्पः शयिष्यसि. ५२४

ब्रह्माग्रजेन य स्यार्थे प्रार्थितः सन् पुराब्रवीत्,
'शयिता ह्येष षण्मासमेकाहं जागरिष्यति.' ५२५

सोऽयं राक्षस रा जस्य कुंभकर्णोऽनुजः प्रभो!
उत्थापितो बलादद्य राज्ञा योद्धुं त्वया सह.' ५२६

रामस्तमाह, 'म तिमन्! कथमेनं महाबलम्
वानरा वारयिष्यंति' तमुवाच बिभीषणः, ५२७

'उच्यतां मनु ज श्रेष्ठ! वानरा माययारिणा
बिभीषिकार्थं[1] समरे यंत्रमेतत्समुच्छ्रितम्. ५२८

ज्ञात्वा मायाम य मिमं सर्वे शाखामृगाः प्रभो!
ये भीता दर्शनेनास्य ते भविष्यंति निर्भयाः.' ५२९

दशकंठानु ज वचः श्रुत्वा दाशरथिः स्वयम्

---

१. भयोत्पादनार्थम्.

आह सेनापतिं नीलं स तथाकथयत्कपीन्. ५३०
'यंत्रं मायाम य मि 'ति श्रुत्वा सर्वे प्लवंगमाः
गृहीत्वागान्नगान् हृष्टा लंकाया द्वारमभ्ययुः. ५३१
कुंभकर्णः प रा भूत्वा खिन्नमग्रजमब्रवीत्,
'राजंस्त्वया बलवता वैरमुत्पादितं कथम्? ५३२
यः शत्रुमव म त्योग्रमात्मानं नाभिरक्षति
अवाप्नोति हि सोऽनर्थान्स्थानाच्च [1]व्यवरोप्यते. ५३३
पूर्वं यदुक्तं श्री मंस्ते प्रियया मेऽनुजेन च
तदेव नो हितं वाक्यं यथेच्छासि तथा कुरु.' ५३४
क्रुद्धो राक्षस रा जस्तमुवा'चाहं गुरुस्तव
अनुशाससि किं मां त्वं? यद्युक्तं तद्विधीयताम्. ५३५
विभ्रमाद्वाथ म नसो मोहाद्वीर्याश्रयेण वा
यन्नाभि[2]पन्नमधुना व्यर्था तस्य पुनः कथा. ५३६
यद्यस्ति स्वाग्र ज हृति स्नेहः स्वास्मिंश्च विक्रमः
यदि कार्यं ममैतत्ते हृदि कार्यतमं मतम्. ५३७
अस्मिन्काले तु य द्युक्तं तदिदानीं विचिंत्यताम्
मम[3]पनयजं दुःखं विक्रमेण समीकुरु. ५३८
रुष्टं राक्षस रा जानं ब्रुवाणं धीरदारुणम्
कुंभकर्णः शनैः श्लक्ष्णमुवाच परिसांत्वयन्. ५३९
'शृणु राजन्म म वचः संतापेनालमुत्थितम्
रोषं च संपरित्यज्य स्वस्थो भवितुमर्हसि. ५४०
दैन्यं रक्षोरा ज! चित्ते मयि जीवति मा कुरु
तमहं नाशयिष्यामि यत्कृते परितप्यते. ५४१
राजन्! कालेऽत्र य द्योग्यं कर्तुं स्निग्धेन बंधुना
शत्रूणां कदनं पश्य क्रियमाणं मया रणे.' ५४२
इत्युक्तवंतं ज न्यार्थं समुद्युक्तं दशाननः

---

१. स्थानात् भ्रश्यते. २. नांगीकृतम्. ३. अनीतिजम्.

भूषणैर्भूषयामास कुंभकर्णं महाबलम्. ५४३

कुंभकर्णः प्रि य भ्रातुः पादौ नत्वा निपीडितम्
तं परिष्वज्य युद्धाय प्रतस्थे शितशूलभृत्. ५४४

पादन्यासैर्ध रा मार्तां कुर्वन् नादेन वानरान्
कंपयन्निर्गतोऽत्युग्रः पुराद्बहुबलैर्वृतः. ५४५

तस्य देहस्य म हतः परीणाहो धनुःशतम्
उच्छ्रायः षट्शतधनुःप्रमाणः परिकीर्तितः. ५४६

विलंघयित्वा श्री मान्स प्राकारं पर्वतोपमः
निर्ययौ नगरात्तूर्णं कुंभकर्णो भयंकरः. ५४७

सर्वेऽपि वान रा स्त्वस्तास्तमायातं सुदारुणम्
दृष्ट्वा शकटचक्राक्षं सहसा विप्रदुद्रुवुः. ५४८

तानंगदः स म रतो विमुखान् यूथपान् कपीन्
नीलादीनब्रवी'द्वीरा महतीयं बिभीषिका.' ५४९

ते तारातनु ज स्यातिप्रयत्नेन प्लवंगमाः
निवृत्ता युगपज्जघ्नुस्तं शिलाशिखरद्रुमैः. ५५०

देहे शिलोच्च य क्रूरे विशीर्णास्तस्य ते द्रुमाः
शिलाश्च शिखराण्यद्रेः शतशः प्राज्यतेजसः. ५५१

वलीमुखव रा स्तेन निहता बहवो रणे
रक्तार्द्रा दुद्रुवुस्तेन तीर्णो येन पथार्णवम्. ५५२

अंगदस्तान्भ्र म च्चित्तान् वानरान् पुनरब्रवीत्,
'अवतिष्ठत युध्यामो निवर्तध्वं प्लवंगमाः! ५५३

द्रुतानां नैव ज गतीपृष्ठे पश्यामि वः स्थलम्
दारा ह्युपहसिष्यंति सोऽधिको जीवतां वधः. ५५४

रामं दृष्ट्वा ना य मद्य क्रूरो जीवन् गमिष्यति
दीप्यमानमिवासाद्य पतंगो जातवेदसम्. ५५५

द्रवमाणास्तु ज वना अंगदेन वलीमुखाः
सांत्वनैश्चानुमानैश्च ततः सर्वे निवर्तिताः. ५५६

आर्यांत आस्था य मार्ति तस्थुः संग्रामकांक्षिणः
पर्यवस्थापिताः सूक्तैरंगदेन प्रहर्षिताः. ५५७

ततस्तान् वान रा न्वीरान् भक्षयामास राक्षसः
नासापुटाभ्यां कर्णाभ्यां तस्य केचिद्विनिर्गताः. ५५८

शैलशृंगैस्तं म रुतस्ताडयामास नंदनः
तमाजघान शूलेन कुंभकर्णो भुजांतरे. ५५९

भीमं ननाद श्री मान्स मारुती रक्षसाहतः
रक्षोगणा विनेदुस्तं समीक्ष्य व्यथितं कपिम्. ५६०

ऋषभं च ध रा यां स शरभं गंधमादनम्
नीलं गवाक्षं चरणे पातयामास राक्षसः. ५६१

तं समारुह्य म हिभृत्तुल्यं ते कपयो रुषा
ददंशुर्दारयामासुर्नखैर्जघ्नुश्च मुष्टिभिः. ५६२

यथा सर्पान् द्वि ज पतिर्भक्षयन् परिधावति
तथैव कुंभकर्णस्तान्कीशानीशानविक्रमः. ५६३

तारायास्तन य स्तेन मुष्टिना ताडितो हृदि
पपात भूमौ संत्यक्तो महसा सहसार्दितः. ५६४

सुग्रीवो वान रा धीशः शैलशृंगेन वक्षसि
तमाजघान तद्भिन्नं विशाले तद्भुजांतरे. ५६५

शूलं चिक्षेप म दिरामदांधः स निशाचरः
समुत्पत्य गृहीत्वा तद्बभंज पवनात्मजः. ५६६

शृंगमुत्पाट्य ज गतीधरस्य मलयस्य सः
जघान तेन सुग्रीवं पातयामास मूर्च्छितम्. ५६७

यथा वातस्तो य दं तं संप्रगृह्य जहार सः
हनूमांश्चिंतयामास किं कार्यमिति बुद्धिमान्. ५६८

'मोक्षितश्चेत्ति ज स्वामी मयाद्य बलशालिना
अप्रीतिश्च भवेदस्य कीर्तिनाशश्च शाश्वतः. ५६९

मूर्च्छितोऽद्य स्व य मयं मुहूर्ताद्वानरेश्वरः

मोक्षं प्राप्स्यति सेनां स्वां तावदाश्वासयाम्यहम्. ५७०

एवमाजौ प रा क्रम्य तमादाय कपीश्वरम्
विवेश लंकां विजयी कुंभकर्णो महायशाः. ५७१

पूज्यमानः सु म नसां गंधोदानां च वृष्टिभिः
राजमार्गे गतो हृष्टः कुंभकर्णः शनैःशनैः ५७२

अथ प्रबुद्धः श्री मान्स प्लवगेशो महाबलः
दैवगत्या बभूवास्य तद्धर्ष मोहशांतये. ५७३

प्लवंगमानां रा जाशु तस्य कर्णौ नखैः खरैः
लुलुंच नासां दशनैः पार्श्वौ च विददार सः. ५७४

छिन्नकर्णोऽत्य म र्षार्तो हृतनासो विरूपितः
आविध्य भूमौ सुग्रीवं कुंभकर्णः पिपेष सः. ५७५

अभिहृष्टोऽलं ज गत्यां हन्यमानोऽपि राक्षसैः
जगाम खं कंदुकवत् जवेन स हरीश्वरः. ५७६

प्रगर्जन्प्रल य प्रोद्यन्मेघधीरध्वनिर्द्रुतम्
वानराणां सार्वभौमो रामपार्श्वं जगाम सः. ५७७

आयुधं मुद्ग रा ख्यं स प्रगृह्य क्रोधनः पुरात्
पुनर्विनिर्गतो योद्धुं प्रलयज्वलनप्रभः. ५७८

खादन् प्लवंग म शतान्यंतकप्रातिमो यदा
चचार राक्षसो, भीताः शरणं राघवं ययुः. ५७९

तदा रामानु ज स्तस्य चिच्छेद कवचं शरैः
निचखानाशुगान्देहे शतशो वज्रदारुणान्. ५८०

कुंभकर्णः स्म य आह, 'साधु साधु महाभुज!
युध्यता मामभीतेन ख्यापिता वीरता त्वया. ५८१

वीर! रामानु ज! रणे तोषितोऽहं त्वया भृशम्
नेंद्रोऽपि मेऽग्रतो युद्धे स्थितपूर्वः कदाचन. ५८२

अंतकस्याप्य य लेन जेतुर्मेऽतुलतेजसः

---

१. गंधोदकानाम्. २. आहत्य.

तिष्ठन्नप्यग्रतः पूज्यः किमु युद्धप्रदायकः. ५८३

त्वामनुज्ञाप्य रा जेंद्रं गंतुमिच्छामि लक्ष्मण!

तमेव हंतुमीहा मे सर्वं तस्मिन् हते हतम्. ५८४

दृष्टः पराक्र म स्तेऽद्य सत्यं त्वय्यद्भुतं बलम्.'

'एष दाशरथी रामास्तिष्ठती'त्यब्रवीत्स तम्. ५८५

ततः स रामं श्री मंतमभिदुद्राव राक्षसः

कुंभकर्णो महातेजाः कंपयन्नखिलां महीम्. ५८६

रामः शचीव रा रातिं हृदि विव्याध मार्गणैः

विद्धस्य हस्तात्तस्योर्व्यां[1] पपातोग्रगदा तदा. ५८७

रक्षः प्लवंग म क्षान्त्स भक्षयामास राक्षसः

मत्तो रुधिरगंधेन मद्येन च रुषोद्धतः. ५८८

राममुद्दिश्य ज गतीधरशृंगमरिंमहत्

चिक्षेप समरे क्रुद्धः कुंभकर्णो महाबलः. ५८९

कौसल्यातन य स्तूर्णं शरैश्चिच्छेद सप्तभिः

द्वे शते वानराणां तत्पतमानमपातयत्. ५९०

तस्मिन्काले न रा धीशं रामं सौमित्रिरब्रवीत्,

'मत्तः शोणितगंधेन स्वान् परांश्चैष खादति. ५९१

एनं प्रमत्त म धुना वानराः शतशः प्रभो!

अधिरोहंतु भारार्तो नान्यान्हन्यादयं कपीन्.' ५९२

अधिरूढाखि ज गतां नाथस्याज्ञानुवर्तिनः

व्यधूनयत्तान् वेगेन दुष्टहस्तीव हस्तिपान्. ५९३

कोदंडमादा य तदा तमुवाच रघूत्तमः

'आगच्छ राक्षसश्रेष्ठ! रक्षःकालमवेहि माम्. ५९४

दशाकंठानु ज स्तेन तथोक्तः प्रभुणा स्वयम्

रामोऽयमिति विज्ञाय जहास विकृतस्वरम्. ५९५

उवाच च, 'प्र य त्नं त्वं कुरु राम! मयि ध्रुवम्

---

१. हस्तदोषः—तस्योर्व्या.

न विराधः खरो वाली कुंभकर्णोऽहमागतः ५९६

पराक्रमं त्वं रा जीवलोचनाजौ प्रदर्शय
ततस्त्वां भक्षयिष्यामि दृष्ट्वादौ तव विक्रमम्.' ५९७

श्रुत्वातिविक्र म स्येत्थं वाक्यं तल्लक्ष्मणाग्रजः
कृत्वा युद्धं प्रचिच्छेद बाहुं तस्य समुद्गरम्. ५९८

भ्रातुः स बाहुः श्री दस्य वज्राच्छिन्नाद्रिशृंगवत्
पपात, पतता तेन मर्दिता कपिवाहिनी. ५९९

स्वर्भानुरिव रा केशं रामं हंतुं स राक्षसः
अभिदुद्राव वामेन करेणोत्पाट्य भूरुहम्. ६००

सतालं वाम म पि तं रामश्चिच्छेद तद्भुजम्
तेनापि चूर्णिता रक्षःकपिभूरुहपर्वताः. ६०१

दृष्ट्वा छिन्नभु ज द्वंद्वमागच्छंतं जवेन तम्
तत्पादावर्धचंद्राभ्यां चिच्छेदाशु रघूत्तमः. ६०२

तस्य पादौ क्ष य करावुग्रौ वानररक्षसाम्
विनादयंतौ प्रदिशो दिशोऽब्धिं च निपेततुः. ६०३

यथैव चंद्रं रा हुः स व्यादायास्यं भयंकरम्
रामं दुद्राव पादाभ्यां भुजाभ्यां रहितोऽप्यरिः. ६०४

अपूरयद्धे म पुंखैः शरैस्तस्याननं प्रभुः
शशाक वक्तुं न तदा चुकूज च मुमूर्च्छ च. ६०५

अथाददे ते ज सेद्धं कालकल्पं शरं वरम्
वायुवेगं प्रचिक्षेप कुंभकर्णाय राघवः. ६०६

स कृतारिल य स्तस्य चकर्त सहसा शिरः
प्रयुक्तो वासवेनेव वज्रो वृत्रस्य विद्विषः. ६०७

देहं तत्तस्य ज लघौ छेदवेगोत्थितं शिरः
पपात पुरि वेश्म.नि प्राकारं चाप्यपातयत्. ६०८

दृष्ट्वा हतं सं य ति तं हृष्टा देवा महर्षयः
प्लवगाः पूजयामासुः श्रीरामं जयभागिनम्. ६०९

कुंभकर्णं प रा सुं तं राघवेण कृतं रणे
श्रुत्वा शोकाकुलो राजा स मुमोह पपात च. ६१०

विललाप स म र्थोऽपि दैन्यं प्राप्य स रावणः,
'हा वीर! बंधो! व्यसने त्यक्त्वा मां त्वं कथं गतः?

त्वया विना मे श्री र्नैष्टा किं कार्यं सीतया तया?
राज्येन नास्ति मे कृत्यं जीविते नास्ति मे मतिः. ६१२

प्राप्तो मया प रा नर्थः सुहृद्वाक्यमगृह्णता
बिभीषणेन विदुषा यदुक्तं सत्यमेव तत्. ६१३

शोकदोऽयं म म प्राप्तो विपाकस्तस्य कर्मणः
यन्मया धार्मिकः श्रीमान् स निरस्तो बिभीषणः.' ६१४

एवं बह्वनु ज ध्वंसाद्विलपंतं दशाननम्
तत्सुतस्त्रिशिरा वीरः सांत्वयन्नित्युवाच तम्, ६१५

'दैवाद्धतोऽद्या य माजौ मध्यमो नः पिता बली
पराङ्मुखहतः शोच्यो नैव योऽभिमुखो रणे. ६१६

विलपंति न रा जन् ये शूराः सूरातितेजसः[1]
त्रैलोक्यस्यापि विजये समर्थस्त्वमासि प्रभो! ६१७

स त्वं कस्मात्स म र्थोऽपि शोचस्यात्मानमीदृशम्
मा प्राकृत इव प्राज्ञ! शोकं कुरु सुरुग्घरम्[2], ६१८

ब्रह्मदत्तास्ति ज यिनी शक्तिश्च कवचं धनुः
दिव्यः शरः स्यंदनोऽपि सहस्रखरसंयुतः. ६१९

त्वया शचीभि य मुखा विशस्ता दैत्यदानवाः
स सर्वायुधसंपन्नो राघवं शास्तुमर्हसि. ६२०

यथेष्टं त्वं रा ज वर्य! तिष्ठाहं भ्रातृभिः सह
गमिष्यामि हनिष्यामि रणे रामं सलक्ष्मणम्. ६२१

श्रुत्वा स्वतन य स्यैवं वाक्यं रात्रिचरेश्वरः

---

१. सूरादपि सूर्यादपि अतिशयितं तेजो येषां ते. २. शोभनां रुजं कांतिं हरति स सुरुग्घरः तम्.

पुनर्जातामिवात्मानं मेने कालेन मोहितः. ६२२

प्रेषिताखिशि रा राज्ञा देवांतकनरांतकौ
अतिकायश्च ते तस्य सर्वे लब्धवराः सुताः. ६२३

वैमात्रेयौ स म थौं च भ्रातरौ वरदर्पितौ
पुत्रैश्चतुर्भिः सहितौ महापार्श्वमहोदरौ. ६२४

नरांतकं तु श्री मत्तं पित्रा संप्रेषितोऽगदः
मुष्टिनैवावधीदुग्रं कपिसैन्यतृणानलम्. ६२५

मारुतेः प्रख रा न्मुष्टिप्रहाराच्छिन्नमस्तकः
देवांतको जहौ प्राणान् यः पुरान्वर्थनामकः. ६२६

नीलो गृहीत्वा म हतो गिरेः शृंगं सपादपम्
क्षिप्तेन तेन हतवान् गजारूढं महोदरम्. ६२७

त्रिशिराश्चात्म ज स्तस्य रावणस्य महाबलः
गृहीत्वा तदसिं तेन निहतो वायुसूनुना. ६२८

महापार्श्वः सं य[1] दुग्रो भ्राता लंकापते रणे
ऋषभेण महातेजास्तस्यैव गदया हतः, ६२९

अतिकायः सु रा रातिरस्त्रविद्रणदारुणः
सौमित्रिणा हतः संख्ये ब्रह्मास्त्रेण रणाजिरे. ६३०

स्वपुत्रभ्रातृ म रणं श्रुत्वा शोकपरायणम्
दीनं सभायामालोक्य तातमिंद्रजिदब्रवीत्, ६३[illegible]

'मयि जीवत्य ज[2] प्राप्तद्विषद्भंगवरे युधि
न तात! मोहं त्वं गंतुमर्हस्यद्य महाभुज! ६३२

द्विषां समुद्र य स्याहमंतको हंत कोविदः
पश्याद्य रामं मद्बाणभिन्नदेहं सलक्ष्मणम्.' ६३३

शक्रशत्रुर्नि ज प्राज्यतेजो दर्शयितुं रणे
जगाम राक्षसानीकैर्वृतो वृत्र इवापरः. ६३४

ततस्स विज य प्राप्त्यै द्रव्यैर्युद्धभुवि स्थितः

१. संयति उग्रः २. अजात् ब्रह्मणः सकाशात् प्राप्तः द्विषद्भंगवरः येन तस्मिन्.

जुहुवे हुतभोक्तारमभिचार[1]विधानतः. ६३५

कृष्णच्छागं[2] सु रा रातिर्हुत्वा जीवंतमस्त्रवित्
पुनर्ब्रह्मास्त्रोपदेशं ब्रह्मणा समकारयत्. ६३६

स लब्ध्वा ब्राह्म म स्त्रज्ञस्तेन स्वधनुरादिकम्
युद्धोपकरणं सर्वं स विद्वानभ्यमंत्रयत्. ६३७

अंतर्हितः स श्री दस्य भ्रातृव्यः सर्ववानरान्
पातयामास विशिखैः पुनर्दाशरथी च तौ. ६३८

रामोऽब्रवीच्छ रा क्रांतं सौमित्रिं 'वत्स! दुःसहम्
सहस्वाव्यग्रमनसा ब्रह्मणोऽस्त्रं मया सह.' ६३९

स तेनास्त्रेण म हता सैन्यं रामं सलक्ष्मणम्
निषूदयित्वा स्वपुरीं विवेश विजयी मुदा. ६४०

नीलस्तारात्म ज स्तद्वत्सुग्रीवो जांबवानपि
तस्मिन्काले शरैर्व्याप्ता न किंचित्प्रतिपेदिरे. ६४१

बिभीषणः सा य कार्तान् यूथपानब्रवीत्स तान्,
'विषादस्य न कालोऽयं मा भैष्ट कुशली प्रभुः'. ६४२

मरुत्पुत्रोऽथ रा श्रौ तन्मानयित्वास्त्रमुत्थितः
तमाह यो यः सप्राणस्तं तमाश्वासयावहे. ६४३

उल्काहस्तौ स म थौ तौ रणशीर्षे विचेरतुः
ददृशाते सप्तषष्टिकोटिकीशोत्तमान् हतान्. ६४४

युक्तं स्वभाव ज रया जांबवंतं शरार्दितम्
दृष्ट्वा बिभीषणोऽपृच्छत्कच्चित्त्वं तात जीवसि?' ६४५

ब्रह्मणस्तन य स्तं स कृच्छ्रादुत्तरमब्रवीत्,
'त्वां स्वरेणाभिजानामि न पश्यामि बिभीषण! ६४६

तात! प्राणानां ज नेयः कश्चिद्धारयते रणे?'
इति श्रुत्वा जांबवंतमब्रवीत्स बिभीषणः, ६४७

'आर्य! धर्मेन य ज्ञस्त्वमतिक्रम्य रघूत्तमौ

---

१. अभिचारः शत्रुनाशार्थं कृतं देवताराधनरूपं कर्म. २. कृष्णमेषः.

सुग्रीवमंगदं चापि कस्मात्पृच्छसि मारुतिम्? ६४८
न तथा वान रा धीशे नांगदे नापि राघवे
आर्य! संदर्शितः स्नेहो यथा वायुसुते परः.' ६४९
तमब्रवीत्स म तिमान्, 'हतमप्यहतं बलम्
अस्मिन् जीवत्यन्यथा तु जीवंतोऽपि मृता वयम्.' ६५०
ततः स वृद्धं श्री मंतं जांबवंतं महामतिम्
पादौ गृहीत्वा शिरसा हनूमानभ्यवादयत्. ६५१
तमब्रवीच्छ रा तैः स, 'आगच्छ हरिसत्तम!
पर्याप्तविक्रमो नान्यस्त्वं सर्वांस्त्रातुमर्हसि. ६५२
त्वमेषां पर म स्त्राता सखा सर्वान्प्रहर्षय
विशल्यौ कुरु चाप्येतौ सशल्यौ रामलक्ष्मणौ. ६५३
हिमवंतं द्रुतं ज नेय! क्षिप्रं गच्छ महाबल!
कैलासर्षभयोर्मध्ये महानोषधिपर्वतः. ६५४
तत्रस्थामान य क्षिप्रं मृतसंजीवनीं तथा
दिव्याः सुवर्णसंधानाविशल्यकरणीरपि. ६५५
गृहीत्वा तास्त्व रा युक्तश्चतस्त्रस्त्वं महौषधीः
आगच्छ योजयित्वैतान्प्राणैराश्वासय स्वकान्' ६५६
एवमुक्तः स म रुतः पुत्र उत्थाय सत्वरम्
त्रिकूटशिखराद्व्योम्नि वेगादाप्लुप्लुवे हरिः. ६५७
तस्य भारेण ज गतीधरो भग्नो महानपि
लंकाभवत्प्रनृत्येव[1] प्रभग्नगृहगोपुरा. ६५८
गत्वा जवेन य स्तेन प्रोक्त ओषधिपर्वतः
तं योजनसहस्राणि प्रापातीत्य[2] महाकपिः. ६५९
तदौषध्यस्तु ज ग्मुस्ता मंक्ष्व[3]दर्शनमर्थिनम्
विज्ञायागतमुच्चैः स क्रोधं चक्रेऽनिलात्मजः. ६६०

---

१. प्रनृत्या प्रवृत्तनृत्या कंपमानेत्यर्थः. २. योजनसहस्राणि अतीत्य तं प्रापेति योजना. ३. द्रुतम्.

तमुवाचाद य स्त्वं यच्छ्रीरामे नग! तन्मम
पश्य दोर्बलमित्युक्त्वा शृंगं तस्योन्ममाथ सः. ६६१

तत्प्रगृह्य ध रा धरस्य शिखरं नगनागवत्
जगाम लंकां जवनः पवनस्य सुतो हरिः. ६६२

रराज तेन म रुतः सूनुः शृंगेण खे तथा
यथा धृतेन चक्रेण विष्णुस्तेजस्विना प्रभुः. ६६३

दृष्ट्वागतं तं श्री मंतं विनेदुः कपयो मुदा
ननाद सोऽपि महता हर्षेण कपिकेसरी. ६६४

निपपात ध रा यां स त्रिकूटस्य मरुत्सुतः
नत्वा हर्युत्तमेभ्योऽथ सस्वजे तं बिभीषणम्. ६६५

महौषधीना म मृतं गंधमाघ्राय राघवौ
बभूवतुर्विशल्यौ तावुत्तस्थुरितरेऽपि ते. ६६६

हतरक्षांसि ज लधौ राक्षसै रावणाज्ञया
क्षिप्तानि तेन नोत्तस्थुस्तान्यप्योषधिगंधतः. ६६७

स वायोस्तन य स्तूर्णं शृंगमोषधिभूभृतः
हिमवंतं निनायाथ पुनः प्रत्याजगाम च. ६६८

ततस्ते वान रा उल्काः समादाय महौजसः
सुग्रीवस्याज्ञया पुर्यां ससृजुर्ज्वलनं रुषा. ६६९

ददाह लंका म नलः कल्पांत इव दुःसहः
स्वनो रक्षःस्त्रीजनस्य शुश्रुवे शतयोजनम्. ६७०

विनिर्गतान् र ज न्यां ते राक्षसान्बहिराकुलान्
जघ्नुः प्लवंगाः कोपेन शिलाभिः शिखरैर्द्रुमैः. ६७१

रावणः प्रल य क्रुद्धकालकल्पो बलैर्वृतौ
कुंभकर्णस्य तनुजौ प्रेषयामास दारुणौ. ६७२

चक्रतुः सह ज न्यं तैर्वानरैस्तुमुलं तदा
वीरौ कुंभनिकुंभौ तौ शक्रशत्रू महाबलौ. ६७३

कंपनो विज य श्लाघी क्रुद्धो युद्धोद्यतस्तदा

अंगदं ताडयामास मर्मसूप्रतरैः शरैः. ६७४

अंगदो भूध रा च्छृंगं प्रगृह्य रणकर्कशम्
कंपनं सूदयामास प्रजंघं चापि मुष्टिना. ६७५

मैंदो यूपाक्ष म वधीत्केसरीव महागजम्
द्विविदः शोणिताक्षं च गरुत्मानिव पन्नगम्. ६७६

ततः स कुंभः श्री मांस्तं शरैः सप्तभिरंगदम्
विद्ध्वा मर्मणि तेजस्वी पातयामास मूर्च्छितम्. ६७७

सुग्रीवस्तं दु रा धर्षं कुंभं निजबलांतकम्
युद्धं कृत्वा धनुर्भक्त्वा प्रसन्नमतिरब्रवीत्. ६७८

'त्वं रावणस म स्तातसमोऽद्भुतपराक्रमः
प्रह्लादबालिवृत्रघ्नकुबेरवरुणोपमः.' ६७९

कुंभकर्णात्म ज स्तस्य श्रुत्वा वाक्यं महाबलः
बाहुयुद्धं चिरं चक्रे सुग्रीवेण सहाद्भुतम्. ६८०

सुग्रीवोऽथ ज य प्रेप्सुः कुंभमुत्क्षिप्य सागरे
पातयामास वेगेन तलं तस्य प्रदर्शयन्. ६८१

उत्पत्य साग रा त्कुंभः सुग्रीवमतिवेगवान्
आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना. ६८२

वानरेंद्रः स म न्युस्तं विशाले वक्षसि स्वयम्
मुष्टिनैव प्रहृत्याशु व्यसुं चक्रे रणाजिरे. ६८३

ततः कुंभानु ज न्मापि निकुंभः कालसन्निभः
जग्राह परिघं घोरं वज्रादप्यतिदारुणम्. ६८४

तं दृष्ट्वा सभ य स्वांता वानरा राक्षसा अपि
न शेकुः स्पंदितुं तस्य हनूमानग्रतः स्थितः. ६८५

स बली वात ज स्योग्रं परिघं भास्करप्रभम्
स्थिरे विशाले क्रोधांधः पातयामास वक्षसि. ६८६

परिघः स वि य त्युल्काशतवत्प्रबभौ तदा
विकीर्यमाणः शतधा वक्ष आहत्य मारुतेः. ६८७

मारुतिस्तं मु रा रातिं ताडयामास मुष्टिना
पुस्फोट चर्मवर्मास्य बहु सुस्राव शोणितम्. ६८८

स निजप्राड् म रुतः पुत्रं तस्य पिता यथा
सुग्रीवं, तं गृहीत्वाथ नादं चक्रे भयंकरम्. ६८९

वातस्य सूनुः श्री मान्स ह्रियमाणोऽपि तं रिपुम्
आजघानोरसि बली वज्रकल्पेन मुष्टिना. ६९०

पातितस्यार्चि रा वृक्षस्युत्पत्योच्चैर्निपत्य सः
उत्पाटयामास शिरो भैरवं नदतो महत्. ६९१

खरस्य पुत्रो म हता बलेन महसान्वितः
मकराक्षो ययौ योद्धुं रावणस्याज्ञयोद्धतः. ६९२

ते तेन भग्ना ज लदा वातेनेव प्लवंगमाः
संभ्रांतमनसः सर्वे दुद्रुवुर्भयपीडिताः. ६९३

तं वानरक्ष य करं वाचलं खरनंदनम्
अग्न्यस्त्रेणावधीद्रुद्रदत्तशूलधरं प्रभुः. ६९४

पुनर्वज्रध रा रातिः क्रुद्धस्य पितुराज्ञया
यज्ञभूमौ जुहावाग्निं रणे विजयसिद्धये. ६९५

स मेघनादो म हता ब्रह्मास्त्रेणाभिपालितः
जाज्वल्यमानं स्वरथमारुरोह महास्त्रवित्. ६९६

अंतर्हितो रा ज पुत्रौ शरैः श्रीरामलक्ष्मणौ
विव्याध यूथपान्सर्वान् प्लवगांश्च नभोगतः. ६९७

राघवावपि य त्नेन तिग्मान्मुमुचतुः शरान्
निकृत्य तं शक्रजितं पेतुस्ते शोणिताप्लुताः. ६९८

तेनातिविद्धौ ज नितव्रणदेहौ रणांगणे
बभूवतुर्दाशरथी पुष्पिताविव किंशुकौ. ६९९

सुमित्रातन य स्तत्र क्रुद्धः श्रीराममब्रवीत्
'ब्राह्ममस्त्रं प्रयोक्ष्यामि वधार्थं सर्वरक्षसाम्.' ७००

'वत्सैकस्याप रा धेन न सर्वान्हन्तुमर्हसि,'

इत्युवाच तदा रामः क्रुद्धो विद्धः खरैः शरैः. ७०१
'तस्यैवाहं प्र म थने यत्नमद्य महाभुज
करिष्यामी'ति चोवाच लक्ष्मणं पुण्यलक्षणम्. ७०२
'दिव्यास्त्रवेत्ता श्री मान्मां हनिष्यत्येव सर्वथा'
इति ज्ञात्वेंद्रजित्तूर्णं प्रविवेश पुरीं ततः. ७०३
निकुंभिलां सु रा रातिर्गंतुकामो महाखलः
स प्रादुर्भावयामास सीतां मायामयीं रथे. ७०४
निर्गत्य पश्चि म द्वाराद्दृष्ट्वा युद्धोद्यतौ प्रभू
तद्वारणार्थं तां मायां स प्रादुरकरोदरिः. ७०५
सत्यां सीतामां ज नेयो मन्यमानो हरिद्विषा
गृहीतमूर्द्धजां दृष्ट्वा हंतुकामं तमब्रवीत्. ७०६
'धिक्त्वां दुष्कर्म य स्यैतत्किं तवापकृतं खल!
साध्वीं जनकजां सीतां यदेनां हंसि निर्घृण! ७०७
सीतां हत्वाप रा धी त्वं न जीविष्यसि जातुचित्
वधार्हकर्मणा तेन मम हस्तगतो ह्यसि.' ७०८
इति ब्रुवाणो म रुतस्तनयो हरिभिः सह
अभ्यधावत्सुसंक्रुद्धो राक्षसेंद्रसुतं प्रति. ७०९
स तं क्षुरप्रां[1] ज लिकनाराचैः कपिवाहिनीम्
न्यवारयत्क्षोभयित्वा हनूमंतमथाब्रवीत्. ७१०
'न हंतव्याः स्त्रि य श्चेति यद्ब्रवीषि प्लवंगम!
पीडाकरममित्राणां यच्च कर्तव्यमेव तत्. ७११
यन्निमित्तं त्वं ज लधिं तीर्त्वा रामः सलक्ष्मणः
सुग्रीवश्चांगदश्चेमे कपयश्च समागताः. ७१२
इमां हत्वा त्व य महं त्वां रामं च सलक्ष्मणम्
सुग्रीवं च वधिष्यामि तं चानार्यं बिभीषणम्.' ७१३
तमेवमुक्त्वा रा तिस्तां रुदतीं जानकीं तदा

---

१. बाणविशेषैः

शितधारेण खड्गेन निजघानेंद्रजित्स्वयम्. ७१४

छिन्ना पपात म ह्यां सा रामेत्युक्त्वा तपस्विनी
तामिंद्रजित्तथा हत्वा ततो मारुतिमब्रवीत्. ७१५

'मया हतेति श्री[1] रेषा प्रिया रामस्य जानकी
पश्य वानर सर्वोऽयं निष्फलो वः परिश्रमः.' ७१६

तच्छ्रुत्वा वान रा स्तस्य दुर्मतेर्गर्जितं तथा
दृष्ट्वा विशस्तां सीतां च दुद्रुवुर्हेतिवादिनः[2]. ७१७

निवृत्ता हनु म द्वाक्यैस्तं पुरस्कृत्य यूथपाः
रक्षसां कदनं चक्रुः शिलाशिखरपादपैः. ७१८

दृष्ट्वा शिलामां ज नेयक्षिप्तां वेगेन रावणिः
तस्माद्देशादपाक्रामत्सा विवेश दृषद्ध्रुवम्. ७१९

निपतंत्या क्ष य स्तेषां रक्षसां शिलया कृतः
चापो रावणिना दंडः कालेनेव तदा धृतः. ७२०

जघ्नुः क्रूराः श रा स्तस्य बहून्वानरपुंगवान्
स मारुतिः प्लवंगाश्च शिलाभिर्भूरुहैः परान्. ७२१

स हनूमान्प्र म थितं रक्षोनीकं निवार्य तत्
यूथपानब्रवीत्सर्वान्'निवर्तध्वं प्लवंगमाः. ७२२

यन्निमित्तं नि ज प्राणांस्त्यक्त्वा युध्याम आकुलाः
सा हतेंद्रजिता सीता युद्धेन विफलेन किम्? ७२३

ज्ञात्वादावप्रि य मिदं महत्सुग्रीवराघवौ
तौ यत्प्रतिविधास्येते तत्करिष्यामहे वयम्.' ७२४

इति युद्धादां ज नेयं निवृत्तं हरिभिः सह
दृष्ट्वेंद्रजिद्धोतुकामो गतश्चैत्यं निकुंभिलाम्. ७२५

हुतो धनंज य स्तेन यज्ञभूमौ विधानतः
संध्यागत इवादित्य उत्थितो रक्ततर्पितः. ७२६

तस्य तेऽनुच रा स्तत्र राक्षसाः सुमहाबलाः

---

१. श्रियमप्यतिक्रम्य स्थिता. २. 'हा' इतिवादिनः.

तस्थुस्तद्रक्षणे यत्ता गृहीतविविधायुधाः. ७२७

हनूमता प्र म थने प्रियाया विनिवेदिते
पपात सहसा भूमौ राघवः शोकमूर्च्छितः. ७२८

रामं सुशीतैः श्री मंतमसिंचन् वानरा जलैः
आश्वासयामास तदा तं परिष्वज्य लक्ष्मणः. ७२९

सीताशोकप रा धीने रामे खिन्ने कपीश्वरे
गुल्मान्संस्थाप्य परित आजगाम बिभीषणः. ७३०

स श्रुत्वोवाच म तिमान् राघवं शोकपीडितम्,
'राम! मायाविना तेन सीता मायामयी हृता. ७३१

निकुंभिलां वि ज यदं यागं कर्तुं गतो ध्रुवम्
गच्छामस्तत्र यावन्न तस्य होमः समाप्यते. ७३२

त्वं स्वस्थहृद य स्तिष्ठ लक्ष्मणं प्रेषय द्रुतम्
रावणिर्विघ्निते यागे ध्रुवं वध्यो भविष्यति. ७३३

तत्त्वं संदिश रा जेंद्र! सौमित्रिं कार्यसिद्धये
हनिष्यत्येष तं युद्धे ततस्त्वमपि रावणम्.' ७३४

ततो रामस्त म त्यंतप्रियं लक्ष्मणमाशिषा
वर्धयित्वाहितं हंतुं प्रेषयामास सत्कृतम्. ७३५

यूथपैर्वात ज मुखैः सर्क्षराजविभीषणः
प्रणम्य रामं सौमित्रिर्जगाम बलसंवृतः. ७३६

कज्जलस्योच्च य प्रख्यं व्यूहमासाद्य रक्षसाम्
तस्थौ ब्रह्मविधानेन विजेतुं रघुनंदनः. ७३७

निशाचरा नि ज घ्नुस्ते शस्त्रैरस्त्रैः प्लवंगमान्
तानृक्षा वानराश्चापि ग्रावभिः शिखरैरगैः. ७३८

स संप्रहारो य तता तेषां वानररक्षसाम्
बभूव तुमुलोऽन्योन्यं क्रुद्धानामभिनिघ्नताम्. ७३९

उत्तस्थौ स दु रा धर्षो विषण्णे निहते बले

---

१. रक्षापुरुषस्थानानि ( चौक्या ).

आरुरोह रथं भीममसमाप्तक्रियो रुषा. ७४०

मारुतिस्तत्र म हता पादपेन महाबलः
रक्षसां कदनं चक्रे तं जघ्ने रावणिः शरैः. ७४१

बिभीषणेन श्री मान्स भ्राता रामस्य लक्ष्मणः
जहि रावणिमित्युक्तो दर्शयित्वा रणोद्यतम्. ७४२

स रावणिर रा तेस्तं पितृव्यं पक्षमाश्रितम्
गर्हयामास बह्वीभिर्दुर्वृत्तः परुषोक्तिभिः. ७४३

बिभीषणोऽपि म तिमांस्तमुवाचाग्रजात्मजम्,
'दीप्तालय इव त्यक्तः पिता ते दोषवान्मया. ७४४

पापस्त्वं मनु ज श्रेष्ठाल्लक्ष्मणान्न विमोक्ष्यसे
नेयमस्ति पुरी लंका न च त्वं न च ते पिता. ७४५

मानी दुरात्म य श्चासि बालो विनयवर्जितः
बद्धस्त्वं कालपाशेन ब्रूहि मां यद्यदिच्छसि.' ७४६

तस्य सौमित्रि रा रुह्य स्कंधं सूनोर्नभस्वतः
चकार युद्धं तुमुलं तदा रावणिना सह. ७४७

बिभीषणेन म थिता गदया तस्य वाजिनः
तत्सारथेः शिरः कायात्पातयामास लक्ष्मणः. ७४८

तमाह 'मनु ज त्वं न क्षमः स्थातुं ममाग्रतः
त्वामहं प्रेषयिष्यामि न चिराद्यमसादनम्.' ७४९

लक्ष्मणोऽविन य क्रौर्यमायाधर्मवशंवदम्
उवाच रावणिं, 'युद्धं कुरु त्वं किं विकत्थसे? ७५०

मां जेतुं कोऽपि ज गति क्षमो नास्ति निशाचर!
वाचा व्याहृत्य जानीषे कृतार्थोऽस्मीति दुर्मते! ७५१

अंतर्हितेन य स्तुच्छ! भवताचरितस्तदा
तस्कराचरितो मार्गो नैष वीरनिषेवितः. ७५२

पुरतस्तेऽस्म्य रा तेऽहं स्थितो मार्गणगोचरे
दर्शयस्वाद्य तत्तेजो वाचा किं त्वं विकत्थसे?' ७५३

इत्युक्तः सोऽत्य म र्षेण रावणिः सामितिंजयः
युद्धं चकार तुमुलं तेन सौमित्रिणा सह. ७५४

भग्ने शतांगे श्री मान्स लंकां गत्वा नवं रथम्
समास्थायाभ्ययात्तूर्णं परैरनुपलक्षितः. ७५५

रक्षोबलं श रा सारैः प्रममर्द बिभीषणः
चतुर्भिः सचिवैः सार्धं मारुतिश्च द्रुमोपलैः. ७५६

शस्त्रैरस्त्रैः स म र्थस्तं युद्धं कृत्वा स लक्ष्मणः
ऐंद्रास्त्रेण जघानाजाविंद्रशत्रुं महाबलम्. ७५७

कृते शिरोंबु ज च्छेदे रावणेरमराधिपः
मुमुदे सह लोकेशैर्नेदुर्दुंदुभयो दिवि. ७५८

पुष्पवृष्टिर्वि य त्संस्थैः कृता लक्ष्मणमूर्धनि
ने[2]नृतुश्चाप्सरोमुख्या गंधर्वा ललितं जगुः. ७५९

पादार्पितशि रा भ्राता रामेणालिंगितो मुदा
बिभीषणेनेंद्रजितो वधस्तस्मै निवेदितः. ७६०

मूर्ध्न्युपाघ्राय म र्माणि व्रणितानि पराशुगैः
पस्पर्श सदयं साश्रु श्रीरामो भ्रातृवत्सलः. ७६१

अंकमारोप्य ज नकः प्रियं पुत्रमिवानुजम्
रामोऽब्रवी'दहोरात्रैस्त्रिभिः कृच्छ्राद्धतो रिपुः. ७६२

निरामित्रोऽहं य शस्वी कृतोऽस्म्यद्य त्वया ध्रुवम्
त्वया नाथेन दुष्प्रापा सीता भूश्च न लक्ष्मण!' ७६३

इत्युक्त्वा मनु ज श्रेष्ठः सुषेणं हरिमब्रवीत्,
'विशल्यः क्रियतां क्षिप्रं सौमित्रिर्मित्रवत्सलः.' ७६४

एवमुक्तः प्र य त्नेन स पटुर्हरियूथपः
लक्ष्मणाय ददौ [3]नस्तः सुषेणः परमौषधम्. ७६५

गंधमाघ्राय रा जीवलोचनस्तस्य तत्क्षणम्
निर्वेदनो विशल्यश्च समपद्यत लक्ष्मणः. ७६६

---

१. रथे. २. मूलपाठः—अप्सरा ननृतुर्मुख्या. ३. नासिकायाम्.

ते च प्लवंग म श्रेष्ठाः सामात्यश्च बिभीषणः
कृता विशल्या मुदिताः सुषेणेन महात्मना. ७६७

रामोऽतिहृष्टः श्री दस्य भ्राता शोकाकुलोऽभवत्
सीतां हंतुं प्रगृह्यासिमशोकवनिकां ययौ. ७६८

सीता दृष्ट्वा ख रा सिं तं भीता सस्मार राघवम्
आर्या शुशोच कौसल्यां मंथरां च निनिंद सा. ७६९

सुपार्श्वो नाम म तिमानमात्यः शीलवांस्तदा
वारयामास तं सीतावधात्सूक्तिशतैर्मतैः. ७७०

ततो ज्येष्ठात्म ज स्यातिशोकव्याकुलमानसः
राक्षसान्प्रेषयायामास हंतुं दाशरथी रणे. ७७१

चलच्छैलोच्च य निभा महोत्साहा महौजसः
दशाननप्रिये युक्ता मुक्ताश्चापादिवेषवः. ७७२

लब्धलक्षाः सु रा णां ये युद्धे कज्जलमेचकाः[2]
नरमांसाशनाः क्रूराः शूराः परिघबाहवः. ७७३

चतुरंगेण म हता बलेन परिवारिताः
महाबलाः कवचिनः सर्वामरसुदुःसहाः. ७७४

ते रावणस्यां ज लिना प्रहिता अहिता दिवः
त्यक्तप्राणा विनिर्गत्य युयुधुर्विविधायुधाः. ७७५

तानाजावज य न्कीशा दाशरथ्योश्च मार्गणाः
गता यमक्षयं सर्वे मत्ताः सत्तापहेतवः. ७७६

अन्योन्यमेव ज घ्नुस्ते रामसादृश्यमोहिताः
गांधर्वास्त्रे संप्रयुक्ते राक्षसा विलयं गताः. ७७७

बाणैः कौसल्ये य मुक्तैर्मुहूर्तद्वयतो रणे
सप्तकोट्यस्तथैकोनत्रिंशल्लक्षाणि सद्रथाः. ७७८

हताश्च कुंज रा मत्तास्ते सहस्राणि विंशतिः
तथा द्वादश लक्षाणि तथैव दश कोटयः. ७७९

---

१. जंगमपर्वतसदृशाः. २. कज्जलमिव मेचकाः श्यामाः.

षष्टिस्तुरंगम वराः सहस्राण्यथ विंशतिः
लक्षाणि ते दशशतकोटिसंख्याः प्रमर्दिताः. ७८०

पदातयश्च श्रीशेन निहताः शतकोटयः
पंचचत्वारिंशदष्टाशीतिर्लक्षाणि चाहवे. ७८१

सिद्धर्षयः सुरा श्चैव गंधर्वाश्चारणास्तथा
साधु साध्विति रामस्य तत्कर्म समपूजयन्. ७८२

उवाच रामो मधुरं सुग्रीवादीन्प्रति प्रभुः,
'एतदस्त्रबलं भीमं मम वा त्र्यंबकस्य वा.' ७८३

हत्वा रक्षोराजसेनां शस्त्रास्त्रेषु जितक्लमः
संस्तूयते स्म त्रिदशै रामो हृष्टैर्महर्षिभिः. ७८४

राक्षसानां क्षयस्तेन रावणेन श्रुतो महान्
विलापो राक्षसीनां च शोकार्तानां सुदुःसहः. ७८५

शोकक्रोधपरा धीनो दशकंठस्ततः स्वयम्
नगरान्निर्ययौ हंतुं सबलौ रामलक्ष्मणौ. ७८६

वृतः सैन्येन महता रथारूढो महाबलः
महोदरमहापार्श्वविरूपाक्षैः समन्वितः. ७८७

स्यंदनेन प्रजवितप्रवराष्टहयेन सः
द्वारेण निर्ययौ तेन यत्र तौ रामलक्ष्मणौ. ७८८

तदोत्पाता भयस्यारात्सूचका बहवोऽभवन्
निष्प्रभोऽर्कः शिवा नेदुश्चस्खलुश्चास्य वाजिनः. ७८९

राजराजानुजं मर्रि दृष्ट्वायातं प्लवंगमाः
विनेदुर्यातुधानाश्च घोरमंभोधरा इव. ७९०

रावणेन क्षयश्चक्रे कपीनां भूयसां शरैः
परैः सोढुं न ये शक्या यैः सुरा विजिताः खरैः. ७९१

सुग्रीवो वानरा धीशः प्रतापी पादपायुधः
प्रतस्थेऽभिमुखं सार्धं यूथपैर्दशकंधरम्. ७९२

ननर्द युधि मन्यूग्रः स्वरेण महता महान्

पोथयन् राक्षसान् शिष्टान् दशग्रीवपुरःसरान्. ७९३

रक्षोबलेषु श्री मान्त्स वृष्टिं चक्रे महीभृताम्
ममर्द तान्महावातः प्रवृद्धानगमानिव. ७९४

विरूपाक्षं तु रा पातं कपिकंपप्रदायुधम्
वानरेंद्रो व्यसुं चक्रे तं च वीरं महोदरम्. ७९५

महापार्श्वस्य म थनं वालिनस्तनयोऽकरोत्
चकार कोपं तद्दृष्ट्वा राक्षसानामधीश्वरः. ७९६

तामसास्त्रेण ज ब्ततो विधात्रा निर्मितेन सः
हत्वा विद्राव्य च कपीन्बहून् राममुपाययौ. ७९७

सुमित्रातन य स्तेन रावणेन सह स्वयम्
युयुधे प्रथमं वीरो राहुणेव निशाकरः. ७९८

ततैः शतैः श रा णां तं व्याकुलीकृत्य लक्ष्मणम्
व्यसृजच्छरवर्षाणि राममासाद्य रावणः. ७९९

भल्लैश्चिच्छेद म हतः शरौघांस्तस्य राघवः
विव्याध रामं स पुनः शरैर्दर्शितलाघवः. ८००

रावणे व्यसृ ज द्रामः शरवर्षाणि संततम्
रामेऽपि रावणो, वीरावुभौ शस्त्रास्त्रपारगौ. ८०१

अस्त्रप्रयोगं य तौ तौ चक्रतुर्युद्धपंडितौ
खंडितौ यौ न कुत्रापि समरे जयमंडितौ. ८०२

लक्ष्मणोऽथ ध्व ज च्छेदं शिरश्छेदं च सारथेः
ततश्चक्रे धनुश्छेदं सायकैर्जयदायकैः. ८०३

बिभीषणो ह य श्रेष्ठान् भ्रातुर्ज्येष्ठस्य संगरे
जघानाप्लुत्य गदया न दयास्त्यतिपापिनि. ८०४

ततः स्वरत रा माशु क्रोधादशनिसन्निभाम्
बिभीषणाय[1] चिक्षेप शक्तिं शक्तिमतां वरः. ८०५

अप्राप्तामेव म ध्ये तां लक्ष्मणस्त्रिभिराशुगैः

---

१. बिभीषणमुद्दिश्य. यमुद्दिश्य क्रिया प्रवर्तते सोपि संप्रदानसंज्ञः स्यात्.

च्चिच्छेद खेदयन्युद्धे दशकंठस्य मानसम्. ८०६

अन्यां च शक्र श्री हर्ता शक्तिं जग्राह दारुणाम्

त्रातुं बिभीषणं तस्थावग्रतस्तस्य लक्ष्मणः. ८०७

तमुवाच श्र रा सारैश्छादयंतं स रावणः,

बिभीषणो मोक्षितश्चेत्त्वयीयं विनिपात्यते.' ८०८

इत्युक्त्वा शक्ति म त्युग्रां चिक्षेप मयनिर्मिताम्

मोघा भवेति रामोक्ता तद्वक्षसि ममज्ज सा. ८०९

पपात मोहं ज नयन् रामेऽपि भुवि लक्ष्मणः.

न विषादस्य कालोऽयमिति संचिंत्य राघवः ८१०

कौसल्यातन य श्चक्रे तुमुलं युद्धमोजसा

विचकर्ष ततः शक्तिं तां विकृष्य बभंज च. ८११

तदा खराः श रा स्तस्य शक्तिं निष्कर्षतोऽरिणा

बलीयसा दशास्येन गात्रे रामस्य पातिताः. ८१२

अचिंतयित्वा म र्मघ्नांस्तानिषूनरिणेरितान्

समाश्लिष्यानुजं रामः सुग्रीवादींस्तदाब्रवीत्. ८१३

'परिवार्यैव न न्येऽमुं तिष्ठध्वं वानरोत्तमाः

यावद्धन्म्यहितं, कालः प्राप्तोऽयं मे चिरेप्सितः. ८१४

जातोऽक्षिविष य श्चायं नैव जीवितुमर्हति

विनतातनयेनेव दृष्टो दुष्टो भुजंगमः. ८१५

करिष्यामि त्रि ज गति ख्यातं कर्माद्य यत्सुराः

नराश्च कथयिष्यंति यावच्चंद्रभास्करौ.' ८१६

एवमुक्त्वा सा य कौघैराजघान दशाननम्

स साध्वसात्प्रदुद्राव यथा वातहतोऽबुदः. ८१७

दशग्रीवं प रा भूय केसरीव महागजम्

ददर्श करुणासिंधुर्लक्ष्मणं मूर्च्छितं भुवि. ८१८

ततः सुषेण म गदंकारं रघुवरोऽब्रवीत्,

'लक्ष्मणोऽयं यदि मृतः, प्राणैः किं मे प्रयोजनम्?'

तदा सुषेणः   श्री मंतं तं हनूमंतमब्रवीत्,
'गच्छ तात! द्रुतं त्वं ता ओषधीः पुनरानय.' ८२०
गत्वा शृंगं ध[1]   रा भृत्तो गृहीत्वा पुनरागतः.
सुषेणस्तं प्रशस्याथ गृहीत्वा तां महौषधिम् ८२१
संक्षोदयित्वा   म तिमांस्तद्रसं सोऽमृतोपमम्
लक्ष्मणाय ददौ[2] नस्तो न स्तो यस्मान्मृतिव्यथे. ८२२
विशल्यो विरु   ज स्तूर्णमुदतिष्ठत्स लक्ष्मणः
तमालिंग्याभवद्रामो बाष्पपर्याकुलेक्षणः. ८२३
प्रहृष्टा हर   य स्तं ते पूजयामासुरुत्थितम्
रामरावणयोर्युद्धं प्रवृत्तं पुनरद्भुतम्. ८२४
भूमौ स्थितस्य   रा मस्य रथस्थस्य च रक्षसः
न समं युद्धमित्याहुर्देवगंधर्वकिंनराः. ८२५
तच्छ्रुत्वा शत   म न्युः स्वं सखायं सूतमब्रवीत्,
'मातले! गच्छ रामं त्वं मद्रथे स्थापयाश्वि'ति. ८२६
शक्राज्ञया प्रां   ज लिना प्रार्थितस्तेन राघवः
आरुह्य स्यंदनं दिव्यं युयुधे सह रक्षसा. ८२७
गांधर्वमथ   य द्दैवमस्त्रं राक्षसमद्भुतम्
प्रयुक्तमारिणा रामः प्रत्यस्त्रेण जघान तत्. ८२८
स चकार ध्व   ज च्छेदं मर्दयित्वा प्रभुं शरैः
ऐन्द्रानपि जघानाश्वान् विद्ध्वा मर्मसु मातलिम्.८२९
त्रिदशा ऋष   य स्त्रस्ता दृष्ट्वार्तं रघुनंदनम्
व्यथिता वानरेंद्राश्च बभूवुः सविभीषणाः. ८३०
तदा क्रूरत   रा जाता उत्पाता बहवो रणे
जगाम सुमहाक्रोधं रामस्तामरसेक्षणः. ८३१
तस्मिन्क्रुद्धे स   म र्थे भूः प्राकंपत सपर्वता

---

१. पर्वतस्य. षष्ठ्यर्थे तसिल्. २. लक्ष्मणाय नस्तः (नासिकायाम्) ददौ, यस्मात् मृतिव्यथे न स्तः इत्यन्वयः.

सर्वभूतानि वित्रेसुः क्षुभितः सरितां पतिः. ८३२
शूलं गृहीत्वा श्री दस्य भ्राता परमदारुणम्
हतोऽसीति ब्रुवन् रामं प्रतिचिक्षेप कोपतः. ८३३
दृष्ट्वात्मनः श रा न् घोरानापततं महाप्रभम्
रामो वासवशक्त्या तं शूलं चिच्छेद भीमया. ८३४
शरैस्तुरंग म श्रेष्ठांस्तस्य विद्ध्वा रघूत्तमः
निर्बिभेदोरसि क्रूरं ललाटेऽपीषुभिस्त्रिभिः. ८३५
रामोऽपि प्रति ज ग्राह शरानुग्रस्य रक्षसः
दृष्टः शोणितदिग्धांगः स फुल्ल इव किंशुकः. ८३६
कौसल्यातन य स्तस्य च्छित्वा शस्त्राण्युवाच तम्,
'शून्याश्रमात्त्वया चौरचर्यया राक्षसाधम! ८३७
भार्या मम प रा मृष्टा तस्मात्त्वं नासि वीर्यवान्
अद्य त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनम्. ८३८
गर्वमद्य स म स्तं ते संहर्तुं शिरसा सह
स्थितोऽस्मि पुरतस्तिष्ठ त्वं पाप! पुरुषो भव.' ८३९
एवमुक्त्वा भ्रा ज मानैस्ताडयामास तं शरैः
कपयश्चाश्मभिर्जघ्नुः स तदा व्याकुलोऽभवत्. ८४०
सारथिः सुप्रि य स्तस्य तदवस्थं निरीक्ष्य तम्
शनैर्युद्धादसंभ्रांतः शतांगं सोऽपवाहयत्. ८४१
स मोहमुक्तो ज नितक्रोधो धिक्कृत्य सारथिम्
उवाच परुषं प्राज्यं कालनष्टमतिर्हि यत्. ८४२
सूतस्तमाह, 'य द्राजन्! कश्मलं त्वयि संगरे
दृष्टं मया न तत्पूर्वं तेन त्वमपवाहितः. ८४३
यद्वक्ष्यस्यद्य रा जन्! मां तत्करिष्याम्यसंशयम्
नाहं भीतो नोपजप्तः स्नेहेनैतत्कृतं मया.' ८४४
श्रुत्वेति वाक्यं म धुरं प्रसन्नहृदयोऽभवत्

---

१. भेदितः ('फितूर केला गेलों' इति महाराष्ट्रभाषायाम्.)

ददौ तस्मै शुभं ह्येकं [1]हस्ताभरणमात्मनः. ८४५

सूतो रथं तं श्री दस्य भ्रातुर्वचनगौरवात्
निनाय रघुवीरस्य पुरतः प्रेरयन्हरीन्. ८४६

दशाननप रा भूतिचिंतया व्यग्रमानसम्
उपागम्याब्रवीद्राममगस्त्यो भगवानृषिः. ८४७

'भो रामभद्र, म त्प्रोक्तं शृणु गुह्यं सनातनम्
येन सर्वानरीन्वत्स! विजेष्यसि रणाजिरे.' ८४८

स एवमुक्त्वा ज यदमादित्यहृदयं ददौ
जप्त्वा विजेष्यस्यद्य त्वं रावणं शक्रशात्रवम्. ८४९

उपदिश्येति य शसानुपमोऽथ जगाम सः
रामोऽपि जप्त्वा स्तोत्रं तत्परं हर्षमवाप्तवान्. ८५०

मूर्तिमानम रा र्धांशो रविः सुरगणे स्थितः
रामं 'दशाननं हंतुं त्वरस्वे'ति वचोऽब्रवीत्. ८५१

रामोऽथ शात म न्योस्तं सारथिश्रेष्ठमब्रवीत्,
'मातले! पश्य संरब्धमापतंतं रथं रिपोः. ८५२

तिष्ठा[2]प्रमादो ज न्येऽस्मिन्प्रत्युद्गच्छ रथं रिपोः
विध्वंसयितुमिच्छामि वायुर्मेघमिवोत्थितम्. ८५३

रथं प्रचोद य क्षिप्रमि'त्युक्तः स तथाऽकरोत्
चक्रसंभूतरजसा रावणं व्यवधूनयत्. ८५४

स चापमैंद्रं ज ग्राह शरांश्चार्ककरप्रभान्
युद्धं तयोस्तदारब्धं दृप्तयोरिव सिंहयोः. ८५५

देवाश्च मुन य श्चैव वानरा रजनीचराः
युद्धं समागता द्रष्टुं विस्मिताश्चित्रवत्स्थिताः. ८५६

तदा बभूव रा ज्ञोस्तद्द्वैरथं परमाद्भुतम्
रामरावणयोर्युद्धं रामरावणयोरिव. ८५७

जेतव्यमिति म त्वैंद्रो मर्तव्यमिति रावणः

---

१. कंकणम्. २. अप्रमादः सावधानः इति यावत्.

[1]धृतौ स्ववीर्यसर्वस्वं युद्धेऽदर्शयतां तदा. ८५८

रामः शरेण श्री मंतं ध्वजं चिच्छेद रक्षसः
तेन तन्मनसि क्रोधः प्रजज्वाल सुदुःसहः. ८५९

वृष्टिं चक्रे श रा णां स क्रुद्धो युद्धोद्यतः प्रभौ
नानाविधायुधानां च गिरीणां भूरुहामपि. ८६०

तां वृष्टिं पर म प्राज्ञो रामश्चिच्छेद सायकैः
ततस्तस्य शिरोऽच्छिंदच्छ्रीमज्ज्वलितकुंडलम्. ८६१

तस्य शीर्षांबु ज च्छेदे हृष्टा देवर्षयो भृशम्
अन्यत्तेनैव सदृशं रावणस्योत्थितं शिरः. ८६२

छिन्नं तदपि य त्नेन प्रभुणा क्षिप्रकारिणा
छिन्नमात्रं च तच्छीर्षं पुनरेव प्रदृश्यते. ८६३

एवमेव सु रा रातेस्तुल्याकारं शिरःशतम्
छिन्नं रामेण समरे क्षिप्रहस्तेन मार्गणैः. ८६४

दशकंठस्य म रणमपश्यन् राघवो रणे
चिंतयामास बाणानाममोघानां विपर्ययम्[2]. ८६५

सप्तरात्रम ज स्त्रं तत्तयोर्युद्धमभून्महत्
उवाच मातली राम'मस्त्रं पैतामहं प्रभो! ८६६

अस्य प्रणाशा य रिपोर्विसृज त्वं रघूत्तम!'
स्मारितः शक्रसूतेन रामो वीरशिरोमणिः, ८६७

यमगस्त्यो द्वि ज श्रेष्ठो ददौ पूर्वं महाशुगम्
अभिमंत्र्य तमेवाशु चिक्षेप ब्रह्मनिर्मितम्. ८६८

स तस्य हृद य स्येषुर्भेदं कृत्वा महाद्विषः
भुवस्तलं विवेशाथो तूणीरं च विनीतवत्. ८६९

गतप्राणो ध रा यां स राक्षसेंद्रो दशाननः
पपात पापो वज्रेण हतो वृत्र इवाहितः. ८७०

दृष्ट्वा पतित म त्यार्ता हतशेषा निशाचराः

---

१. धृत्या (धैर्येण). २. फलविपर्यासम्.

हतनाथा भयग्रस्ता लंकामभ्यपतन् द्रुतम्. ८७१

निशाचरास्ते श्री मद्भिर्नदद्भिर्जित[1]काशिभिः
वानरैर्मर्दिताः क्रुद्धैर्घना इव समीरणैः. ८७२

विजये रघु रा जस्य व्यनदद्देवदुंदुभिः
दिव्यगंधवहस्तत्र मारुतः सुसुखो ववौ. ८७३

वृष्टिस्तदा सु म नसां दिव्यानां निपपात खात्
सुरर्षिभिः कृता पुण्या स्तुती रामस्य शुश्रुवे ८७४

मरुद्गणाः प्र ज ग्मुस्ते शमं स्वर्गायना जगुः
अगुः स्वास्थ्यं च लोकेशाः सुप्रभोऽभूत्सहस्त्रगुः[2] ८७५

रामः प्राप्तज य स्तत्र मुमुदे सकपीश्वरः
भ्रातरं निहतं दृष्ट्वा विललाप बिभीषणः. ८७६

सांत्वितः स गि रा माध्व्या श्रीरामेण महात्मना
बिभीषणस्तं संस्कर्तुं प्रार्थयामास राघवम्. ८७७

'शांतिर्वैरस्य म रणं, निवृत्तं नः प्रयोजनम्
क्रियतामस्य संस्कारो ममाप्येष यथा तव.' ८७८

इत्युवाच त्रि ज गतां नाथो रघुकुलोत्तमः
तमःप्रशमकृन्नामा सर्वभूतेषु यः समः. ८७९

अथ स[3]र्वा स्त्रि य स्तस्य मृतं श्रुत्वा तमीश्वरम्
मंदोदरीप्रभृतयो विलापं चक्रुराकुलाः. ८८०

अंतःपुराद्रा ज भार्या विनिष्पेतुः शुचार्दिताः
रणपांसुषु चेष्टंत्यो मुक्तकेश्यो हतेश्वराः. ८८१

ददृशुस्ताः प्रि य तमं पतितं रणपांसुषु
आलिंग्य रुरुदुः सर्वाः सा च मंदोदरी भृशम्. ८८२

'इंद्रियाणि पु रा जित्वा जितं त्रिभुवनं त्वया
स्मरद्भिरिव तद्वैरमिंद्रियैस्त्वं विनिर्जितः. ८८३

---

१. जितेन (जयेन) काशंते (शोभंते) इति तैः २. सहस्रं गावः (किरणाः) यस्य सः (सूर्यः). ३. खर्परे शरि वेति वैकल्पिको विसर्गलोपः.

तं चापि काम म प्राप्य मैथिलीसंगमे कृतम्
पतिव्रतायास्तपसा नूनं दग्धोऽसि मे प्रभो! ८८४

सीता सतीयं श्री रेव रामो विष्णुर्न मानुषः
हतोऽस्यतिक्रमाद्भीतेर्धर्मस्य त्वं महानपि. ८८५

मैथिली सह रा मेण विशोका विहरिष्यति
अल्पपुण्या त्वहं घोरे पतिता शोकसागरे.' ८८६

इत्यार्ता तस्य म हिषीं तामन्याश्च बिभीषणः
सांत्वयामास बहुधा रुदतीः सुदतीः प्रियाः. ८८७

श्रीकौसल्यात्म ज स्तासां सांत्वनाय बिभीषणम्
रावणस्य च संस्कारं कर्तुमाज्ञापयत्तदा. ८८८

'नाहं पापात्म य स्यास्य परदाराभिमर्शिनः
कर्तुमिच्छामि संस्कारमि'त्युवाच बिभीषणः. ८८९

'मैवं ब्रूह्यद्य रा ज्ञस्त्वं संस्कारं कर्तुमर्हसि
मरणांतानि वैराणि ममाप्येष यथा तव.' ८९०

इत्युक्तः स स म र्थेन श्रीरामेण बिभीषणः
विधिवत्तस्य संस्कारं चकार विधिकोविदः ८९१

सांत्वितास्तेन ज ग्मुस्ताः स्त्रियः सर्वाः स्वकान् गृहान्.
बिभीषणो रामपार्श्वे समतिष्ठद्विनीतवत्. ८९२

आज्ञां दत्त्वा 'न य रथं शक्रपार्श्वमि'ति प्रभुः
मातलिं पूजयामास सखायं तं शतक्रतोः. ८९३

रामचंद्रोऽनु ज मथ प्रोवाच शुभलक्षणम्,
'बिभीषणमिमं सौम्य! लंकायामभिषेचय. ८९४

कामो मे हृद य स्थोऽयं परमो यद्बिभीषणम्
पुरेऽभिषिक्तं पश्येयं प्रियं पूर्वोपकारिणम्.' ८९५

सौमित्रिर्वान रा न्दत्त्वा घटान्हैमान्मनोजवान्
व्यादिदेश समुद्रेभ्यः सलिलानयनं द्रुतम्. ८९६

जलैः प्लवंग म श्रेष्ठैरानीतैस्तं बिभीषणम्

अभ्यर्चितप्रसन्नात्मा लक्ष्मणः परमासने. ८९७
अथाद्भुतैक श्री रामः प्रभुर्मारुतिमब्रवीत्,
' बिभीषणमनुज्ञाप्य कुशलं पृच्छ जानकीम्. ८९८
वैदेह्या वान रा धीशं कुशलं लक्ष्मणं च माम्.
आचक्ष्व वदतां श्रेष्ठ! रावणं च हृतं रणे. ८९९
प्रियमुक्त्वा स म प्रं त्वं ततस्तस्या हरीश्वर!
प्रतिगृह्य च संदेशमुपावर्तितुमर्हसि.' ९००
इत्युक्तो वायु ज स्तेन रामेणाक्लिष्टकर्मणा
तां पुष्पवाटिकां गत्वा सीतां नत्वेदमब्रवीत्. ९०१
कुशलं त्वाह य स्तेऽतिप्रियः श्रीरघुसत्तमः
गतं रक्षो लयं देवि! भास्करेणेव तत्तमः. ९०२
प्रियमाख्यामि रा ज्ञि! त्वां भूयोभूयः सभाजये
रामस्याद्य प्रमुदिता देवर्षीणां सभा जये. ९०३
प्रभावात्ते सु म हिते रावणो निहतो रणे
बिभीषणसहायेन रामेणाद्भुततेजसा. ९०४
स दाक्षिणो मु ज स्तस्य रामस्य कुशली सति!
लक्ष्मणः सुमहातेजाः सुग्रीवश्च महामतिः. ९०५
लब्धोऽयं विज य स्तेजो रामेण ख्यापितं महत्
लंका वशीकृता सीते! स्वस्था भव गतज्वरा.' ९०६
सीतोवाच नि ज स्वांतप्रियं श्रुत्वानिलात्मजम्
तूष्णींभूता क्षणं पश्चात्'तेन संप्रार्थिता सती. ९०७
'वत्साख्यातुः प्रि य स्यास्य भवतो हितकारिणः
देयं वस्तु न पश्यामि सदृशं किंचिदप्यहम्.' ९०८
हनूमानाह रा ज्ञीं तां प्रांजलि'र्देवि! वत्सले!
स्निग्धमेवंविधं वाक्यं त्वमेवार्हस्यनिंदिते! ९०९
एतदेव म म श्रेयः प्रियं भर्तृहिते रते

१. त्वा (त्वाम्) आह इति पदच्छेदः.

लब्धं सर्वं मया श्रुत्वा वाक्यमेतत्तवामृतम्. ११०

देयो वरोऽद्य श्री मत्या मातर्यः प्रार्थ्यते मया
श्रोतुमर्हसि तं देवि मे विश्वख्यातसद्व्रते! १११

इमास्तु खलु रा क्षस्यो यदि त्वमनुमन्यसे
हंतुमिच्छामि ताः सर्वा याभिस्त्वं तर्जिता पुरा.' ११२

जानक्युवाच, 'म तिमन्! कुर्वंतीनां पराज्ञया
विधेयानां च दासीनां कः कुप्येद्वानरोत्तम!' ११३

इत्युक्तो वात ज स्तुष्टस्तामुवाच यशस्विनीम्,
'युक्ता रामस्य भवती धर्मपत्नी गुणान्विता. ११४

वैदेहि! हृद य स्थं यत्तत्त्वं तत्त्वं मनस्विनि!
प्रतिसंदिश मां देवि! गमिष्ये यत्र राघवः.' ११५

एवमुक्ता न रा धीशसुता सीता हनूमता
साब्रवी'द्रष्टुमिच्छामि भर्तारं भक्तवत्सलम्.' ११६

हनूमान् राम म हिषीमुवाच प्रांजलिस्तदा,
'पूर्णचंद्रमुखं रामं द्रक्ष्यस्यद्य सलक्ष्मणम्.' ११७

एवमुक्त्वा श्रा ज मानां सीतां साक्षादिव श्रियम्
आजगाम महातेजा हनूमान् यत्र राघवः ११८

तस्याः सोऽकथ य त्सर्वं राघवायोत्तरं वचः
स्वयं चोवाच शोकार्तां द्रष्टुमर्हसि तामिति. ११९

एवमुक्तस्त्वि ज गतां नाथो धर्मभृतां वरः
आगच्छत्सहसा ध्यानमीषद्वाष्पपरिप्लुतः. १२०

'तामुपस्थाप य क्षिप्रं सीतां स्नातामलंकृताम्'
बिभीषणमिति श्रीमानुवाच रघुनायकः. १२१

आरोप्य प्रव रा मार्यां शिबिकां तां बिभीषणः.
आनयामास सुस्नातां प्रीतां सीतां स्वलंकृताम्. १२२

तदा प्लवंग म श्रांस्तान् वारितान् वेत्रपाणिभिः
दृष्ट्वा, बिभीषणं रामो मैवमित्यब्रवीत्क्रुधा. १२३

अथाह रामः श्री मांस्तां विनीतां पार्श्वमागताम्,
'पौरुषाद्यदनुष्ठेयं मयैतदुपपादितम्. ९२४

निर्जितासि व रा रोहे! शत्रुं जित्वा रणाजिरे
परिश्रमोऽयं वृत्तार्थं, न त्वदर्थं मया कृतः. ९२५

प्राप्तसंदेह म हिमा मम प्रतिमुखे स्थिता
दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढा. ९२६

तद्गच्छ त्वं रा ज कन्ये! यथेष्टं विवृता दिशः
कः कविः पुनरादद्यात्स्त्रियं परगृहोषिताम्? ९२७

लक्ष्मणे वात्या य ताक्षि! भरते वा नरोत्तमे
शत्रुघ्ने वा गुणाढ्ये त्वं कुरु बुद्धिं यथासुखम्. ९२८

सुग्रीवे वान रा धीशे राक्षसे वा बिभीषणे
निवेशय मनः सीते! यथा वा सुखमात्मनः. ९२९

न त्वां दशास्यो म हिलां दिव्यरूपां बलाद्धृताम्
मर्षयेत्सुचिरं सीते! स्वगृहे पर्यवस्थिताम्.' ९३०

अत्यप्रियं रा ज कन्या तदुपश्रुत्य सा प्रियात्
रुदती सुदती सीता भर्तारमिदमब्रवीत्. ९३१

'किमेवं हृद य च्छेदि प्रभो! मां श्रोत्रदारुणम्
रूक्षं श्रावयसे वाक्यं प्राकृतः प्राकृतामिव? ९३२

न तथास्मि, नि ज स्वांते यथा मामवगच्छसि,
प्रत्ययं गच्छ मे, स्वेन चारित्रेण शपे स्वयम्. ९३३

अन्यासामन[1] य ज्ञत्वाज्जातिं त्वं परिशंकसे
त्यज शंकां, परस्पर्शे कामकारो न मे प्रभो! ९३४

शरीरेऽत्र प रा धीने किं करिष्याम्यनीश्वरी?
मदधीनं तु यत्तन्मे हृदयं त्वयि वर्तते. ९३५

निपीडितो म म करो न प्रमाणीकृतस्त्वया

---

१. अन्यासां कासांचित् अनयज्ञत्वात् (अनयज्ञतां दृष्ट्वा) स्त्रीजातिं त्वं परिशंकसे.

न मे भक्तिर्न मच्छीलं, सर्वं ते पृष्ठतः कृतम्. १३६
सैवं तदोक्त्वा श्री मंतं लक्ष्मणं दीनमानसम्
उवाच, 'व्यसनस्यास्य भेषजं कुरु मे चिताम्. १३७
त्यक्ता देवर! रा ज्ञाहमप्रीतेन गुणैर्मम
मिथ्यापवादोपहता प्रवेक्ष्ये हव्यवाहनम्. १३८
प्राप्तो वशाम म र्षस्य स विज्ञाय प्रभोर्मतम्
चितां चकार सौमित्रिः परवान्भृशदुःखितः. १३९
न हि रामं ते ज सोग्रं तदा कश्चिद्यमोपमम्
अनुनेतुमथो वक्तुं द्रष्टुं वाप्यशकत्सुहृत्. १४०
अधोमुखं स्थि य तमं रामं कृत्वा प्रदक्षिणम्
बद्धांजलिः सती सीता साब्रवीदग्निसंनिधौ. १४१
'यथा मनो मे रा जेंद्रान्नापसर्पति राघवात्
तथा सर्वस्य साक्षी मां सर्वतः पातु पावकः. १४२
यद्यहं शुद्धि म त्यस्मि श्रीमद्रामैकमानसा
केशवस्त्रादिकमपि माधाक्षीन्मम पावकः.' १४३
एवमुक्त्वा ग ज गतिः परिक्रम्य हुताशनम्
सीता विवेश ज्वलनं निःशंकेनांतरात्मना. १४४
महान् जनौघ य स्तत्र ददर्शाश्रुसमाकुलः
प्रविशंतीं सतीमग्निं दीप्तं सौदामिनीमिव. १४५
ददृशुस्तां रा ज कन्यां प्रविशंतीं हुताशनम्
ऋषयो देवगंधर्वाः पूर्णाहुतिमिवाध्वरे. १४६
प्रचुक्रुशुः स्त्रि य स्तास्तां दृष्ट्वा दीप्ते चितानले
पतंतीं संस्कृतां मंत्रैर्वसोर्धारामिव क्रतौ. १४७
रक्षसां वान रा णां च 'हाहे'ति विपुलः स्वनः
तस्यामग्निं संविशंत्यां संबभूवाद्भुतोपमः. १४८
ततो रामः का म खिन्नः श्रुत्वैव वदतां गिरः

---

१. अत्यन्तखिन्नः.

दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः. १४९
शक्रो यमोऽथ श्री दश्च शंभुर्ब्रह्मा सुरैः सह
लंकां विमानैरागत्य तेऽभिजग्मू रघूत्तमम्. १५०
अब्रुवंस्तं सु रा रामं प्रांजलिं पुरतः स्थितम्,
'विश्वस्य कर्तास्यात्मानं कथं त्वं नावबुध्यसे? १५१
सीता तवेयं म हिषी साक्षाच्छ्रीर्जनकात्मजा
उपेक्षसे कथं विष्णो! पतंतीं हव्यवाहने? १५२
अस्माभिस्त्वं त्रि ज गतां भर्ता हंतुं दशाननम्
प्रार्थितो मानुषीं योनिं प्रविष्टोऽसि सनातनः. ८५३
प्रभवश्चाप्य य श्च त्वं देवकार्यं कृतं त्वया
सर्वे कृतार्थास्त्वद्भक्ताः शरण्यस्त्वं जनार्दन!' १५४
गृहीत्वा तां व रा रोहां मूर्तिमान् हव्यवाहनः
उत्थायाभ्येत्य भगवानित्युवाच रघूत्तमम्, १५५
'राम! रामाच्छ म नसं सीतां शीतांशुजिन्मुखीम्
गृहाण त्वमिमां मान्यां मान्यां बुद्धिं कुरु प्रभो!', १५६
एवमुक्त्वा रा ज मानां सीतां दाशरथेः प्रभोः
स्थापयामास वामे तामंके पंकेरुहेक्षणाम्. १५७
'लोकापवादो य शसो नाशकोऽतस्तमागतम्
परिमार्ष्टुमिदं दिव्यं मया विज्ञाय कारितम्. १५८
इयं विशुद्धा ज गति श्रेष्ठा भानोरिव प्रभा,
न विहातुं मया शक्या कीर्तिरात्मवता यथा. १५९
सुस्निग्धानां सु य शसां नाथानां वदतां हितम्
अवश्यं च मया कार्यं सर्वेषां वो वचः प्रियम्.' १६०
एवमुक्त्वा स रा जेंद्रः प्रियां स्वीकृतवान्मुदा.
ततः शुभतरं वाक्यं व्याजहार महेश्वरः. १६१
'पुष्कराक्ष! स म थेश! श्यामतामरसप्रभ!

---

१. हस्तदोषः—शीतां. २. शीतांशुजित् (चंद्रस्पर्धि) मुखं यस्याः सा.

दिष्टया कृतमिदं कर्म त्वया धर्मभृतां वर ! ९६२

आश्वास्य दीनां श्री मंस्त्वं भरतं भक्तमात्मनः

मातृश्च राज्यं कृत्वाथ स्वपदं गंतुमर्हसि. ९६३

विमानेऽयं न रा धीशः पिता दशरथस्तव

लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय. ९६४

शक्रस्य लोकं म त्यैंद्रो गतो गतिमतां वरः

सत्पुत्रेण त्वया राम ! तारितोऽयं गुरुस्तव.' ९६५

राघवः सानु ज श्चक्रे नमनं पितुरात्मनः

स चैनमंक आरोप्य परिष्वज्य मुदाब्रवीत्. ९६६

'राम ! प्राणप्रि य ! स्वर्गः समानोऽपि सुरर्षभैः

न मे बहुमतो जातु त्वां विना गुरुवत्सल ! ९६७

कैकेय्या यानि रा जीवनेत्र ! प्रोक्तानि दुष्टया

तानि वाक्यानि शल्यानि स्थितानि हृदये मम. ९६८

दुःखान्मुक्तोऽद्य म हतस्त्वां परिष्वज्य सानुजम्

तारितोऽहं त्वया पुत्र ! सुपुत्रेण महात्मना.' ९६९

रामः प्रोवाच ज नकं, 'कैकेय्या भरतस्य च

प्रसादं कुरु, शापः स सपुत्रां न स्पृशेत्प्रभो !' ९७०

तथेत्युक्त्वा प्रि य गुणं लक्ष्मणं तां च जानकीम्

समाश्वास्य, विमानेन ययौ स्वर्गं महायशाः. ९७१

ततो जयंत ज नको रामं प्रांजलिरब्रवीत्,

'अमोघं दर्शनं राम ! तवास्माकं रघूत्तम ! ९७२

प्रीताः स्म, ब्रूहि य त्प्राज्यं राजेंद्र ! मनसेप्सितम्.'

तच्छ्रुत्वा वासवं हृष्टो वचनं प्राह राघवः. ९७३

'मम हेतोः प रा क्रांता ये गता यमसादनम्

ते सर्वे जीवितं प्राप्य समुत्तिष्ठंतु वानराः. ९७४

अकाले चापि म धुराः फलमूलसमृद्धयः

नद्यश्च विमलास्तत्र तिष्ठेयुर्यत्र वानराः.' ९७५

रक्षःक्षयाश्च श्री रिंद्रः प्रत्युवाच तदा प्रभुम्,
'महानयं वरस्तात! त्वयोक्तो रघुसत्तम! १७६
मम त्वयि प रा प्रीतिस्तस्मादेतद्भविष्यति.
समुत्तिष्ठंतु सर्वे ते ये हता युधि राक्षसैः.' १७७
ततः प्लवंग म प्रातास्ते सुप्त्वेव समुत्थिताः
बभूवुर्वानरा ऋक्षाः किन्वेतदिति विस्मिताः. १७८
राममापृच्छ्य ज ग्मुस्ते स्वर्गं सेंद्रा दिवौकसः.
श्रीरामं प्रार्थयामास सत्कर्तुं स बिभीषणः. १७९
तमाह रामो, 'य दि मां राजन्! सत्कर्तुमिच्छसि
हरीन्सुग्रीवमुख्यांस्त्वं सर्वानप्यद्य सत्कुरु. १८०
स तु ताम्यति रा ज्येऽपि भरतो मत्कृते सदा
तं विना मे बहुमतं न स्नानं वस्त्रभूषणम्. १८१
एतत्त्वं पश्य म तिमन्! यथा क्षिप्रं निजां पुरीम्
प्रतिगच्छामि, मार्गोऽयं राजन्! परमदुर्गमः.' १८२
इक्ष्वाकंठानु ज स्तं स प्रत्युवाच कृतांजलिः,
'अह्ना[1] त्वां प्रापयिष्यामि साकेतं पुष्पकेण तत्. १८३
अनुग्रहस्ते य द्यस्ति सदारः सानुजो वस
गृहाण सत्क्रियां मत्तः, सौहृदं तव चेन्मयि.' १८४
तत्कौसल्यानु ज स्तस्य श्रुत्वा वाक्यं ततोऽब्रवीत्,
'साचिव्येन तथा प्रेम्णा पूजितोऽहं भृशं त्वया. १८५
भरतं तु प्रि य सख द्रष्टुं मे त्वरते मनः
शिरसा याचतो यस्य न कृतं वचनं मया. १८६
कौसल्यां च प रा मातां सुमित्रां केकयात्मजाम्
गुहं च सुहृदं पौरान् द्रष्टुं मेऽत्युत्सुकं मनः. १८७
अनुजानीहि म तिमन्! मामहं सत्कृतस्त्वया
उपस्थापय मे शीघ्रं विमानं राक्षसेश्वर!' १८८

---

१. एकेन दिनेन.

स तद्विमानं श्री दस्य कामगं रावणाहृतम्
स्थापयामास सेवायां सुरतः पुरतः प्रभोः. ९८९

ससैन्यं वान रा धीशं संपूज्य परया मुदा,
'साकेतं मां नये'त्याह रामं भक्तो बिभीषणः. ९९०

सोऽपि प्लवंग म पतिः सुग्रीवो मंत्रिभिः सह
तथैव प्रार्थयामास प्रभुं प्राज्यदयं स्वयम्. ९९१

तद्विमानं श्रा ज मानं राजराजस्य राघवः
ताभ्यां सह समारुह्य राजभ्यां कपिरक्षसाम्. ९९२

त्रिकूटात्तां प्रि य तमामंके स्थाप्य सलक्ष्मणः
प्रतस्थे सुमहातेजा लंकालंकारजित्पुरम्. ९९३

कैलासशिख रा कारे त्रिकूटशिखरे स्थिताम्
लंकां युद्धधरां रामो दर्शयन्नाह जानकीम्. ९९४

'प्रिये! पश्य त्व म स्याद्रेस्त्रिकूटस्य शिरोगताम्
सुरैर्दुरासदां लंकां निर्मितां विश्वकर्मणा. ९९५

इयं युद्धस्य ज गती, त्वत्कृतेऽत्र सह प्रियैः
सचिवैर्भ्रातृभिः पुत्रैः सीते! दशमुखो हतः. ९९६

रावणस्य स्त्रि य स्तत्र मंदोदर्या सह प्रिये!
विविधं भूरिकरुणं तं मृतं पर्यदेवयन्. ९९७

सेतुर्नलेन ज लधावेष देव्याज्ञया मम
तव हेतोर्विशालाक्षि! बद्धः पश्य सुदुष्करः. ९९८

पश्य सीते!ऽस्या य ताक्षि! दुस्तरं वरुणालयम्
जंतवो यत्र पतितं नयंत्यकरुणालयम्[1]. ९९९

इतस्त्वं रुचि रा पांगे! मैनाकं पश्य पर्वतम्
विश्रमार्थं हनुमतो भित्वा सागरमुत्थितम्. १०००

उत्तरं तीर म स्याब्धेरेतद्देवि! मनोरमम्
अत्र पूर्वं महादेवः प्रसादमकरोद्विभुः. १००१

---

१. अकरुणो मृत्युः तस्य आलयं गृहम्.

इदं तु तीर्थं  श्री मच्चत्तीर्थमन्यत्ततोऽधिकम्
सेतुबंध इति ख्यातं भव्यं क[१]व्यंचितं हितम्. १००२

अत्र राक्षस  रा जोऽयमाजगाम बिभीषणः,
सुग्रीवस्य पुरी चैषा किष्किंधा वालिपालिता.' १००३

सीतोवाच, 'म म स्त्रीभिः सुग्रीवस्य महात्मनः
ताराप्रभृतिभिर्गंतुं सार्धमिच्छा पुरीं प्रभो!' १००४

एवमस्त्वित्य  ज कुलश्रेष्ठः प्रेष्ठः स तां प्रियाम्
उक्त्वोवाच तथा कर्तुं सुग्रीवं वानरेश्वरम्. १००५

स सुग्रीवः प्रि  य तमां स्वयं तारां तथाब्रवीत्
सा चाहूय प्लवंगानां सर्वा भार्याः स्वलंकृताः १००६

ताभिः सह त्व रा युक्ता पुष्पकं सा समारुहत्
सीता तया कपींद्रस्य योषिता तोषिताभवत्. १००७

ततो रघूत्त  म स्तत्र पुष्पके द्रुतगामिनि
वैदेहीमित्युवाचायमृष्यमूकः स भूधरः. १००८

यत्राहं वारि  ज स्पर्धिमुखि! प्रियतमे! सति!
अनेन राज्ञा कीशानां सुग्रीवेण समागतः. १००९

त्वया विहीनो  य त्राहं विलापपरमोऽभवम्
एषा सा दृश्यते पंपा शंपाकंपावहप्रभे! १०१०

अत्र सीते! यो  ज नोग्रबाहू राहू रसागतः
कबंधो निहतो भ्रात्रा लक्ष्मणेन तथा मया. १०११

न्यग्रोधं पश्य  य त्र त्वां त्रातुं मम पितुः सखा
प्रवृत्तः समरे तातो जटायुर्निहतोऽरिणा. १०१२

रक्षसां यत्र  रा ज्ञा त्वं रावणेन हृता बलात्
एषा गोदावरी रम्या प्रसन्नसलिला शुभा. १०१३

एतत्तदाश्र  म पदमस्माकं वरवर्णिनि!
पर्णशाला तथा चित्रा दृश्यते शुभदर्शने! १०१४

---

१. कविभिः पूजितं स्तुतमित्यर्थः.

कांतेऽतिपुण्य श्री वासः कुंभजस्यायमाश्रमः
शरभंगस्य च मुनेरत्रेः कुलपतेरयम्. १०१५

चित्रकूटो व रा रोहे ! शैलेंद्रोऽयं प्रकाशते
कैकेय्या अत्र पुत्रो मां प्रसादयितुमागतः. १०१६

राजपुत्रि ! य म स्यैषा सा स्वसा यमुना नदी
भरद्वाजाश्रमश्चैष दृश्यते सुकृताकरः. १०१७

इयं च गंगा ज गतां सेव्या देव्याश्रितेष्टदा
शृंगबेरपुरं चैतद्गुहो यत्र सखा मम. १०१८

सैषा सतां प्रि य तमा राजधानी पितुर्मम
अयोध्यां कुरु वैदेहि ! प्रणामं पुनरागता. १०१९

ततस्ते वान रा ऋक्षा राक्षसाश्च सनायकाः
उत्पत्योत्पत्य संहृष्टास्तां पुरीं ददृशुस्तदा. १०२०

शुभ्रहर्म्योत्त म प्राज्यप्रोच्चप्रासादमालिनीम्
अपश्यंस्ते पुण्यवंतः साक्षादिंद्रपुरीमिव. १०२१

रामो भरद्वा ज मुनिं तं ववंदे तदाश्रमे
पूर्णे चतुर्दशे वर्षे पंचम्यां रचितांजलिः. १०२२

स्ववृत्तं कथ य न् रामो मातॄणां भरतस्य च
पप्रच्छ मुनिशार्दूलं भरद्वाजं द्विजेश्वरम्. १०२३

कुशलं स द्वि ज श्रेष्ठः कथयामास सर्वतः
भरतस्य व्रतं तीव्रं भक्तिं तत्पादुकार्चने. १०२४

द्रुमेष्वतिश य स्तस्मात्फलानां वरदान्मुनेः
वव्रे बद्धांजली रामो मार्गे यावन्निजं पुरम्. १०२५

मारुतिं च त्व रा युक्तं भरतं प्रति राघवः
प्रेषयामास कुशलागमं कथयितुं प्रभुः. १०२६

स शृंगबेर म गमन्नररूपोऽवदद्गुहम्
कुशली ते सखा, श्वस्त्वं द्रक्ष्यस्यत्रैव राघवम्. १०२७

ततः स तूर्णं श्री मंतं भरतं जटिलं कृशम्

'आगतः प्रभु'रित्युक्त्या चकार मुदितं भृशम्. १०२८

स प्रहर्षभ रा द्भूमौ पपात भरतस्तदा
उत्थाय कपिमालिंग्य तं सिषेचाश्रुबिंदुभिः. १०२९

अथाब्रवी'त्व म मरो नरो वा करुणागतः
प्रियाख्यानस्य ते सौम्य ! ददामि ब्रुवतः प्रियम् १०३०

कन्या धन्याः कं ज नेत्र्यः षोडश स्वर्णभूषिताः
गवां शतसहस्रं च ग्रामाणां च शतं मतम्. १०३१

बहून्यहो ! हा य नानि गतस्य सुमहद्वनम्
शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम्. १०३२

कल्याणीयं प रा गाथा लौकिकी प्रतिभाति मे
एति जीवंतमानंदो नरं वर्षशतादपि.' १०३३

कुशलं वृत्त म खिलं संपृष्टो भरतेन सः
कथयामास मुदितो बृस्यां[1] समुपवेशितः. १०३४

'सलक्ष्मणं वि ज यिनं सदारं सखिसंयुतम्
अविघ्नपुष्ययोगेन श्वो रामं द्रष्टुमर्हसि.' १०३५

प्रहृष्टहृद यं[2] स्तुत्वा मारुतिं भरतोऽब्रवीत्,
'चिरस्य खलु मे पूर्णो हृदि रूढो मनोरथः.' १०३६

प्रहृष्टं सोऽनु ज मथ भरतः सत्यसंगरः
स्वयमाज्ञापयामास पुरमार्गाद्यलंक्रियाम्. १०३७

जयंतो विज य स्तद्वत्सिद्धार्थश्चार्थसाधकः
अशोको मंत्रपालश्च सुमंत्रो धृष्टिरष्टमः. १०३८

ते प्रधानास्त्व रा युक्ताः पौराः सूर्योदये द्विजाः
निर्ययू राजदाराश्च रामं द्रष्टुं समुत्सुकाः १०३९

द्विजातिनैग[3] म श्रेष्ठैः सचिवैर्भरतो वृतः
धर्मज्ञः शिरसा भव्ये गृहीत्वा रामपादुके १०४०

१. दर्भासने. २. खर्परे शरि वेति वैकल्पिको विसर्गलोपः. ३. द्विजातिषु नैगमेषु (वणिक्षु) च श्रेष्ठैः.

छत्रं च राज श्री चिह्नं पुरस्कृत्य शशिप्रभम्
शुभ्रे च वालव्यजने शंखभेरीशतस्वनैः १०४१

प्रत्युद्ययौ न रा धीशं रामं चीराजिनांबरः
उपवासकृशो दीनः प्रेमाश्रुभिरभिप्लुतः. १०४२

तदा तुरंग म खुरै रथचक्रैश्च तद्रवैः
बृंहितैर्दंतिनां वाद्यैः संचचालेव मेदिनी. १०४३

अदृष्ट्वा तदा ज यानमपृच्छन्मारुतिं पुनः,
'कच्चिन्नानुगतस्तात, कापेर्यी रीतिमात्मनः. १०४४

गर्जंति हर य स्तेषां नादः संश्रूयते महान्
अयमागत एवार्य' इत्युवाच स तं कपिः. १०४५

अथ तद्राज रा जस्य विमानं पुष्पकं महत्
आरादद्दृश्यत व्योम्नि शशिसूर्यसमप्रभम्. १०४६

दृष्ट्वा हर्षेण म हता रामोऽयमिति कीर्तिते
स्त्रीबालयुववृद्धानां निःस्वनो दिवमस्पृशत्. १०४७

स्यंदनेभ्यः कुं ज रेभ्यस्तुरगेभ्योऽवतीर्य ते
महीं गतास्तं ददृशुर्नराः सोममिवांबरे. १०४८

प्रांजलिः प्रण य प्रह्वो भरतो राघवोन्मुखः
ववंदे पुष्पकस्थं तं मेरुस्थामिव भास्करम्, १०४९

ततो विमानं ज गतीं पपात प्रभुकामतः
ववंदे भरतो रामं बाष्पकंठः पुनःपुनः. १०५०

अंके समादा य मुदा श्रीरामः परिषस्वजे
अथाभ्यवंदद्भरतः सीतां स्वं नाम चाब्रवीत्. १०५१

लक्ष्मणं च प रा क्रांतं वंदमानं महामतिम्.
प्रहृष्टं भरतश्चक्रे संभाव्यालिंगनादिना. १०५२

ततः प्लवंग म श्रेष्ठं जांबवंतं तथांगदम्
अन्यांश्च नलनीलादीन् यूथपान् परिषस्वजे. १०५३

'भ्राता चतुर्णां श्री मंस्त्वमस्माकमसि पंचमः'

इत्यब्रवीत्परिष्वज्य भरतो वानरेश्वरम्. १०५४

परिष्वज्याह रा जेंद्रनंदनस्तं बिभीषणम्,
'दिष्ट्या त्वया सहायेन कृतं कर्म सुदुष्करम्' १०५५

शत्रुघ्नोऽपि न म स्कारं चकार प्रभुपादयोः
जानक्याश्च महादेव्याः कीर्तयन्नात्मनोऽभिधाम्. १०५६

रामो ननाम ज ननीं कौसल्यामतिवत्सलाम्
सुमित्रां सत्त्वसंपन्नां कैकेयीं च यशस्विनीम्. १०५७

वसिष्ठं स्वान्व य स्याद्यं ब्रह्मणा सदृशं गुरुम्
ऋत्विजः पितुरन्यांश्च ववंदे स सतां गतिः. १०५८

सचिवान्पितु रा ष्ट्रांस्तान् पौरान्सर्वान्यथार्हतः
हर्षयामास धर्मात्मा चकोरानिव चंद्रमाः. १०५९

पादुके ते तु म हिते गृहीत्वा भरतः स्वयम्
चरणाभ्यां नरेंद्रस्य योजयामास धर्मवित्. १०६०

अब्रवीच्च प्रां ज लिस्तं 'सफलो मे मनोरथः
एतत्ते सकलं राज्यं न्यासं प्रत्यर्पितं मया. १०६१

पश्य नाथ! प्र य त्नेन धनं धान्यं गृहं बलम्
भवतस्तेजसा सर्वं कृतं दशगुणं मया.' १०६२

तथा ब्रुवाणं [१]ज न्मीड्यं दृष्ट्वा तं भ्रातृवत्सलम्
मुमुचुर्वानरा बाष्पं राक्षसश्च बिभीषणः. १०६३

रामस्तं विन य स्यैकमालयं भरतं नतम्
अंकमारोप्य [२]यानेन ययौ तेन तदाश्रमम्. १०६४

व्योमयानव रा त्तस्मादवतीर्य रघूद्वहः,
'कुबेरं वह गच्छे'ति तदाज्ञापयदीश्वरः. १०६५

आज्ञप्तमग म च्छ्रीदं विमानं तदनंतरम्
भरतः प्रार्थयामास, 'राज्यं स्वीकुर्वि'ति प्रभुम्. १०६६

भ्रातुस्तथेति श्री रामः प्रतिजग्राह तद्वचः

---

१. जन्मिभिः प्राणिभिः ईड्यं श्लाघ्यम्. २. पुष्पकयानेन.

शत्रुघ्नवचनात्प्राप्ता निपुणाः ईमश्रुवर्धनाः. १०६७

पूर्वं भ्रातृषु रा जेंद्रः स्नातेषु भरतादिषु
सुग्रीवे राक्षसेंद्रे च स्नानं चक्रे ततः स्वयम्. १०६८

शत्रुघ्नः पर म प्रेम्णा विश्वालंकारमग्रजम्
अलंकारैरलंचक्रे सद्गुणैरप्यलंकृतम्. १०६९

प्रतिकर्माथ ज गतीपुन्या दशरथस्त्रियः
चक्रुर्वानरपत्नीनां कौसल्या पुत्रवत्सला. १०७०

सुमंत्रोऽथ ह य श्रेष्ठैर्युक्तं रथमुपानयत्
तमारुरोह श्रीरामः प्रभुः परपुरंजयः. १०७१

रश्मीन् जग्राह रा जीवलोचनो भरतः स्वयम्
छत्रं पूर्णशरच्चंद्रप्रभं शत्रुघ्न आददे. १०७२

बिभीषणोऽथ म तिमान् वालव्यजनमुत्तमम्
लक्ष्मणो व्यजनं तस्य तालवृंतमयं तदा. १०७३

शत्रुंजयं कुं ज रेंद्रं चलत्पर्वतसंनिभम्
आरुरोह महातेजाः सुग्रीवः प्लवगर्षभः. १०७४

ययुः समास्था य बहून् वारणान् वानरोत्तमाः
मानुषं विग्रहं कृत्वा सर्वाभरणभूषिताः. १०७५

रामं सुरद्वि ज श्रेष्ठा द्रष्टुं व्योम्नि समागताः
प्रहृष्टाः पूजयामासुः स्तुतिभिः पुष्पवृष्टिभिः. १०७६

साकेतं, शम य न्कृत्स्नं संतापं, प्रविवेश सः
तृषार्तं चातककुलं घर्मार्त इव वारिदः. १०७७

शुश्राव मधु रा रामो गिरः स्वगुणपूरिताः
प्रजाः प्रापुः सुखं दृष्ट्वा मुखं रामस्य भूरि ताः. १०७८

ददृशू राम म हिषीमयोध्यामाहिलास्तथा
यथा कल्पलतां प्राप्तामर्थिनां चित्तवृत्तयः. १०७९

ततः स रामः श्री मत्तत्प्राप मुख्यं पितुर्गृहम्

---

१. नापिताः. २. जगद्भूषणम्. ३. प्रसाधनम्.

अथाह भरतं 'भक्तं हनूमंतं बिभीषणम्  १०८०
सुग्रीवं वान  रा धीशं जांबवंतं तथांगदम्
यूथपैः सह मातॄणां वंदनार्थं शनैर्नय.  १०८१
वानरेंद्राय  म द्गेहं समृद्धं त्वं निवेदय.'
भरतस्तत्तथा कृत्वा वानरेश्वरमब्रवीत्,  १०८२
'दूतांस्त्वमद्य  ज[1] वनान् काकुत्स्थस्य महात्मनः
आज्ञापयाभिषेकाय जलमाहर्तुमंबुधीन्.'  १०८३
तदाज्ञया तो  य माशु स्वर्णकुंभेन वानरः
सुषेण आनयामास पूर्वात्सिंधोर्महाबलः.  १०८४
ऋषभः साग  रा द्दंभो दक्षिणाद्गवयः कपिः
पश्चिमादर्णवात्तूर्णं स्वयं मारुतिरुत्तरात्,  १०८५
अन्ये प्लवंग  म वरा जांबवांश्चर्क्षभूपतिः
नदीशतानां पंचानां जलं कुंभैरुपाहरन्.  १०८६
वसिष्ठादिद्वि  ज श्रेष्ठाः पीठे रत्नमये प्रभुम्
ससीतमभ्यषिंचंस्तैर्विधिना तीर्थवारिभिः.  १०८७
कन्याभिश्च प्रि  य परैः सचिवैः शस्त्रिभिस्तथा
नैगमैर्लोकपालैश्च श्रीरामं तेऽभ्यषेचयन्.  १०८८
साक्षाद्वि  ज गतां कर्त्रा यन्निर्मितं वरम्
तत्किरीटं वसिष्ठेन स्थापितं राममस्तके.  १०८९
ऋत्विग्भिश्चाव्य[2]  य प्राज्यतेजोभिर्मणिभूषणैः
सभायां हैम[3]कलशायां राघवः समलंकृतः.  १०९०
छत्रं च द्विज[4]  रा जाभं तस्य शत्रुघ्न आददे.
बिभीषणः कपींद्रश्च वालव्यजनमुत्तमम्.  १०९१
मुक्ताहारं हे  म पद्ममालां रामाय मारुतः
ददौ सभायामागत्य मूर्तः शक्रप्रचोदितः.  १०९२

---

१. वेगवतः २. अव्ययं अविनाशि प्राज्यं च तेजः येषां तानि ३. सुवर्णमय्याम्. ४. चंद्रप्रभम्. ५. साक्षात्.

तत्राभिषेके श्री[1] जाने रामस्यामिततेजसः
प्रजगुर्देवगंधर्वा ननृतुश्चाप्सरोगणाः. १०९३

सस्यपूर्णा ध रा सर्वे फलवंतश्च पादपाः
गंधवंति च पुष्पाणि बभूवू राघवोत्सवे. १०९४

सहस्रशत म श्वानां धेनूनां च गवां शतम्
ददौ शतवृषान् पूर्वं द्विजेभ्यो मनुजर्षभः. १०९५

त्रिंशत्कोटीः स ज गतीसुरेभ्यो हेम्न ईश्वरः
नानाभरणवस्त्राणि महार्हाणि ददौ पुनः. १०९६

प्लवंगराजा य विभुः कांचनीं मणिविग्रहाम्
सूर्यरश्मिनिभां दिव्यां स्रजं प्रायच्छदीश्वरः. १०९७

महार्हे रुचि रा कारे चंद्ररश्मिविभूषिते
सर्वरत्नमये श्रीमानंगदायांगदे ददौ. १०९८

मुक्ताहारं स्वं म हार्हं सीतायै प्रददौ प्रभुः
तं कंठादवमुच्याथ देवी राममुदैक्षत. १०९९

तामिंगितज्ञो ज गतीप्रभवामब्रवीत्प्रभुः,
'प्रदेहि सुभगे! हारं यस्य तुष्टासि भामिनि!' ११००

अथांजनेया य ददौ तं हारं सा दयावती
ययावतीत्य[2] स जगन्नान्यैः श्रीस्तेन यावती. ११०१

धृतिर्यशस्ते ज सी च दाक्ष्यं सामर्थ्यमुत्तमम्
यस्मिन् बुद्धिर्विक्रमश्च पौरुषं विनयो नयः, ११०२

सोऽजनातन य स्तेन हारेण शुशुभे तथा
मंदाकिन्याः प्रवाहेण सुमेरुः शैलराडिव. ११०३

सुग्रीवो वान रा धीशो राक्षसेंद्रो बिभीषणः
हनूमान् जांबवानन्ये श्रीरामेण समर्चिताः. ११०४

गतः प्लवंग म श्रेष्ठः किष्किंधां प्रभुसत्कृतः

---

१. श्रीर्जाया यस्य सः श्रीजानिः तस्य. २. यावती श्रीः तेन लब्धा तावती अन्यैर्न लभ्या, अतः सः जगत् अतीत्य ययौ.

लब्ध्वा कुलधनं लंकां हृष्टः प्रायाद्विभीषणः. ११०५

स्वयौवराज्यं श्री रामो लक्ष्मणानुमते ततः
भरताय ददौ प्रेम्णा राघवो लाघवोज्झितम्. ११०६

श्रीरामः प्राप्य रा ज्यं तद्वर्षाण्ययुतमेकराट्
दशाश्वमेधानाजह्रे सदश्वान् भूरिदक्षिणान्. ११०७

आसन्प्रजाः स म स्तास्ता वीतशोका निरामयाः
बहुवर्षायुषोऽत्याढ्या बहुपुत्रा बहुश्रुताः. ११०८

निकामवर्षी ज लदो नासीद् व्यालकृतं भयम्
न पर्यदेवन्विधवा रामे राज्यं प्रशासति. ११०९

तेजो बलं व य स्तेषां जनानां नाभवच्चलम्
निर्दस्युरभवल्लोको नानर्थः कंचिदस्पृक्षत्. १११०

लक्ष्मणानुच रा द्रामात्कामा[1]युतशतोत्तमात्
सर्वान्मनोरथान्प्राप्ताः प्रजा मुमुदिरे भृशम्. ११११

समस्यातिस म र्थस्य तस्यानिश[2]दयावतः
रामस्य मुमुदे विश्वं कीर्त्या विशदया[3]ऽवतः[4]. १११२

सर्वापि धन्या ज नेता[5]ऽजनताभूत्तदानिशम्
भूर्नंदन[6]प्रभवना भवनाशकरात्प्रभोः. १११३

साध्वसं नैव य मतो जातु जीवस्य कस्यचित्
सर्वेऽपि सुहृदः स्वैरं, वैरं केवलमेनसा[7]. १११४

भर्ता सर्वस्य ज गतः श्यामो रामो यथा घनः
भक्ता मयूरास्तं दृष्ट्वा यत्तेषां मुदितं मनः. १११५

सर्वेषामपि य न्नाम स्मरतां भद्र[8]सादरम्
श्रीमद्वाल्मीकिना गीतं चरितं सद्रसादरम्[9]. १११६

---

१. कामानां अयुतशतं तस्मात् उत्तमः. २. अनिशं दयावतः ३. निर्मलया. ४. रक्षतः ५. अजनता (भगवन्नता) जनता अभूत्. ६. नंदनं प्रभवति (पराभवति) सा. ७. पापेन. ८. भद्रे (कल्याणे) सादरम् (आदरयुतम्). ९. सद्रसस्य आदरः यस्मिन् कर्मणि यथा तथा.

यशो विश्वाभि रा मस्य श्रीरामस्यातिपावनम्
गीतं वापि श्रुतं वापि यथामस्त्यनुमोदितम्. १११७
रामनामैव म हितं सन्मनोऽनेन मोहितम्
यो हि तं प्राप्तुकामो द्राक् तस्यान्यत्खलु नो हितम्.

इति श्रीमन्मंत्ररामायणे श्रीरामनंदनमयूरविरचिते युद्धकांडे
षडशीतितमो मंत्रः ।

---

# उत्तरकांडम्

प्राप्तराज्यो यदा श्री मान् रामोऽयोध्यापतिस्तदा
आजग्मुर्मुनयः सर्वे प्रेम्णा तं प्रतिनंदितुम्. १
विश्वामित्रस्तपो रा शिर्यवक्रीतोऽथ गालवः
अगस्त्योऽत्रिश्च भगवानन्ये च मुनिसत्तमाः. २
प्रत्युज्जगाम रा म स्तान् द्वारपालनिवेदितान्
पूजयामास संस्थाप्य स्वासनेषु यथार्हतः. ३
कुशलं रघुरा ज स्तांस्ततोऽपृच्छत्सुसत्कृतान्
ते तमूचु'र्महाबाहो! सर्वत्र कुशलं हि नः. ४
त्वां तु दिष्ट्या स्वाल य स्थं वीरं कुशलिनं प्रभो!
सानुजं कीर्तिसंपन्नं पश्यामो हतशात्रवम्. ५
दिष्ट्या त्वया हतो रा जन्! रावणो लोकरावणः
स भारस्ते न सधनुर्विजेथास्त्वं[1] जगत्त्रयम्. ६
लक्ष्मणेन च सं[2] म र्दे शक्रजित्प्रमुखा द्विषः
दिष्ट्या हता महाभाग! आज्ञा त्वद्धितकारिणा. ७
कुंभकर्णोऽपि च ज गत्कालो दिष्ट्या हतो रणे
यस्य प्र[3]माणाद्विपुलं प्रमाणं नेह विद्यते. ८

---

१. यः केवलधनुःसहायो जगत्त्रयमपि जेतुं समर्थस्तस्य रावणवधोऽकिंचित्कर इत्यर्थः. २. युद्धे. ३. बलाकारादिप्रमाणात्.

सेंद्रा लोकेश्वरा य स्मान्नस्ताः सर्पादिवाखवः

दिष्ट्या दशास्यो निहतो द्वंद्वयुद्धगतस्त्वया. ९

वधो राक्षसरा ज स्य तव भारो न राघव!

द्वंद्वयुद्धमनुप्राप्तः स दिष्ट्या रावणिर्हतः. १०

रामास्माकं विस्म य स्तु श्रुत्वा शक्रजितं हतम्

अवध्यं सर्वभूतानां हंतु कोऽपि क्षमो न तम्. ११

दिष्ट्या त्वं वर्धसे रा कापतिस्वच्छमहायशाः

दत्त्वाद्य विपुलां राम! विप्रेभ्योऽभयदक्षिणाम्.' १२

श्रुत्वा तद्विस्मये म ग्नो रामः प्रांजलिरब्रवीत्,

'अतिक्रम्य दशग्रीवं किं प्रशंसथ रावणिम्?' १३

अथ कुंभोद्भवः श्री मानुवाच रघुनंदनम्

'शृणु राम पुरावृत्तं तस्य सर्वं ब्रवीमि ते. १४

प्रजापतिसुतो रा जन्! पुलस्त्यो भगवान्मुनिः

तृणबिंद्वाश्रमं गत्वा तपस्तेपे महातपाः. १५

विघ्नं कुर्वंत्याश्र म स्थे मुनौ तस्मिंस्तु कन्यकाः

गायंत्यो वादयंत्यश्च लासयंत्यो यथासुखम्. १६

रुष्टः स मुनिरा ज स्तास्तत्र प्रोवाच कन्यकाः,

'या मे दर्शनमागच्छेत्सा गर्भं धारयिष्यति.' १७

ताः कन्याः शापभ य तस्तं देशं नोपचक्रमुः

तृणबिंदोस्तु राजर्षेस्तनया न शृणोति तत्. १८

साश्रमे विचचा रा थ कांचिदभ्यागतां सखीम्

अदृष्ट्वा तं तदापश्यत्तस्य श्रुत्वा श्रु[1]तिध्वनिम्. १९

मुनेर्वचनसा म र्थ्यात्सहसा गर्भवत्यभूत्

पित्रा पृष्टाब्रवीद्धेतुं मुनेर्दर्शनमेव सा. २०

ध्यानं विवेश रा ज र्षिर्ज्ञात्वा शापं महात्मनः

तस्मै पुलस्त्याय ददौ कन्यां सोऽप्यग्रहीन्मुदा. २१

---

१. वेदध्वनिम्.

मुनेर्वरात्सा प्र य ताऽसूत विश्रवसं सुतम्
पितेव तपसा युक्तः सोऽभवद्विश्रवा मुनिः. २२
तस्मै विश्रवसेऽ ज स्य पौत्रायाद्भुततेजसे
भरद्वाजो ददौ कन्यां तस्या वैश्रवणः सुतः २३
तस्मै ब्रह्माथ द य या लोकपालत्वमीप्सितम्
निधीनां रक्षणं चादात् तपसाराधितश्चिरम्, २४
पुष्पकं च प्रचा रा य विमानं प्रददौ प्रभुः.
विष्णोर्भीतैः परित्यक्तां राक्षसैस्त्वष्टृनिर्मिताम् २५
त्रिकूटस्थां हेम म यीं लंकां तस्मै पिताप्यदात्,
तां विश्वकर्मरचितां सोऽध्यावसदुदारधीः.' २६
पप्रच्छ घटजं श्री मान् रामो राजीवलोचनः,
'ये लंकायां स्थिताः पूर्वं राक्षसाः कथितास्त्वया. २७
भगवंस्ते तपो रा शे कस्माज्जाताः कथं स्थिताः
अपराधं कमुद्दिश्य निहता विष्णुना रणे. २८
अगस्त्यः प्राह र म यन्मनो रामस्य सूक्तिभिः,
'प्रजापतिरपः सृष्ट्वा तद्रक्षार्थं महातपाः. २९
व्यसृजद्वारिज ज निः स भूतानि पुरा प्रभुः
'अपो रक्षध्व'मित्याह तानि सत्त्वानि भूतकृत्. ३०
रक्षामेत्यब्जन य न! प्रोक्तं यैस्ते तु राक्षसाः
यक्षामेति च यैरुक्तं यक्षास्ते नामतोऽभवन्. ३१
'हेतिः प्रहेतिश्च रा जन् मुख्यौ तत्र बभूवतुः
प्रहेतिर्धार्मिको नित्यं तपोवनरतोऽभवत्. ३२
हेतिस्तु संतान म तिः कालस्य भगिनीं भयाम्
उपयेमे सुतस्तस्यां विद्युत्केशाभिधोऽभवत्. ३३
विद्युत्केशोऽपि ते ज स्वीं संध्यादुहितरं प्रियाम्
उदावहद्रघूत्तंस! नाम्ना सालकटंकटाम्. ३४
गर्भं प्राप्ता सा प्रि य तो मंदरे तं घनस्वनम्

तत्याज घनसंकाशं विद्युत्केशरतार्थिनी. ३५

तस्मिन् काले गिरि ज या सहारुह्य वृषं शिवः

गच्छन्मारुतमार्गेण शुश्राव रुदितं शिशोः. ३६

तत्र प्रसादं प्रि य या प्रेरितः शंकरोऽकरोत्

सद्योऽमरत्वं तारुण्यं पुरमाकाशगं ददौ. ३७

स सुकेशो यातु रा जः प्रख्यातोऽभूद्रघूत्तम!

गंधर्वो ग्रामणीस्तस्मै ददौ देववतीं सुताम्. ३८

स पुत्रांस्त्रीन्प्रति म ना जनयामास राघव!

माल्यवंतं सुमालिं च मालिं च बलिनां वरम्. ३९

तपस्तुष्टो ददौ श्री मान वरांस्तेभ्यः सुदुर्लभान्

अजेयाः शत्रुहंतारो जातास्ते चिरजीविनः. ४०

देवा दैत्याश्च तै रा सन् पीडिता वरनिर्भयैः

विश्वकर्मकृता लंका प्राप्ता शक्रपुरीसमा. ४१

गंधर्वी नर्मदा म त्वा युक्तं कन्यात्रयं स्वयम्

अलंकृत्य ददौ तेभ्यो नक्षत्रे[1] भगदैवते. ४२

सुंदरी यातुरा ज स्य भार्या माल्यवतोऽभवत्

तत्सुता वज्रमुष्टिश्च विरूपाक्षश्च दुर्मुखः ४३

सुप्तघ्नश्च तथा य ज्ञकोपो मत्तश्च राक्षसः

उन्मत्तनामा, कन्या च सुंदर्यामनलाभिधा. ४४

भार्या सुमालिनो रा म! नाम्ना केतुमती प्रिया

प्रहस्तोऽकंपनश्चैव विकटः कालिकामुखः. ४५

धूम्राक्षश्च तथा म त्र्यंशत्रू दंडसुपार्श्वकौ

संह्रादिः प्रघसश्चैव भासकर्णश्च तत्सुताः. ४६

कन्या च रक्षोरा ज स्य राका पुष्पोत्कटाभिधा

कैकस्यथ चतुर्थी सा नाम्ना कुंभीनसी प्रभो! ४७

मालेस्तु वसुदा य स्यामनलानिलनामकौ

---

१. उत्तराफल्गुन्याम्.

हरः संपातिरित्येते बिभीषणहिते रताः. ४८

अथ तैर्बहुधाऽ ज स्य वरदानेन पीडिताः
त्रिदशाः[1] शरणं जग्मुर्भगवंतं महेश्वरम्. ४९

तानुवाच त्रिन य नो, 'ममावध्या हि तेऽसुराः
गच्छध्वं शरणं विष्णुं हनिष्यति स तान्प्रभुः.' ५०

प्राप्योपायं शंक रा त्ते देवा राक्षसपीडिताः
शरण्यं शरणं जग्मुर्विष्णुं प्रणतवत्सलम्. ५१

दत्त्वाभयं तान्सोऽ म र्त्यान् शंखचक्रगदाधरः
स्वस्थानं प्रेषयामास तज्ज्ञात्वोवाच माल्यवान्, ५२

'भ्रातरौ! प्रार्थितः श्री शः सुरैः सोऽस्मान्निशाचरान्
हंतुं प्रतिज्ञां कृतवान् किं कर्तव्यमतःपरम्?' ५३

सुमालिमालिनौ रा म! मत्तावूचतुरग्रजम्,
'हंतव्यास्त्रिदशा यैर्नो घातार्थं प्रार्थितोऽच्युतः.' ५४

इति कृत्वा मतिं म त्ता देवान् हन्तुं समुद्यताः
चतुरंगबलोपेता लंकायास्ते विनिर्गताः. ५५

तज्ज्ञात्वा द्विजरा ज स्य पृष्ठमारुह्य चक्रभृत्
तानाससाद दुर्वृत्तान् हंतुं मंतुं स्मरन्प्रभुः. ५६

शस्त्रैर्जघ्नुः प्रभुं य त्ता युगपत्सर्व एव ते
ततः शार्ङ्गधनुर्मुक्तैः शरैस्तानहनद्धरिः. ५७

पांचजन्यं महा रा वं प्रदध्मौ पुरुषोत्तमः
पेतुस्ते राक्षसा भग्ना वाहनेभ्यो भयार्दिताः. ५८

त्रासयामास स म हान् शंखराजरवः परान्
मृगराज इवारण्ये समदानिव कुंजरान्. ५९

सुमाली प्राशवि ज यं विष्णुं हंतुं धनुर्धरः
ररासे[2] राक्षसो हर्षात्सतडित्तोयदो यथा. ६०

सुमालिनो निर्भ य स्य सारथेरिषुणा शिरः

---

१. हस्तदोषः—त्रिदशा. २. जगर्जे.

चिच्छेद त्रिजगन्नाथो भ्रांतास्ते तस्य वाजिनः. ६१

अथ मालिशरा ज न्ये कार्तस्वरविभूषिताः
विविशुर्हरिमासाद्य क्रौंचं पत्ररथा इव. ६२

सोऽर्द्यमानोऽपि सु य शा बहुभिर्मालिनः शरैः
न चुक्षुभे रणे विष्णुर्जितेंद्रिय इवाधिभिः. ६३

मालिनं त्रिदशा रा तिं क्रूरं विमुखमाशुगैः
चकार पातयन् मौलिं ध्वजं चापं तुरंगमान्. ६४

जघान गदया म ध्ये ललाटं स खगेश्वरम्
गरुत्मान् विमुखश्चक्रेऽजितमाजौ पराङ्मुखम्. ६५

पराङ्मुखोऽपि स श्री शस्तिर्यग्वलितकंधरः
मालिनोऽपातयच्छीर्षं चक्रेणातुलतेजसा. ६६

हते मालिनि तौ रा जन्! सुमाली माल्यवानुभौ
सबलौ शोकसंतप्तौ लंकामेव प्रधावितौ. ६७

स गरुत्मान्महा म न्युः पक्षवातेन राक्षसान्
द्रावयामास देवोऽपि ममर्दारिगदेषुभिः. ६८

पेतुर्हताः सिंधु ज ले राक्षसाश्छिन्नमस्तकाः
माल्यवान् केशवं प्राह क्रोधप्रस्फुरिताधरः. ६९

'नारायण! त्वं सु य शाः क्षत्रधर्मं पुरातनम्
न वेत्स्ययुद्धमनसो भीतान् हंसि यथेतरः.' ७०

उवाच तेजसां रा शिः, 'सुराणामभयं मया
उत्सादनेन भवतां तदेतदनुपाल्यते.' ७१

शक्त्या विष्णुं बाहु म ध्ये स बिभेदाशु माल्यवान्
हरेरुरसि सा रेजे मेघस्येव शतह्रदा. ७२

तामेव शक्तिम ज नः प्रभुरुत्कृष्य तेजसा
चिक्षेप, सा माल्यवंतं बिभेदोरसि दारुणा. ७३

भेदं प्राप्तोऽपि का य स्य क्षतं सोऽगणयन् बली
आश्वस्तोऽभ्यहनद्देवं पुनः शूलेन वक्षसि. ७४

तथैव देवरा ज स्य माल्यवान्मुष्टिनानुजम्
ताडयित्वा धनुर्मात्रमपक्रांतो निशाचरः. ७५
विष्णुं खगेशं च य दा राक्षसोऽताडयत्पुनः
गरुडः पक्षवातेन सुदूरं तमपोहयत्. ७६
दृष्ट्वाग्रजमा रा त्तं द्रावितं पक्षिणा तथा
सुमाली स्वबलैः सार्धं लंकामभिमुखो ययौ. ७७
गरुत्मतः पक्ष म रुद्बलोद्भूतः स माल्यवान्
स्वबलेन समागम्य ययौ लंकां ह्रिया वृतः. ७८
एवं भग्ना रणे श्री मन् राम ! ते बहुशोऽरयः
त्यक्त्वा लंकां गता वस्तुं पातालं स्वजनावृताः. ७९
ये त्वयाद्य हता रा जन् ! पौलस्त्या रजनीचराः
माल्यवत्प्रमुखाः सर्वे एतेभ्यो बलवत्तराः. ८०
न चान्योऽद्भुतबा म र्थ्यो हंता लोकेषु राक्षसान्
विना नारायणं राम ! शंखचक्रगदाधरम्. ८१
राम ! नारायणोऽ ज य्यः साक्षात्त्वं प्रभुरव्ययः
राक्षसान् हंतुमुत्पन्नः शरणागतवत्सलः. ८२
कृतस्त्वया वधो य स्य राक्षसस्य रघूत्तम !
जन्म प्रभावं तस्य त्वं रावणस्य निबोध मे. ८३
स सुमाली सुरा रा तिर्यदा यातो रसातलम्
तदा धनाधिपो लंकामवसत्पुत्रपौत्रवान्. ८४
अथैकदा प्रभो ! म र्त्यलोकमादाय कन्यकाम्
सुमाली व्यचरत् पश्यन् वरं दुहितुरात्मनः. ८५
तदा विश्रवसं ज न्मप्रदं द्रष्टुं धनेश्वरम्
गच्छंतं पुष्पकेनैक्ष्यमपश्यल्लोकनायकम्. ८६
सविस्मयोऽचिंत य त्स रक्षसां श्रेय उत्तमम्,
'किं कृत्वेत्येवमचिराद्वर्धेमहि कथं वयम् ?' ८७
अथाब्रवीदात्म ज्ञां निं कैकसीं स रसातले,

'पुत्रि! प्रदानकालस्ते न च विज्ञायते वरः. ८८

तत्त्वं विश्रवसं ब्र ह्मात्सेवया वरय स्वयम्

ईदृशास्ते भविष्यंति पुत्राः पुत्रि! न संशयः.' ८९

सा तच्छ्रुत्वा वचो रा त्रिंचरकन्या स्वयं ययौ

उपसृत्य प्रदोषे तं चरणाधोमुखी स्थिता. ९०

विलिखंतीमथ म हीमंगुष्ठाग्रेण सुंदरीम्

विश्रवा वीक्ष्य पप्रच्छ, 'का त्वं कार्यं च किं तव?' ९१

एवमुक्ता तु सा श्री मन् कृतांजलिरथाब्रवीत्,

'आत्मप्रभावेन मुने! ज्ञातुमर्हसि मे मतम्. ९२

विद्धि मां तपसां रा शे! शासनात् पितुरागताम्

ब्रह्मर्षे कैकसीं नाम शेषं त्वं ज्ञातुमर्हसि.' ९३

तां ध्यात्वोवाच स 'म या विज्ञातं ते मनोगतम्

सुताभिलाषो मत्तस्ते मत्तमातंगगामिनि! ९४

उपस्थिता मां र ज नीमुखे त्वं दारुणे ततः

प्रसविष्यसि सुश्रोणि! राक्षसान् क्रूरकर्मणः.' ९५

साब्रवीत्साश्रुन य ना, 'भगवन्! ब्रह्मवादिनः

त्वत्तः कुपुत्रान्नेच्छामि प्रसादं कर्तुमर्हसि.' ९६

सोऽब्रवीत्तां पुष्क रा क्षीं पश्चिमो यः सुतस्तव

मम वंशानुरूपः स भविष्यति शुभानने!' ९७

एवमुक्ता तु स म ये नीलांजनचयोपमम्

दशास्यं विंशतिभुजं जनयामास सा सुतम्. ९८

तस्य राम! यदा ज न्म तदोत्पाताः सुदारुणाः

बभूवुर्भूमिकंपाद्याः सर्वलोकभयप्रदाः. ९९

कृतस्तथाह्वयो य त्स प्रसूतो दशकंधरः

द्विबाहुरेकवक्त्रश्च कामरूपोऽपि सोऽभवत्. १००

तस्य त्वनंतरं ज ज्ञे कुंभकर्णो महाबलः

ततः शूर्पणखा राम! धर्मात्माथ बिभीषणः. १०१

जातो बिभीषणो य र्हि पुष्पवर्षं तदापतत्
नभस्थाने दुंदुभयो देवानां प्राणदंस्तथा. १०२

तावरण्ये महा रा ज ववृधाते महौजसौ
कुंभकर्णदशग्रीवौ लोकोद्वेगकरौ तदा. १०३

कुंभकर्णः सुप्र म त्तो महर्षीन् धर्मवत्सलान्
भक्षयन्विचचारोग्रो न संतुष्टो जगत्त्रये. १०४

बिभीषणः शुचिः श्री मान् ' नित्यं धर्मे व्यवस्थितः
स्वाध्यायाहारनियतो बुद्धिमान्विजितेंद्रियः. १०५

अथ राजन् राज रा जस्तत्र कालेन केनचित्
आगतः पितरं द्रष्टुं पुष्पकेण धनेश्वरः. १०६

तं दृष्ट्वा कैकसी म म्रा दुःखे पुत्रं दशाननम्
प्राह, 'पश्य दशग्रीव! भ्रातरं भाग्यशालिनम्. १०७

भ्रातृभावे समेऽ ज स्त्वं पश्यात्मानं त्वमीदृशम्
तथा यत्नं कुरु यथा भवेर्वैश्रवणोपमः.' १०८

स प्राह मातरं, 'य त्नाच्छ्रीदतुल्योऽधिकोऽपि वा
भविष्याम्योजसा मातः! संतापं त्यज हृद्गतम्.' १०९

स इत्युक्त्वांभोध रा भ! तपोर्थं कृतनिश्चयः
दशग्रीवो ययौ राम! गोकर्णं सानुजो वशी. ११०

स कुंभकर्णः सु म हत्तपश्चक्रे महातपाः
शीतवृष्टिसहो, ग्रीष्मे पंचाग्नीन् परितः स्थितः. १११

तस्य साधुः सोऽनु ज न्मा नित्यं धर्मरतः शुचिः
पंच वर्षसहस्राणि पादेनैकेन तस्थिवान्. ११२

तावतीश्च समा य त्तः स्वाध्याये धृतमानसः
तस्थावूर्ध्वशिरोबाहुः सहस्रांशुं विलोकयन्. ११३

दशकंठोऽपि सोऽ ज स्रं निराहारो दृढासनः
पूर्णे वर्षसहस्रे स्वं शिरो वह्नौ जुहाव ह. ११४

छेत्तुकामोऽभूत्स य दा दशास्यो दशमं शिरः

वरदस्त्रिदशैः सार्धं प्राप्तस्तत्र पितामहः. ११५

अब्रवीत्तं सुरा रा ध्यो, ' वरं वरय वांछितम्

महासत्त्व! दशग्रीव! सफलस्ते परिश्रमः.' ११६

हृष्टः स तस्मिन्स म ये प्रबद्धांजलिरब्रवीत्,

' नास्ति मृत्युसमः शत्रुरमरत्वमहं वृणे.' ११७

ततः प्रोवाच तं श्री मान् भगवांश्चतुराननः,

' नास्ति सर्वामरत्वं ते, वरमन्यं वृणीष्व मे.' ११८

एवमुक्ते तदा रा म! ब्रह्मणा लोककर्तृणा

दशग्रीव उवाचेदं कृतांजलिरथाग्रतः. ११९

' सुपर्णयक्षाद्य म रदैत्यदानवरक्षसाम्

अवध्योऽहं प्रजाध्यक्ष! भवेयं त्वत्प्रसादतः. १२०

अन्येषु चिंता त्व ज! मे नास्त्येवामरपूजित!

तृणभूता हि मे सर्वे प्राणिनो मानुषादयः.' १२१

इत्थमुक्तस्तत्प्रि य कृत्तमुवाच पितामहः,

' भविष्यत्येवमेतत्ते वचो राक्षसपुंगव! १२२

हुतानि यानि धी रा ग्नौ मस्तकानि त्वया पुरा

पुनस्तानि भविष्यंति तथैव तव रक्षस! १२३

कामरूपश्च स म ये भविष्यसि दशानन!'

एवमुक्तस्योत्थितानि तानि शीर्षाणि रक्षसः. १२४

अथाब्रवीत्पद्म ज स्तं साध्वाचारं बिभीषणम्,

' परितुष्टोऽस्मि धर्मात्मन्! वरं वरय सुव्रत!' १२५

कृतांजलिः स म य तः प्राह लोकगुरुः स्वयम्,

' प्रीतस्त्वं कृतकृत्योऽस्मि वृतः सर्वगुणैरहम्. १२६

दातव्यश्चेत्कंज ज! मे वरस्तच्छृणु वत्सल!

परमापद्गतस्यापि धर्मे भवतु मे मतिः. १२७

अस्त्रेषु प्रवरं य त्तत्प्रसादात्तव वत्सल!

अशिक्षितं च ब्रह्मास्त्रं भगवन्! प्रतिभातु मे. १२८

सदा धर्मेनया रा मा धर्मपालनसादरा
सर्वत्र बुद्धिर्मे देव! भवतु त्वत्प्रसादतः.' १२९
तमाह देवः स म हान्, 'सर्वमेतद्भविष्यति
राक्षसोऽप्यसि साधुस्त्वममरत्वं ददामि ते.' १३०
कुंभकर्णाय च श्री मान् वरं दातुमवस्थितः
तं देवं परमत्रस्ताः प्राहुः प्रांजलयः सुराः. १३१
'कुंभकर्णेनाम रा द्य! महेंद्रानुचरा दश
नंदनेप्सरसः सह भाक्षिता ऋषयोऽप्यज! १३२
भाक्षिता बहवोऽ म र्त्या एवंवीर्यो वराद्दते,
एष लब्धवरः स्याच्चेद्भक्षयेद्भुवनत्रयम्. १३३
वरव्याजेनाब्ज ज ने! मोहोऽस्मै दीयतां प्रभो!
लोकानां स्वस्ति चैवं स्याद्भवेदस्य च संमतिः.' १३४
एवमुक्तोऽचिंत य त्स ब्रह्मा देवहिते रतः
चिंतिता चोपतस्थेऽस्य पार्श्वे देवी सरस्वती. १३५
विधिस्तामाह धी रा णां भजतामिष्टकारिणीम्,
'वाणि! त्वं राक्षसेंद्रस्य भव वाक् देवतेप्सिता.' १३६
तथेत्युक्त्वा हृष्ट म तिः प्रविष्टा सा सरस्वती
धाता तमाह, 'वत्स! त्वं वरं वरय यो मतः.' १३७
स कैकस्या आत्म ज स्तं प्रभुं तन्मोहितोऽब्रवीत्,
'स्वप्तुं वर्षाण्यनेकानि देवदेव! ममेप्सितम्.' १३८
तथेति कृतमा य स्तं प्रोक्त्वा प्रायात्पितामहः
सरस्वती जहौ कृत्वा देवकार्यं निशाचरम्. १३९
दशकंठस्यानु ज श्च चिंतयामास दुःखितः,
'ईदृशं किमिदं वाक्यं ममाद्य वदनाच्च्युतम्? १४०
हंताहं मोहितो य त्नाद्देवैर्मन्ये समागतैः
एवं गते किं कर्तव्यं वंचितेन मयारिभिः?' १४१
लब्ध्वा वरान् खेच रा स्ते न्यवसन् पितुराश्रमे

तदाकर्ण्य प्रहृष्टात्मा सुमाली तानुपागतः. १४२
मातामहः स कु म तिस्तं दशग्रीवमब्रवीत्,
'दिष्ट्या वत्स! त्वया प्राप्तश्चिंतितोऽयं मनोरथः. १४३
त्यक्त्वा लंकां वयं श्री शत्रस्ताः प्राप्ता रसातलम्
तद्गतं नो महाबाहो! महद्विष्णुकृतं भयम्. १४४
लंकायां रक्षसां रा जा भव त्वमधुना बली,
त्वया राक्षसवंशोऽयं निमग्नोऽपि समुद्धृतः. १४५
धनेश्वराल्लब्ध म हा लंकामाच्छिद्य तेजसा
अस्माभिः सचिवैर्युक्तो राज्यं त्वं भोक्तुमर्हसि.' १४६
उवाच विश्रवो ज स्तं मातुस्तातं सुमालिनम्,
'वित्तेशो गुरुरस्माकं नार्हसे वक्तुमीदृशम्.' १४७
ततः प्रहस्तो न य विद्दित्यदित्यात्मजन्मनाम्
भ्रातृद्रोहात्मकं वृत्तं कथयामास विस्तरात्. १४८
चिंतयित्वा तद्दु रा त्मा प्रहस्तस्य वचस्ततः
दशास्यो बाढमित्युक्त्वा स लंकोपवनं गतः. १४९
तं प्रहस्तं दूत म र्थमुक्त्वा वैश्रवणांतिकम्
प्रेषयामास साम्ना मे लंकां देहीति भाषितुम्. १५०
स गत्वा राजरा ज स्य समीपं तमथाब्रवीत्,
'प्रेषितोऽहं तव भ्रात्रा दशग्रीवेण सुव्रत! १५१
भ्राता ब्रवीति ते य त्स तत्त्वं मम मुखाच्छृणु,
सुमालिप्रमुखैर्लंका भुक्तपूर्वा निशाचरैः. १२२
लंका तदेषा र ज नीचराणां साधु दीयताम्,
तमाह धनदः, 'पित्रा दत्ता शून्या निशाचरैः १५३
निवेशिता मया य त्नाद्दानमानादिभिर्गुणैः
गच्छ ब्रूहि दशग्रीवं प्रहस्त! त्वं वचो मम. १५४
लंकापुरी तथा रा ज्यं यच्च द्रव्यमुपार्जितम्
तवाप्येतन्महाबाहो! भुंक्ष्वेदं त्वमकंटकम्. १५५

अविभक्तं वसु म म राज्यं चेदं त्वया सह.'
एवमुक्त्वा धनाध्यक्षो जगाम पितुरंतिकम्. १५६

अभिवाद्य गुरुं श्री दः प्राह भ्रातुर्यदीप्सितम्.
स प्रांजलिं सुतं प्राह, 'शृणु पुत्र! वचो मम. १५७

लंकापुरापहा रा र्थमुक्तवान्मम संनिधौ
मया निर्भर्त्सितश्चासौ बहुशो न शमं गतः. १५८

वरप्रदानसं म त्तो मान्यामान्यं न वेत्ति सः
क्रूरात्मा मम शापाच्च दारुणां प्रकृतिं गतः. १५९

कैलासं राजरा ज! त्वं गच्छ तात! सहानुगः
निवेशय पुरं तत्र निवासार्थं सुखी भव.' १६०

पित्रैवमुक्तः सु य शाः कैलासं गिरिशालयम्
सदारपुत्रसचिवः सधनः सानुगो गतः. १६१

प्रहस्तोऽथ मुदा रा त्रिंचराधीशं दशाननम्
प्राह, लंकापुरी शून्या त्यक्त्वैनां धनदो गतः.' १६२

दशाननः प्राह म हः सानुजः सबलस्तदा
विवेश स सुहृत्त्यक्त्वा शंकां लंकां महामहाः. १६३

तत्राभिषिक्तः स्व ज नैरवसद्दशकंधरः.
अलकायां च कैलासे रचितायां धनेश्वरः. १६४

विद्युज्जिह्वाभिधा य स्वां स्वसारं दानवाय सः
ददौ शूर्पणखां प्रीत्या कालकेयाय राक्षसः. १६५

मंदोदरीं मय ज निं वृतवान् दशकंधरः
मायाविदुंदुभ्यनुजां हेमाकुक्षिसमुद्भवाम्. १६६

वैरोचनस्य प्र य तां दौहित्रीं समकल्पयत्
वज्रज्वालाभिधां भार्यां कुंभकर्णस्य रावणः. १६७

गंधर्वाणां तथा रा ज्ञः शैलूषस्य महात्मनः
सरमां नाम धर्मज्ञां भार्यां लेभे बिभीषणः. १६८

मंदोदरीयशो[1]ऽ　म त्रं द्यौः पाथोदमिवातुलम्
　　पुत्रं महेंद्रजेतारं मेघनादमजीजनत्.　　१६९
जातमात्रेण हि　श्री मंस्तेन रावणसूनुना
　　रुदता सुमहान्मुक्तो नादो घनरवोपमः.　　१७०
स मत्तो　रक्षसां रा जा जगत्पीडामथाकरोत्
　　तच्छ्रुत्वा धनदो दूतं प्रेषयामास कोविदम्.　　१७१
तत्संदेशं स　सु म तिः कथयामास तद्धितम्
　　'मैवं कुरु जगत्पीडां धर्म एव स्थितिर्हिता.　　१७२
निराकृतोऽस्म्यग्र　ज स्ते बहुशो राक्षसाधिप!
　　सापराधोऽपि बालो हि रक्षितव्यः स्वबांधवैः.　　१७३
कैलासे　वसतो　य न्मे वृत्तं शृणु दशानन!
　　तत्र देवो मया दृष्ट उमया सहितः प्रभुः.　　१७४
सव्यं चक्षुर्मया　रा जन्! दैवाद्देव्यां निपातितम्
　　का न्वेषेत्येव सहजं न खल्वन्येन हेतुना.　　१७५
जगद्धाव्यास्तु सु　म हस्तेजो निरुपमं हि तत्
　　देव्या दिव्यप्रभावेण दग्धं सव्यं ममेक्षणम्.　　१७६
भगवत्यास्तु ते　ज स्तद्द्रष्टुं चक्षुर्न मे क्षमम्
　　रेणुध्वस्तामिव ज्योतिः पिंगलत्वमुपागतम्.　　१७७
ततो गतोऽहं नि　य तस्तटं तस्य गिरेः परम्
　　तूर्ष्णीं वर्षशतान्यष्टौ सुव्रतं समधारयम्.　　१७८
समाप्ते नियमेऽ　ज न्मा तत्र देवो महेश्वरः
　　ततः प्रीतेन मनसा प्राह वाक्यमिदं प्रभुः,　　१७९
'प्रीतोऽस्मि जनिता　य स्त्वत्तपसानेन सुव्रत!
　　मया चैतद्व्रतं चीर्णं त्वया चापि मदुत्थितम्.　　१८०
व्रतादस्माद्दुष्क　रा त्त्वं सखा भव ममानघ!
　　पिंगलत्वमवाप्तं यच्चक्षुर्देव्या निरीक्षणात्.　　१८१

---

१. यशःपात्रम्.

एकपिंगेति नाम त्वं प्राप्य ख्यातो भविष्यसि'
एवं प्राप्तप्रसादेन लब्धवानुज्ञां च शंकरात् १८२
आगतेन मया श्रीमन्! श्रुतस्ते पापनिश्चयः
तदधर्मान्निवर्तस्व मृत्युदात्कुलदूषणात्. १८३
धर्मे स्थाप्य मनो राजन्! पुण्यां कीर्तिमुपार्जय,
चिंत्यते हि वधोपायः सर्षिसंघैः सुरैस्तव.' १८४
एवमुक्तः क्रूरमतिः कोपसंरक्तलोचनः
हस्तान् दंतांश्च संपिष्य दशास्यो वाक्यमब्रवीत्. १८५
'ज्ञातं वचस्ते मुजड! ब्रूहि मा पुनरीदृशम्
नैव त्वमसि नैवासौ भ्राता येनासि चोदितः. १८६
रुद्रसख्यं श्रावयते मूढो ब्रूते न मे हितम्
नैवैतत्क्षमणीयं मे यदेतद्भाषितं त्वया. १८७
न हंतव्यो राजराजो ज्येष्ठो भ्रातेति मर्षितम्
त्रीन् लोकानपि जेष्यामि तस्यैकस्य कृतेऽचिरात्. १८८
तेन सार्द्धं तान्यमस्य क्षयं नेष्यामि लोकपान्
इत्युक्त्वाऽत्तुं ददौ हत्वा दूतमाज्ञां स रक्षसाम्. १८९
भंक्त्वाज्ञां राजराजस्य वरसंपन्मदोद्धतः
सेना आज्ञापयामास रक्षसां कामरूपिणाम्. १९०
ततः कृतस्वस्त्ययनो रथमारुह्य रावणः
त्रैलोक्यविजयाकांक्षी ययौ यत्र धनेश्वरः. १९१
बलेन यक्षानजयन्माणिभद्रमुखान् रणे
जहार पुष्पकं जित्वा माययास्त्रैश्च सोग्रजम्. १९२
वार्यमाणो मया, 'यत्त्वं नावगच्छसि दुर्मते!
पश्चादस्य फलं प्राप्य तप्स्यसे निरयं गतः.' १९३
इति शप्त्वा राजराजो युद्धं तेन सहाकरोत्
पपात मूर्च्छितो नीतः स यक्षैर्नंदनं वनम्. १९४
आरुह्य पुष्पकमथ प्रहृष्टः स दशाननः

जितं त्रिभुवनं मेने गर्वोत्सेकात्सुदुर्मतिः. १९५

ततः शरवणे श्रीमत्पुष्पकं ब्रह्मनिर्मितम्
दिव्यं निरुद्धसंचारमभवत्सहसाद्भुतम्. १९६

'कुतो नु स्तंभितं राजव्योमयान'मिति स्वकैः
मीमांसमाने सचिवैः सह तस्मिन् दशानने १९७

नंदीश्वरोऽमितमहा आजगाम त्रिशूलभृत्
उवाच स तमुत्सिक्तं राक्षसेंद्रमशंकितः. १९८

'निवर्तस्वाशु रजनीचर! क्रीडति शंकरः
प्रभुणा सर्वभूतानामगम्योऽयं कृतो गिरिः.' १९९

तच्छ्रुत्वा रक्तनयनः पुष्पकादवरुह्य सः
'कोऽयं शंकर' इत्युक्त्वा तं दृष्ट्वा वानराननम् २००

अवज्ञाय समाराध्यं द्वितीयमिव शंकरम्
श्रीमदांधो जहासोच्चैर्नंदीश्वरमसत्तमः. २०१

नंदी तमाह सामर्षो, 'यस्मान्मां कपिरूपिणम्
अवज्ञाय प्रहासं त्वं कृतवान् बलदर्पितः. २०२

तस्मान्मद्रूपतेजस्का मनःसंपातरंहसः
उत्पत्स्यंति वधार्थं हि कुलस्य तव वानराः.' २०३

एवं वाले तदक्षय्यस्य निश्चयोत्थप्रहर्षतः
देवदुंदुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता. २०४

अचिंतयित्वा स जगत्पतिप्रातिनिधेर्वचः
पर्वतं तं समासाद्य वाक्यमाह दशाननः. २०५

'क्रीडा ते गोपते! यत्र पुष्पकस्य गतिस्त्वया
यतश्छिन्ना तं तवेमं समुन्मूलं करोम्यगम्. २०६

केनौजसात्र मा रारिर्नित्यं क्रीडति राजवत्
विज्ञातव्यं न जानीते भयस्थानमुपास्थितम्.' २०७

एवमुक्त्वा स सामर्थ्याद्विक्षिप्याधो गिरेर्भुजान्
तोलयामास तं शीघ्रं, स शैलः समकंपत. २०८

गिरेश्चालनतः श्री मत्युमा सा भगवत्यपि
चचालालिंगितवती मानिन्यपि महेश्वरम्. २०९

ततो राम! पुरा रा तिर्देवानां प्रभवो हरः
पादांगुष्ठेन तं शैलं पीडयामास लीलया. २१०

पीडितास्तद्भुजा म ध्ये मूलं राम! महागिरेः
विस्मिताश्चाभवंस्तत्र सचिवास्तस्य रक्षसः. २११

तेनातिरोषाद्भु[1] ज गप्रभबाह्वतिपीडनात्
मुक्तो विरावः सहसा त्रैलोक्यं येन कंपितम्. २१२

'महादेवं तोष य स्व नीलकंठमुमापतिम्
तमृते शरणं नान्यं पश्यामोऽत्र दशानन!' २१३

इत्युक्तो रक्षसां रा जा सचिवैः स तथाकरोत्,
संवत्सरसहस्रं तु रुदतो रक्षसो गतम्. २१४

ततः प्रणम्य स म नः स्थिरीकृत्य महेश्वरम्
तुष्टाव सामभिः स्तोत्रैर्विविधैः करुणार्णवम्. २१५

ततः प्रीतः प्राह ज गत्पतिर्मुक्त्वा भुजाव्रतम्,
'शैलाक्रांतेन यो मुक्तस्त्वयारावः सुदारुणः. २१६

भीतं च शब्दितं य स्मादेतल्लोकत्रयं भृशम्
तस्मात्त्वं रावणो नाम्ना ख्यातो राजन्! भविष्यसि. २१७

अनुज्ञातोऽद्य व्र ज त्वमि'त्युक्तो रावणोऽब्रवीत्,
'यदि देव! प्रसन्नोऽसि वरं मे देहि याचतः. २१८

अवध्यत्वं मया य त्नात्प्राप्तं देव! चतुर्मुखात्
निर्विघ्नमायुषः शेषं शस्त्रं च त्वं प्रयच्छ मे.' २१९

एवमुक्तः स्मरा रा तिश्चंद्रहासमसिं वरम्
शापाद्यनाश्यं च ददावायुषः शेषमीश्वरः. २२०

आज्ञामवाप्य न म नं स कृत्वारुह्य पुष्पकम्
ततो महीतलं राम! पर्यक्रामत रावणः. २२१

---

१. सर्पतुल्यानां बाहूनामतिपीडनात्.

क्षत्रियान् बालिनः श्री मान् बाधमानश्चरन् भुवि
　　　　कन्यामपश्यद्धिमवद्वनेऽजिनजटाधराम्. २२२
तामपृच्छत्स स्म रा तैः 'का त्वं कस्ये'ति सा सती
　　　　विधिना तस्य चातिथ्यं कृत्वोवाच तपस्विनी. २२३
'कुशध्वजो नाम म म ब्रह्मर्षिरमितप्रभः
　　　　बृहस्पतिसुतस्तातो बुद्ध्या यो गुरुणा समः. २२४
तस्याहं कुर्वतोऽ ज स्रं वेदाभ्यासं महात्मनः
　　　　संभूता वाङ्मयी कन्या नाम्ना वेदवती स्मृता. २२५
सुरादिभिः कृतो य त्नो मदर्थं राक्षसेश्वर!
　　　　विष्णुरेवात्यभिप्रेतो जामाता मत्पितुः प्रभुः. २२६
दैत्येन शंभुना रा त्रौ सुप्तस्तातो हतस्ततः
　　　　तनुं तस्य परिष्वज्य प्रविष्टाग्निं प्रसूर्मम. २२७
पितुर्मनोरथ म हं सत्यं कर्तुं निरंतरम्
　　　　तमेव जगतां नाथं हृदयेन समुद्वहे. २२८
कर्तुं स्वं सफलं ज न्म चरामि विपुलं तपः
　　　　कथितं वृत्तमेतन्मे गच्छ पौलस्त्यनंदन!' २२९
श्रुत्वाब्रवीत्स भू य स्तां, 'यौवनं तेऽतिवर्तते,
　　　　त्रैलोक्यसुंदरि! त्वं मे भव भार्या शुचिस्मिते! २३०
कष्टैरलं, न वि ज ने वने वस्तुं त्वमर्हसि
　　　　वीर्येण तपसा भोगैर्न स विष्णुर्मया समः.' २३१
प्रोवाच तं सा प्र य ता, 'मां मैवं जगदीश्वरम्
　　　　त्वदृते राक्षसेंद्रान्यः कोऽवमन्येत बुद्धिमान्? २३२
एवमुक्ते त या रा जन्! कन्यां तां मूर्धजेषु सः
　　　　बलाज्जग्राह कामांधः, सा चुकोप तपस्विनी. २३३
केशान् परात्तान्स म लान् कन्या वेदवती तदा
　　　　कराग्रेणाच्छिनत्खड्गभावं नीतेन तेजसा. २३४
मर्तुं कृतत्वरा श्री मन्नुवाच तमघाचलम्,

‘धर्षितायास्त्वयानार्य ! न मे जीवनमिष्यते. २३५

वधार्थं ते पुना रा लिंचरोत्पत्त्ये तपोऽस्ति चेत्
मख्यातायोनिजा साध्वी भवेयं धर्मिणः सुता.’ २३६

इत्युक्त्वा सा तस म नाः प्रविष्टा जातवेदसम्
सैषा श्रीजानकी भार्या तव त्वं विष्णुरव्ययः. २३७

प्रायादुशीरबी ज स्थं मरुत्तं रावणस्ततः
भयान्महेंद्रः संवृत्तो मयूरस्तस्य रक्षसः. २३८

वायसोऽभूत्तत्र य मः कृकलासो धनेश्वरः
संवृत्तो वरुणो हंसस्तिर्यग्योनिं गताः सुराः. २३९

तमासाद्य महा रा जं मरुत्तं राक्षसाधिपः
प्राह, ‘युद्धं प्रयच्छेति निर्जितोऽस्मीति वा वद.’ २४०

स द्विषन्नीरद म रुन्मरुत्तःप्राह, ‘को भवान्?’
अवहासं ततो मुक्त्वा रक्षसां पतिरब्रवीत्. २४१

‘अविस्मयेन रा ज न्य! भृशं प्रीतोऽस्म्यहं तव
धनदस्यानुजं यो मां नावगच्छसि रावणम्. २४२

लोके कोन्योस्त्यहो य स्तं मां न जानाति विश्रुतम्
भ्रातरं येन निर्जित्य विमानमिदमाहृतम्. २४३

तं दशास्यं मनु ज राट् स मरुत्तस्तदाब्रवीत्,
‘धन्यः खलु भवान् येन ज्येष्ठो भ्राता रणे जितः.

श्लाघ्यो जगत्सु सु य शास्त्वादृशोऽन्यो न विद्यते,
कं त्वं प्राक्केवलं धर्मं चरित्वा लब्धवान् वरम्. २४५

श्रुतपूर्वं न मे रा जन्! यादृशं भाषसे स्वयम्
तिष्ठेदानीं न मे जीवन् प्रतियास्यसि दुर्मते! २४६

प्रेषयामि त्वां य म स्य क्षयं तीक्ष्णैः शरैरहम्
इत्युक्त्वेषुधनुष्पाणिः संगराय स निर्ययौ. २४७

बृहस्पत्यनुजः श्री मान्त्संवर्तो दीक्षितं नृपम्
वारयामास सत्रस्थं, स निर्वृत्तो गुरोर्गिरा. २४८

तं मत्वा निर्जितं रा जन्! राक्षसः शुकनामकः
'रावणो जयती' त्युच्चैर्घोषयामास हर्षितः. २४९

भक्षयित्वा तत्र म त्तो यज्ञवाटस्थितानृषीन्
गतो दशाननोऽन्यत्र नृपानन्यान् जयन् भुवि. २५०

शक्रो मयूरं भु ज गाच्च भयं तव सर्वथा
इदं नेत्रसहस्रं मे त्वद्बर्हेषु भविष्यति. २५१

वर्षमाणेऽतिश य तो मयि त्वं प्राप्स्यसे मुदम्
इत्यब्रवीद्धर्मराजो वायसं 'त्वमरोगभाक्. २५२

स्वतो मृत्युर्मद्व रा त्ते न भविष्यति सर्वथा,
त्वयि तृप्ते संतु तृप्ता ये च मद्विषये स्थिताः.' २५३

'वर्णस्तवास्तु वि म लश्चंद्रमंडलसंनिभः'
हंसमित्यब्रवीद्राजा यादसां वरदस्तदा. २५४

प्रसन्नो राजरा ज श्च कृकलासं तदाब्रवीत्,
'स्वर्णवर्णं तव शिरो मम प्रीत्या भवत्विति.' २५५

एवं दत्तवरा य ज्ञे समाप्ते भूभुजा सह
देवाः स्वभवनं याताः सर्वे शक्रपुरोगमाः. २५६

केचिद्भृतास्तेन ज गत्यधिपाः शासनातिगाः
निर्जिताः स्मेत्यभाषंत केचिन्नीतिविशारदाः. २५७

धीमान् दुष्यंतो ग य श्च गाधिश्च सुरथस्तथा
पुरूरवाश्चोचुरेते 'वयं तात त्वया जिताः.' २५८

अयोध्याधिपती रा जा योऽनरण्याभिधो महान्
निर्जिता राक्षसास्तेन हरिणा हरिणा इव. २५९

पातयामास तं म ह्यां तलेनाहत्य रावणः
उपहासं दशग्रीवश्चक्रे वरमदोद्धतः. २६०

सोऽनरण्यो नृपः श्री मानब्रवीत्तं दशाननम्,
'यदि सम्यक्कृतो धर्मस्तर्हि सत्यं वचोऽस्तु मे. २६१

उत्पत्स्यते कुले रा ज्ञामिक्ष्वाकूणां सतामिह

रामो दाशरथिर्नाम यस्ते प्राणान् हरिष्यति.' २६२

महानादः प्राप्त म हैस्ताडितो देवदुंदुभिः
तस्मिन्नुदाहृते शापे पुष्पवृष्टिश्च खाच्च्युता. २६३

ततोऽनरण्यो रा ज न्यश्रेष्ठः प्राप्तस्त्रिविष्टपम्
ददर्श घनपृष्ठस्थं नारदं राक्षसेश्वरः. २६४

कृताभिवादनं य त्तं विजये दशकंधरम्
देवर्षिरब्रवी'द्युक्तं नेदं ते मृतमारणम्. २६५

हत एव ह्ययं रा जन्! लोको मृत्युवशो यतः
किमयं बाध्यते तात! त्वयावध्येन दैवतैः. २६६

जित एव त्वया म र्त्यलोकोऽयं नात्र संशयः.
अवश्यमेभिः सर्वैश्च गंतव्यं यमसादनम्. २६७

तन्निगृह्णीष्व ते ज स्विन्! यमं परपुरंजय
तस्मिन् जिते जितं सर्वं भवत्येव न संशयः.' २६८

जगाम जेतुं स य मं देवर्षिप्रेरितो बली
तत्पूर्वं नारदो गत्वा स्वयमंतकमब्रवीत्. २६९

'विजेता राजरा ज स्य ससैन्यो दशकंधरः
उपयाति वशं नेतुं विक्रमैस्त्वां सुदुर्जयम्.' २७०

अत्रांतरे तद्वि य द्धं पुष्पकं दर्शनं गतम्
प्राणिनो मोचितास्तेन बलिना निरयं गताः. २७१

प्रेतसंरक्षका रा ज्ञः पितृणां सचिवास्तदा
मंत्रिणो दशकंठस्य युयुधुस्ते परस्परम्. २७२

भग्ना वीरास्ते य म स्य रौद्रेणास्त्रेण रक्षसा
ततः स्वयं धर्मराजो युयुधे तेन शत्रुणा. २७३

सप्तरात्रं रणः श्री दभ्रात्रा तेनामितौजसा
कृतः स्वयं कृतांतेन सार्धं परमदारुणः. २७४

यमराक्षसयो रा सीत्तद्युद्धं तुमुलं प्रभो!
प्रजापतिं पुरस्कृत्य द्रष्टुं तत्रागताः सुराः. २७५

राक्षसेंद्रोऽपि स म रे धर्मराजोऽपि राघव !
आत्मनो जयमाकांक्षन् परं चक्रे परिश्रमम्. २७६

मृत्युराह यमं ज न्ये, 'मुंच त्वं धर्मराज ! माम्
न हि कश्चिन्मया दृष्टो बलवानपि जीवति. २७७

शंभुर्विरोचनो य श्च नमुचिः शंबरः स च
हतो हिरण्यकशिपुः किमुतायं निशाचरः.' २७८

उवाच तं धर्म रा ज'स्त्वं तिष्ठैनं निहन्म्यहम्.'
इत्युक्त्वा कालदंडं स तोलयामास पाणिना. २७९

प्रहर्तुकामे श म ने तेन दंडेन रावणम्
पितामहः प्रभुः साक्षाद्दर्शयित्वा तमब्रवीत्. २८०

'कुरूक्रमकात्म ज ! मे न खल्वमितविक्रम !
न हंतव्यस्त्वयानेन दंडेनैष निशाचरः. २८१

मया प्रसन्नेन य म ! प्रदत्तोऽस्मै वरः खलु
स त्वया नानृतः कार्यो दंडं मा मुंच रक्षसि.' २८२

इत्युक्तो धर्मरा ज स्तं चतुर्वदनमब्रवीत्,
'एष व्यावर्तितो दंडः प्रभविष्णुर्हि नो भवान्.' २८३

एवमुक्त्वाथ स य मस्तत्रैवांतर्हितोऽभवत्
रावणो नाम विश्राव्य निर्गतः कालसादनात्. २८४

ततो रसातलं रा जा राक्षसानां जगाम सः
तत्र भोगवतीं जित्वा पुरीं वासुकिपालिताम् २८५

ययौ पुरीं मणि म यीं निवातकवचैः सह
चक्रे युद्धं राक्षसेंद्रस्तत्र संवत्सरो गतः. २८६

आजगाम विधिः श्री मान् दैत्यांस्तानित्युवाच सः,
'न ह्ययं रावणो युद्धे शक्यो जेतुं सुरासुरैः. २८७

भवंतोऽपि प्रवी रा नो शक्या जेतुं सुरादिभिः
रावणस्य सखित्वं मे भवद्भिः सह रोचते.' २८८

ब्रह्माज्ञया ते स म रान्निवृत्ताः स च रावणः

सख्यं निवातकवचैः सार्धं चक्रेऽग्निसाक्षिकम्. २८९

तत्रोष्य वर्षं र ज नीचरेंद्रो हततापसः
असुरेभ्यः सखित्वेन मायानां शतमाप सः. २९०

गत्वाश्मनगरं य सः कालकेयान् बलोत्कटान्
अवधीत्सूर्पणख्याश्च भर्तारमसिनाच्छिनत्. २९१

वरुणस्यालयं रा ज्ञः कैलासमिव भास्वरम्
अपश्यत्सुरभिं तत्र क्षीरोदो यत्पयोभवः. २९२

संपूज्य तां प्रीत म तिः सोऽजयद्वरुणात्मजान्
श्रुत्वा प्रचेतसं ब्रह्मलोकस्थं निर्गतस्ततः. २९३

निवृत्तो राक्षसो ज ह्रे मार्गे राजर्षिकन्यकाः
देवपन्नगगंधर्वयक्षासुरवरात्मजाः. २९४

दर्शनीयां हि यां य त्र सोऽपश्यद्दशकंधरः
हत्वा बंधुजनं तस्या विमाने तां रुरोध सः. २९५

ताः सर्वा योषितोऽज स्रं मुमुचुर्बाष्पजं जलम्
अलं निनिंदुः शोकार्ताः शपंत्यस्तं महाखलम्. २९६

निनिंदुस्ताः स्वनि य तिं कन्यकाश्च सभर्तृकाः
विलेपुः सभृशं स्मृत्वा पितॄन्मातॄः पतीन्सुतान्. २९७

क्रोधादूचुः समं रा मा, 'यस्मात्परवधूरतः
तस्मात्प्राप्स्यत्ययं मृत्युं स्त्रीकृतेनैव दुर्मतिः.' २९८

सतीभिः परमा म र्षादेवं वाक्येऽभ्युदीरिते
दिव्या दुंदुभयो नेदुः पुष्पवृष्टिः पपात च. २९९

स बभूव गत श्री कः सतीभिः शप्त उद्धतः
शुद्धतस्तद्व्रतात्तस्य तेजोहानिर्न युद्धतः. ३००

प्रविवेश पुरीं रा जा पूज्यमानो निशाचरैः
एतस्मिन्नंतरे घोरा तत्स्वसा विललाप सा. ३०१

शोके शूर्पणखां म प्नां सांत्वयन्नाह रावणः,
'सुखं मातुः स्वसुः सूनोः खरस्य वस संनिधौ. ३०२

खरोऽयं यातुरा　ज स्ते करिष्यति वचः सदा.'
इत्युक्त्वा दंडकारण्यं प्रेषयामास तं तदा.　३०३
निकुंभिला नाम　य त्तल्लंकोपवनमुत्तमम्
कर्मसिद्धेर्हेतुभूतं प्रविवेश दशाननः.　३०४
तत्रापश्यत्सुरा　रा तिर्मेघनादं स दीक्षितम्
कृष्णाजिनधरं मूर्तं तेजोराशिमिव स्थितम्.　३०५
तमालिंग्योत्सुक　म ना ब्रह्मचारिणमात्मजम्
पप्रच्छ विस्मितो राजा स्वयं किमिदमित्यथ.　३०६
तमाह शुक्रो, य　ज ने रतोऽयं तव नंदनः
अग्निष्टोमादयो यज्ञाः सद्यानेन कृताः प्रभो !　३०७
सत्रं माहेश्वरं　य ज्वा कृत्वा पशुपतेः प्रभोः
वरान् सुदुर्लभान् प्राप्तो घननादो महायशाः.'　३०८
अब्रवीद्यातुरा　ज स्तं, 'न शोभनमिदं कृतम्
पूजिताः शत्रवो यस्माद्द्रव्यैरिंद्रपुरोगमाः.　३०९
एह्यदानीं कृतं　य द्धि सुकृतं तन्न संशयः
आगच्छ सौम्य ! गच्छामः स्वमेव भवनं प्रति.'　३१०
ततो गत्वा गृहं　रा जा सपुत्रः सबिभीषणः
स्त्रियोऽवतारयामास विमानाद्बाष्पगद्गदाः.　३११
बिभीषणोऽथ सु　म ति'र्माल्यवत्तनयानला
तस्याः कुंभीनसी कन्या सास्माकं धर्मतः स्वसा.　३१२
मधुना सा हृता　श्री मन्नेतस्य परयोषिताम्
हरणस्य फलं मन्ये स्वसुर्धर्षणमल्पतः　३१३
आसक्तेऽस्मिन्नध्व रा णां कर्मण्येतदभूत्प्रभो !
कुंभकर्णेऽपि संसुप्ते उदवासं गते मयि.'　३१४
इत्याह रावणोऽ　म र्षी निर्जगाम पुराद्द्रुतम्
चत्वार्यक्षौहिणीनां स सहस्राणि गृहीतवान्.　३१५
पृष्ठगोपो सोऽनु　ज न्मा कुंभकर्णो महाबलः

अग्रतो मेघनादोऽभूद्दशकंठस्य गच्छतः. ३१६

बिभीषणः स न य विलंकायां रक्षणे स्थितः
गतो मधुपुरं दैत्यैर्दानवैः सह रावणः. ३१७

न ददर्श मधुं रा म! भगिनीं तत्र दृष्टवान्
भीता कुंभीनसी भ्रातुः शिरसा चरणौ गता. ३१८

व्याकुलां पातितां म ह्यां दृष्ट्वा स दशकंधरः
तां समुत्थापयामास 'न भेतव्य'मिति ब्रुवन्. ३१९

साब्रवी'द्यदि रा ज न्! मे प्रसन्नस्त्वं महाभुज!
भर्तारं न ममेहाद्य हंतुमर्हसि मानद.' ३२०

स तामाह, 'क्व प्रि य स्ते मम शीघ्रं निवेद्यताम्
सह तेन गमिष्यामि सुरलोकं जयोद्यतः. ३२१

तच्छ्रुत्वा यातुरा ज स्य वचः कुंभीनसी मधुम्
सुप्तमुत्थाप्य तं भ्रात्रे दर्शयामास सादरा. ३२२

तस्याः स्वसुःस प्रि य कृन्मधुना पूजितः सुखम्
तत्रैकां रजनीमुष्य ततः कैलासमागतः. ३२३

तत्र चंद्रोदये रा त्रौ कामार्तो रम्यकानने
दैवाद्ददर्श रंभां तां करे जग्राह रावणः. ३२४

नत्वा तमाह सा, 'म ह्यमनुज्ञां दातुमर्हसि
स्नुषास्मि तव धर्मेण नलकूबरभोगदा.' ३२५

तामाह रावणः श्री मान्, 'मर्यादेयं सुरैः कृता
पतिरप्सरसां नास्ति न चैकस्त्रीपरिग्रहः.' ३२६

इत्युक्त्वा तां स स्म रा त्रौ बलाद्भुक्त्वा महाबलः
मुमोच सा पपातार्ता नलकूबरपादयोः. ३२७

श्रुत्वा तयोक्तं सोऽम र्षाद्शपन्नलकूबरः,
'धर्षयिष्यत्यकामां चेत्कामार्तः परयोषितम्. ३२८

मत्तस्य मोहाद्रा ज तो मार्गेणानेन दुर्मतेः
मूर्धा तु सप्तधा तस्य शकलीभविता ध्रुवम्.' ३२९

एवं दशास्यः स य दा शप्तस्तेन महात्मना
　　देवदुंदुभयो नेदुः पुष्पवृष्टिः पपात खात्. ३३०
श्रुताच्छापात्सुघो रा त्स त्रस्तो रात्रिचराधमः
　　नारीषु मैथुनीभावं नाकामास्वभ्यरोचयत्. ३३१
ततः स जेतुम म रान्प्रययावमरावतीम्
　　विष्णोः समीपमागत्य सुदीनो जिष्णुरब्रवीत्. ३३२
विष्णो! नारायणा ज! त्वमुपायं वद मे प्रभो!
　　वरदत्तो दशमुखः समरार्थं समागतः.' ३३३
तमाह देवोऽति य शाश्वङ्गी शक्रं भयाकुलम्,
　　'परित्रासो न कर्तव्यः श्रूयतामिंद्र! मे वचः. ३३४
नैवेष रावणो ज य्यस्त्रिदशेंद्र! सुरासुरैः
　　काल एनं हनिष्यामि नंदयिष्यामि वश्चिरम्. ३३५
देवैः सह स्वयं य त्तो भव युध्यस्व निर्भयः.'
　　इत्युक्तो विष्णुना जिष्णुर्युयुधे रक्षसा समम्. ३३६
राक्षसा युधि शू रा स्ते सुराश्च सुमहाबलाः
　　चक्रुरत्यद्भुतं कर्म प्राज्यनानोद्यतायुधाः. ३३७
सुमालिना ते स म रे हन्यमाना महौजसा
　　न व्यतिष्ठंत जलदा वातेनेव निपीडिताः. ३३८
रावणेन यथा श्री दः पूर्वं युद्धे निपातितः
　　तथैव मेघनादेन जयंतः शक्रनंदनः. ३३९
दौहित्रो मूर्छितो रा जन्! पुलोम्नाश्चपवाहितः
　　स तं जयंतं संगृह्य प्रविष्टोऽब्धिं महासुरः. ३४०
कुंभकर्णोऽपि स म रं चकार परमाद्भुतम्
　　प्राप्ताः पराभवं देवाः सर्वे तस्माद्यथांतकात्. ३४१
रावणो देवरा ज श्च चक्रतुस्तुमुलं रणम्
　　तत्र ये प्रेक्षकास्ते खे चित्रतां भेजिरे क्षणम्. ३४२
शक्रः सुरानाह, 'य न्मे रोचते शृणुतामराः!

अवध्योऽयं दशग्रीवो जीवन्नेव निगृह्यताम्. ३४३

त्रैलोक्यं भुज्यतेऽ रा तौ संनिरुद्धे बलौ मया
एवमेतस्य पापस्य निरोधो रोचते मम.’ ३४४

मंत्रं कृत्वैवम म रैः सार्धं त्यक्त्वा दशाननम्
तं ग्रहीतुमना राम! सोऽकरोद्रक्षसां क्षयम्. ३४५

मेघनादस्तदा ज न्ये प्राप्तां पशुपतेर्वरात्.
वितत्य तामसीं मायां शक्रं जग्राह मोहितम्. ३४६

स्वतातग्रहणे य त्तं गृहीत्वाजौ शतक्रतुम्
बद्ध्वा स्थाप्य स्वसेनायां स्वयं रावणमब्रवीत्. ३४७

‘तात! जातोऽद्य वि ज यो गृहीतो मघवा मया
विजितो मायया कामी ना यथाऽनघ वामया[1].’ ३४८

रोमांचितोऽतिप्रि य वाक्श्रावणाद्रावणस्तु तम्
सुतं धन्यस्त्वमित्याह मंत्रिबंदिशतैः स्तुतम्. ३४९

पुनराह सुरा रा तिः ‘पृष्ठतस्त्वानुयाम्यहम्,
शतांगमधिरोप्य त्वं नय लंकां शतक्रतुम्.’ ३५०

नीते पुरीं शत म खे घननादेन तेजसा
प्रजापतिं पुरस्कृत्य ययुर्लंकां सुरास्तदा. ३५१

आसाद्य राक्षसं श्री मानब्रवीत्तं पितामहः.
‘वत्स! रावण! तुष्टोऽस्मि पुत्रस्य तव विक्रमात्. ३५२

जितो यतो देव रा जो मेघनादेन संगरे
जगतींद्रजिदित्येवमेष ख्यातो भविष्यति. ३५३

तन्मुच्यतां शत म खो महाबाहो! दशानन!
किं चास्य मोक्षणार्थाय प्रयच्छंतु दिवौकसः’ ३५४

अथाह तत्काय ज स्तमिंद्रजित्समितिंजयः,
‘अमरत्वमहं देव वृणे यद्येष मुच्यते.’ ३५५

---

१. हे अनघ (निर्दोष) कामी ना (नरः) यथा वामया (सुंदर्या) विजीयते तथा मया मायया स विजितः

ततोऽब्रवीद्भूरि य शा मेघनादं प्रजापतिः,
'नास्ति सर्वामरत्वं हि प्राणिनः कस्यचिद्भुवि.' ३५६

स तमाह सुरा रा ध्यं 'स्यंदनेऽग्नेः समुत्थिते
तिष्ठतोऽमरता मे स्याद्वर एष वृतो मया.' ३५७

'एवमस्त्वि'ति सा म ज्ञस्तमुवाच प्रजापतिः
मुक्तश्चेंद्रजिता शक्रः सुराश्च त्रिदिवं गताः. ३५८

दीनोऽभूद्देवरा ज स्तं ब्रह्मोवाच, 'शतक्रतो!
अहल्याधर्षणस्यैतत्फलं प्राप्तं खलु त्वया. ३५९

प्रजानां परमं य त्तन्मया रूपं समुद्धृतम्
ततः स्त्री निर्मिता पूर्वं रत्नभूता जगत्त्रये. ३६०

हलं वैरूप्यमो ज स्विन्! हल्यं तत्प्रभवं तु यत्
तर्न्निष्यत्वं न यस्याः सा नाम्नाहल्येति कीर्तिता. ३६१

कस्य भार्या महा य स्य भविन्नीयं जगत्स्विति
मम चिंताभवद्रत्नभूतां निर्माय तां भृशम्. ३६२

स्थानाधिकतया रा मां त्वं जानीषे ममेति ताम्
गौतमे सा मया न्यस्ता न्यासभूतावसच्चिरम्. ३६३

तेन प्रत्यर्पिता म ह्यमविकारेण चेतसा
मुनेर्ज्ञात्वा महाधैर्यं तस्मै सा संप्रर्शिता मया. ३६४

सा त्वया धर्षिता श्री मन्! कामार्तेन समन्युना
दृष्टस्त्वं गौतमेनासि शप्तश्चात्युग्रतेजसा. ३६५

धर्षणान्मम दा रा णां शत्रुहस्तं गमिष्यसि
गौतमेनैवमुक्तस्त्वं तस्यैतत्फलमागतम्. ३६६

अहल्यां चाप्यति म हा गौतमः स तदाब्रवीत्
दुर्विनीतेऽधुना ध्वंस ममाश्रमसमीपतः. ३६७

यस्मात्सुरूपता ज न्यात्सुर्वार्त्वमनवस्थिता
तस्माद्रूपवती लोके न त्वमेका भविष्यसि. ३६८

---

१. महान् अयः शुभावहो विधिर्यस्य महाभागस्येत्यर्थः. २. दत्ता.

इत्युक्त्वा सा विन य तः प्रांजलिर्मुनिमब्रवीत्,
'वंचितास्मि मुने! तेन त्वद्रूपेण दिवौकसा ३६९
नाहं दुष्टा तपो रा शे! प्रसादं कर्तुमर्हसि.'
तयैवं प्रार्थितः शांतक्रोधस्तामाह गौतमः, ३७०
'उत्पत्स्यत्यद्भुत म हा इक्ष्वाकूणां महारथः
आतिथ्यं तस्य कृत्वा त्वं पूता मां पुनराप्स्यसि. ३७१
स्मर तद्देवरा ज त्वं दुष्कृतं यत्त्वया कृतम्
शापोत्सर्गाद्धि तस्येदं मुनेः सर्वमुपस्थितम्. ३७२
तच्छीघ्रं वैष्णवं य ज्ञं कुरु शक्र! यथाविधि
पावितः क्रतुना तेन प्राप्स्यसे त्रिदिवं पुनः. ३७३
प्रहारार्तस्तनू ज स्ते पुलोम्नाश्चपवाहितः
नीतः समुद्रे कुशली स त्वागंताऽचिराद्बुरे. ३७४
तच्छुत्वा वैष्णवं य ज्ञमिष्ट्वा देवेश्वरस्ततः
पुनस्त्रिदिवमाक्रामदन्वशासच्च पूर्ववत्. ३७५
एतद्बलं महा रा ज! प्रोक्तमिंद्रजितो मया
निर्जितस्तेन देवेंद्रः प्राणिनोऽन्ये तु किं पुनः. ३७६
'आश्चर्यमिति' रा म श्च लक्ष्मणश्चाब्रवीत्तदा
अगस्त्यवचनं श्रुत्वा वानरा राक्षसाश्च ते. ३७७
अगस्त्यं राघवः श्री मानब्रवी 'द्भगवन्! यदा
बभ्राम पृथिवीं सर्वां रावणो राक्षसेश्वरः. ३७८
तदा लोकास्तपो रा शे! शून्या आसन्किमंग! यत्
धर्षणं यत्र न प्राप्तो, हतवीर्या उताभवन्. ३७९
तमगस्त्योऽगाध म तिः प्रहसन्नाह राघवम्,
'चचार रावणो भूमिं बाधमानो धरापतीन्. ३८०
ततो माहिष्मतीं ज न्यकामः प्राप्तो वरोद्धतः
यत्रासीदर्जुनो राजा साक्षादग्निश्च सर्वदा. ३८१
स दशास्यो दिने य स्मिन्प्राप्तो माहिष्मतीं पुरीम्

तस्मिन्नेव दिने रंतुमर्जुनो नर्मदां गतः. ३८२

आख्याते सचिवै रा ज्ञोऽसांनिध्ये सर्वशर्मदाम्
विंध्यं, चित्रं महाशैलं ययौ पश्यन्स नर्मदाम्. ३८३

प्राप्य नर्मदां म ध्येपुलिनं दशकंधरः
जांबूनदमयं लिंगं पूजयामास सादरम्. ३८४

ननर्त सामानि ज गावीश्वरस्याग्रतस्तदा
नर्मदायाः प्रतिस्रोतः प्रवृद्धं जलमाययौ. ३८५

नर्मदापुलिने य त्र राक्षसेंद्रः स रावणः
शिवस्य पूजामकरोत्तस्माद्देशाददूरतः. ३८६

तत्र रेवासिंधु ज ले सदारः सोऽर्जुनः प्रभुः
क्रीडन् रुरोध कुतुकी दोःसहस्रेण तां नदीम्. ३८७

तस्याः स वेगः प य सः संप्रेषित इवाद्भुतः
पुष्पोपहारं सकलं जहार त्रिदशद्विषः. ३८८

तं वेगप्रभवं रा जा सोऽन्वेष्टुं शुकसारणौ
आदिशत्तौ गतौ व्योममार्गगौ पश्चिमामुखौ. ३८९

गत्वार्धयोजनं म ध्ये नर्मदं महिलाशतम्
सहस्रबाहुं क्रीडंतं पुरुषं समपश्यताम्. ३९०

तावागत्योचतुः, 'श्री मन्! कोऽपि तालोच्छ्रितः पुमान्
योषितः क्रीडयत्यारान्नदीं रुद्ध्वा भुजैः प्रभो!' ३९१

ज्ञात्वा तमर्जुनं रा हुः प्रभाकरमिव स्वयम्
प्रमत्तो रावणः प्रागात्तं नृपं युद्धलालसः. ३९२

तन्मंत्रिणः क्रुधा म त्तः प्राह गंभीरया गिरा,
'युद्धार्थं रावणः प्राप्त इत्याख्याताशु हैहयम्.' ३९३

उत्तस्थुः सायुधा ज न्यकामं तं ते तदाब्रुवन्,
'युद्धस्य कालो विज्ञातः साधु भो साधु रावण! ३९४

क्षीबं योषिद्गतं य त्स्वं योद्धुमुत्सहसे नृपम्
श्वो वा युध्यस्व हत्वास्मानर्जुनेन सहाद्य वा.' ३९५

ततोऽतिदुष्टाश्चा  रा स्ते सचिवास्तस्य रक्षसः

हत्वा तान् भक्षयामासुः क्षुधिताः कुणपाशनाः. ३९६

तदा बभूव सु  म हांस्तीरे हलहलाध्वनिः

हैहयाधिपयोधानां युध्यतां चापि रक्षसाम्. ३९७

दशास्यसचिवा  ज ग्मुः कार्तवीर्यस्य तद्बलम्

तस्य कर्माशु कथितं पुरुषैरर्जुनाय तत्. ३९८

तच्छ्रुत्वा शत्रुभ  य दः स्त्रीजनं नर्मदांभसः

उत्ततार न भेतव्यमित्युक्त्वा कुपितोऽर्जुनः ३९९

गदामादाय स  ज वः स सहस्रभुजोऽर्जुनः

अभिदुद्राव रक्षांसि तमांसीव दिवाकरः. ४००

स्थितं प्रहस्तम[1]  य नं रुद्ध्वा तन्मुसलं कृती

वंचयित्वा तं गदया पातयामास मूर्छितम्. ४०१

तं दृष्ट्वा पतितं  रा ज्ञो भीताः सर्वे निशाचराः

शुकसारणमारीचा अपसृष्टा रणाजिरात्. ४०२

दशाननः सोऽति म न्युर्नृपमभ्यद्रवत्तदा

रावणार्जुनयोर्युद्धमभवद्रोमहर्षणम्. ४०३

स्तनांतरेऽर्जुनः श्री मान् गदिनं राक्षसेश्वरम्

सर्वप्राणेनाजघान गदया भीमवेगया. ४०४

रक्षसो वज्रसा  रा सा वरत्राते महोरसि

दुर्बलेव गदा राम ! द्विधाभूतापतत्क्षितौ. ४०५

दशाननोऽप्यति  म हाः प्रहारेणापराङ्मुखः

अपासर्पद्धनुर्मात्रं[2] निषसाद च निष्टनन्. ४०६

ततो हैहयरा  ज स्तं शत्रुमालक्ष्य विह्वलम्

सहसोत्पत्य जग्राह गरुत्मानिव पन्नगम्. ४०७

दोःसहस्रेण सु  य शा गृहीत्वा तं दशाननम्

बबंध बलवान् राजा बलिं नारायणो यथा. ४०८

---

१. मार्गम्. २. अन्तर्गर्जन्.

बध्यमाने सुरा    रा तौ साधु साध्विति वादिनः
पुष्पवृष्टिं सुराश्चक्रुः कार्तवीर्यस्य मूर्धनि. ४०९

व्याघ्रो मृगमिवा म र्षाद्गृह्य सिंह इव द्विपम्
ररास हैहयो राजा हर्षादंबुदवन्मुहुः. ४१०

प्रहस्तो गतते    ज स्कं बद्धं दृष्ट्वा दशाननम्
मुख्यैर्निशाचरैः सार्धमभिदुद्राव हैहयम्. ४११

सप्रहस्तैस्तदा    य त्तैर्यत्तैः क्षिप्तं वरायुधम्
तदेवादाय तेनैव तान् जघान महाभुजः. ४१२

तदायुधैस्तान् र   ज नीचरान्स्स समरेऽर्जुनः
भित्त्वा विद्रावयामास वायुरंबुधरानिव. ४१३

आदाय रक्षःक्ष    य कृत्स्नोऽर्जुनस्तं दशाननम्
प्रविवेश पुरीं पौरैर्विप्रैः शक्र इवार्चितः. ४१४

तदाकर्ण्य तपो    रा शिः पुलस्त्यो भगवानृषिः
प्रार्थयामास तं भूपं, 'पौत्रं मुंच ममेति' सः ४१५

सख्यं कृत्वाद्भुत    म हाः प्रपूज्य दशकंधरम्
विमुच्य तं ब्रह्मसुतं विससर्ज कृतांजलिः. ४१६

पुलस्त्यः स मुनिः श्री मान् मोचयित्वात्मजात्मजम्
जगाम ब्रह्मणो लोकं शोकं नैव ददाति यः. ४१७

पुनः पृथ्वीं चचा रा रिभिप्रान् कुर्वन्महीक्षितः
ततो जगाम किष्किंधां नगरीं वालिपालिताम्. ४१८

गत्वाह्वयामास    म त्तो वालिनं हेममालिनम्
तारस्तारापितोवाच युद्धकामं दशाननम्. ४१९

'गतः स ऋक्षर    ज सः पुत्रः प्रतिबलस्तव
कोऽन्यः प्रमुखतः स्थातुं भवतोऽत्र कपिः क्षमः. ४२०

संध्यामन्वास्य नि य माब्धतुः सिंधुभ्य आत्मवान्
अस्मिन् समय आयाति वाली तिष्ठ मुहूर्तकम्. ४२१

---

१. ऋक्षरजा नाम वालिसुग्रीवयोर्माता.

वं पश्यैतानस्थि रा शीन् य एते शंखपांडुराः
युद्धार्थिनामिमे राजन्! हतानां वालिना द्विषाम्. ४२

त्वया यद्यपि सा म र्थ्यं प्राप्तं प्राज्यामृताशनात्
तथाप्यासाद्य कीशेंद्रं समाप्तं तव जीवितम्. ४२३

तमिदानीमिह ज गच्चित्रं त्वं पश्य वालिनम्
तिष्ठ क्षणं जीवितं तु दुर्लभं ते भविष्यति. ४२४

अथवा त्वरसे य तान्मर्तुं त्वं राक्षसाधिप!
दक्षिणं सागरं गच्छ द्रक्ष्यसे तत्र वालिनम्.' ४२५

इत्युक्तो गर्व पुं ज स्तं तारं निर्भर्त्स्य रावणः
दक्षिणाब्धिं गतोऽपश्यद्वालिनं भानुसंनिभम्. ४२६

गृहीतुकामो नि य मात्संध्योपासनतत्परम्
पृष्ठतो वालिनमारीर्निःशब्दपदमन्वगात्. ४२७

सार्वभौमो वान रा णां दृष्ट्वा दुष्टं यदृच्छया
स्थितस्तत्रैव नियमे स चकार न संभ्रमम्. ४२८

हस्तग्राह्यं तु तं म त्वा पादशब्देन रावणम्
पराङ्मुखोऽपि जग्राह वाली सर्पमिवांडजः. ४२९

गृहीतुकामं तं श्री मान् गृहीत्वा राक्षसं हरिः
समुत्पपात वेगेन कृत्वा कक्षावलंबिनम्. ४३०

स रावणं जहा रा रिं वितुदंतं नखैर्मुहुः
मुमोक्षयिषवोऽमात्या गर्जतस्तमभिद्रुताः. ४३१

अन्वीयमानो व्यो म स्थस्तैर्दशाननमंत्रिभिः
रराज वेगवान् वाली जलदैरंशुमानिव. ४३२

अशक्नुवंतोऽति ज वं तं प्राप्तुं ते निशाचराः
तस्य बाहूरुवेगेन परिश्रांता व्यवस्थिताः. ४३३

ततः स वाली प्र य यौ क्षिप्रं पश्चिममर्णवम्
तत्र संध्यामुपासित्वा गतः सागरमुत्तरम्. ४३४

प्राप्य पूर्वं च वा र्रा शिं वहमानो निशाचरम्

तत्र संध्यामुपास्याथ किष्किंधामागतो हरिः. ४३५

गतश्रीकं हृत म दं कक्षाक्रांतं दशाननम्
किष्किंधोपवने वाली मुमोच प्रहसन्मुहुः. ४३६

उवाच कपिरा ज स्तं, 'कुतः कस्त्वमिति' प्रभुः
स प्राह, ' वानरेंद्राहं राक्षसेंद्रोऽस्मि रावणः. ४३७

अहो बलं तेऽति य शो यस्त्वया वानरेश्वर !
अहं गृहीत्वा पशुवद्भ्रामितश्चतुरोऽर्णवान्. ४३८

त्रयाणामेव हि ज गत्यद्भुतैषा सदा गतिः
मनोऽनिलसुपर्णानां तव चात्र न संशयः. ४३९

दृष्टमद्य बलं य त्ते तदिच्छामि कपीश्वर !
त्वया सह चिरं सख्यं सुस्निग्धं पावकाग्रतः. ४४०

दाराः पुत्राः पुरं रा ष्ट्रं भोगाच्छादनभोजनम्
सर्वमेवाविभक्तं नौ भविष्यति हरीश्वर !' ४४१

ततस्तदा हृष्ट म ती तावुभावग्निसाक्षिकम्
भ्रातृत्वमुपसंपन्नौ परिष्वज्य परस्परम् ४४२

बलमप्रतिमं श्री मन्! वालिनोऽभवदुत्तमम्
सोऽपि त्वया विनिर्दग्धः शलभो वह्निना यथा.' ४४३

तं कुंभसंभवं रा जा राघवः स तदाब्रवीत्
' वालिरावणयोरल्पमधिकं मारुतेर्बलम्. ४४४

दाक्ष्यं धैर्यं विक्र म श्च प्राज्ञता नयसाधनम्
गुणा अन्ये च भगवन्! हनूमति कृतालयाः. ४४५

एकस्यास्यैव भु ज योर्मया वीर्येण जानकी
प्राप्ता कीर्तिरियं श्रीश्च सौमित्रिश्च रणे जयः. ४४६

जिष्णुविष्णुश्रीद य मास्तेषां न भगवंस्तथा
श्रूयंते तानि कर्माणि यानि युद्धे हनूमतः. ४४७

पतिः किमर्थं ता रा याः सुग्रीवप्रियकाम्यया
तदा वैरे समुत्पन्ने भगवन्न हतोऽमुना. ४४८

न ज्ञातवानहं म न्ये भगवन्नात्मनो बलम्
यद्दृष्टवान् जीवितेष्टं क्लिश्यंतं वानराधिपम्. ४४९

तपःश्रीकेलिकुं ज त्वमेतन्मे भगवन्! मुने!
विस्तरेण यथातत्त्वं कथयामरपूजित!' ४५०

'सत्यमेतत्प्रभो! य त्वं ब्रवीष्यस्मिन् हनूमति
न बले विद्यते तुल्यो न गतौ न मतौ परः. ४५१

अमोघशापैर्द्ध ज पैः शापो दत्तोऽस्य राघव!
न वेत्ता स्वं बलं सर्वं बली सन्नित्ययं पुरा. ४५२

श्रोतुं तवाभिप्रा य श्चेच्छिशुनानेन यत्कृतम्
समाधाय मतिं राम! निशामय वदाम्यहम्. ४५३

प्रशास्ते केसरी रा ज्यं मेरौ सोऽस्य पिता प्रभो!
तस्य भार्याञ्जना तस्यां वायोर्जातोऽयमात्मजः. ४५४

फलं मत्वा दिन म णिं जपापुष्पचयोपमम्
उत्पपात नभो बालः क्षुधितोऽत्तुमयं विभो! ४५५

सर्वेऽब्रुवंस्तदा श्री मान् यथायं पवनात्मजः
नाप्येवं बलवान् वायुर्न गरुत्मान्मनोऽपि नो.' ४५६

संत्रस्तोऽपसृतो रा हुः शक्रं गत्वा तमब्रवीत्.
'पुरा दत्तं मह्यमन्नं तदन्यस्मै कथं त्वया; ४५७

अद्य पर्वण्यर्क म त्तुमागतोऽन्यः सुरेश्वर!
आरुह्यैरावतं शक्रस्तच्छ्रुत्वागाद्यतो रविः. ४५८

अथ राहुं कृत ज वं शक्रात्पूर्वं समागतम्
उत्पपात फलं मत्वा तं गृहीतुमयं शिशुः. ४५९

त्रस्तस्य तस्याभ य दः परावृत्तस्य वज्रभृत्
बभूवाभिमुखः शक्रस्तदैनं रघुनंदन! ४६०

फलबुद्ध्या हस्ति रा जं तमादातुमयं यदा
अभिदुद्राव वज्रेण हरिरेनमताडयत्. ४६१

ततः पपातैव म हत्यचलेऽयं रघूत्तम!

पतमानस्य चैतस्य वामा हनुरभज्यत. ४६२

तदवस्थे तनु ज नौ पतिते वज्रताडिते
चुक्रोधेंद्राय पवनः प्रजानामहिताय सः. ४६३

प्रचारं स तु सं य स्य प्रजास्वंतर्गतं प्रभुः
गुहां प्रविष्टः स्वसुतं शिशुमादाय मारुतः. ४६४

रुरोध भूतानि ज गत्प्राणः सर्वाणि रोषितः
विण्मूत्राशयमावृत्य प्रजानां परमार्तिकृत्. ४६५

ततः प्रजा देव य क्षगंधर्वासुरमानुषाः
प्रोचुः प्रजापतिं देवं 'दुःखं नो नुद दुःखहन्!' ४६६

तद्दुःखपरिहा रा य प्रजानां स प्रजापतिः
वायोः समीपमागत्य शिशुं पस्पर्श पाणिना. ४६७

स्पृष्टमात्रः स क म लप्रभवेण महात्मना
जलसिक्तं यथा सस्यं पुनर्जीवितमाप्तवान्, ४६८

चचार पवनः श्री मान् यथापूर्वं शरीरिषु
मरुद्रोधाद्विनिर्मुक्ता अभवन्मुदिताः प्रजाः ४६९

अथोवाच सुरा रा ध्यः सुरान्सर्वान् हितं वचः,
'अनेन शिशुना कार्यं कर्तव्यं वो भविष्यति. ४७०

वरान् ददध्वम म रा मारुतस्यास्य तुष्टये.'
स्वर्णपद्ममयीं मालां दत्त्वोवाच शतक्रतुः ४७१

'मारुतायं काय ज स्ते वज्रावध्यो भविष्यति
हनुर्हता ततो नाम्ना भविता हनुमानिति.' ४७२

सूर्यश्चाह, 'मदी य स्य तेजसः शतिकां कलाम्
ददामि शास्त्राण्यप्यस्मै दास्यामि समये स्वयम्.'

वरुणोऽप्याह वा रा वा मत्पाशैर्वास्य मारुतेः
वर्षायुतशतैर्मृत्युर्न भविष्यति सर्वथा. ४७४

प्रीत्योवाचाथो य म श्च, 'मम दंडादवध्यता
अनामयत्वं संग्रामेऽप्यविषादः सदास्त्वि'ति. ४७५

मद्देयं मामिका ज न्ये नैनं जातु वधिष्यति
इत्येवं वरदः प्राह श्रीदस्त्यक्षसखः प्रभुः. ४७६
'अवध्योऽयं मदी य स्य शस्त्रास्त्रस्य भविष्यति'
इत्येवं शंकरेणापि दत्तोऽस्य परमो वरः. ४७७
विश्वकर्माप्याह, ज गत्प्राणपुत्रो मदायुधैः
अवध्यत्वमयं प्राप्तश्चिरंजीवी भविष्यति.' ४७८
ब्रह्माह, 'शत्रुभ य दो मित्राणामभयंकरः
अजेयो भविता पुत्रस्तव मारुत! मारुतिः.' ४७९
कामरूपः समी रा यं सुतः कामगतिस्तव
रोमहर्षकराण्येव कर्ता कर्माणि संयुगे. ४८०
प्रीतिं संपाद्य रा म स्य रावणारेर्महात्मनः
साहाय्यमतुलं कृत्वा कीर्तिमान् प्रभविष्यति. ४८१
इत्युक्त्वा वरदः श्री मान् ब्रह्मामंत्र्य समीरणम्
जगाम त्रिदशैः सार्धं सत्यलोकमृषिस्तुतः. ४८२
पुत्रं केसारिदा रा णां गृहं नीत्वा स मारुतः
वरदानं समाख्याय तानापृच्छय विनिर्गतः.' ४८३
प्राप्तातिवरसा म र्थ्ये आश्रमेषु तपस्विनाम्
अग्निहोत्राणि पात्राणि वल्कलानि व्यनाशयत्. ४८४
पीडिताः शांतिभा ज स्ते वरज्ञानातिमन्यवः
शेपुरेनं 'नात्मबलं वेत्तासि स्वयमित्यलम्. ४८५
कीर्तिस्तवान्येन य दा भावित्री स्मारिता पुनः
तदांजनेय! नचिराद्बलवृद्धिर्भविष्यति.' ४८६
एवं शप्तः साप रा धो हततेजा मरुत्सुतः
मृदुभावं गतो राम! स्वबले जातसंशयः. ४८७
शापात्त तस्मिन्स म ये वेदायं बलमात्मनः
वालिसुग्रीवयोर्वैरं यदा राम! समुत्थितम्. ४८८
गुणाधिकः कोऽपि ज नो मारुते रघुराज! नो

असौ व्याकरणादीनि शास्त्राण्यर्कात्समग्रहीत्. ४८९

जगामाद्रेरुद य तो ह्ययमस्तगिरिं तदा
सूर्योन्मुखः पृष्ठगामी सादरो रचितांजलिः. ४९०

अस्य वायोस्तनू ज स्य प्रलयांभोनिधेरिव
कः स्थास्यत्यंतकस्येव पुरस्ताद्रघुनंदन! ४९१

राघवैषोऽद्भुत ब शाः सुग्रीवप्रमुखा इमे
त्वत्कारणात्सुरैः सृष्टास्तारनीलनलांगदाः.' ४९२

अगस्त्यात्सानुजो रा मो वानरा राक्षसाश्च ते
श्रुत्वेत्थं मारुतेः कर्म विस्मयं परमं गताः. ४९३

अथोवाच प्राप्य म हं राघवं कुंभसंभवः
'दृष्टः संभावितश्चासि राम! गच्छामहे वयम्.' ४९४

तच्छ्रुत्वा प्रांजलिः श्री मान् महर्षीन् राघवोऽब्रवीत्,
'अद्य मे देवतास्तुष्टाः पितरश्च मुनीश्वराः. ४९५

दर्शनाद्भवतां रा ज्यं धन्यं पूतं कुलं श्रुतम्
विज्ञाप्यं मेऽस्ति तत्कार्यं भवद्भिरनुकंपया. ४९६

अहं करिष्यामि म न्यून् प्रभावाद्भवतां सताम्
भविष्यथ सदस्या मे ममानुग्रहकांक्षिणः.' ४९७

'एवमस्त्वि'ति ते ज ग्मुर्मुनयोऽनुनयोद्यताः
सूर्येंदुवह्निभिस्तुल्यरुचयः शुचयः सदा. ४९८

जनकं प्रभुरा य त्तः पूजयित्वा कृतांजलिः
मिथिलां प्रेषयामास दर्शनोत्कां चिरोषितम्. ४९९

जामातृ रघुवी रा यत्प्राप्तं रत्नादि तत्स्वयम्
सीतायै प्रददौ प्राज्यं प्रेम्णा दुहितृवत्सलः. ५००

युधाजितं प्रीत म ना रामः सत्कृत्य मातुलम्
प्राहिणोज्जयहृष्टात्मा स्वपुरं स ययौ मुदा. ५०१

अन्यानाप्तान्भूभु ज श्च साहाय्यं कर्तुमागतान्
स्वराष्ट्रं प्रेषयामास सत्कृत्य भरताहृतान्. ५०२

नृपाणां समुद्रा    य स्तं रामं त्यक्त्वा ततो व्रजन्
दुःखितोऽभूत्तथात्यंतं देही देहमिव त्यजन्. ५०३

यैः सहायैः प्राप    ज यं हत्वा रावणमाहवे
तेभ्यः कपिभ्यः प्रददौ रत्नाकल्पान् रघूत्तमः. ५०४

सुग्रीवस्य सहा    य त्वं कीर्तयित्वा पुनःपुनः
तस्मै ददौ महार्हाणि भूषणानि रघूद्वहः. ५०५

बिभीषणं यातु    रा जं तस्यामात्यांश्च राक्षसान्
प्रशस्य तेभ्यः प्रायच्छद्रत्नालंकारसंचयान्. ५०६

अथांकमारोप्य    म रुद्रालिपुत्रौ सुताविव
सुग्रीवमाह श्रीरामः 'सत्काराहार्विमौ सखे! ५०७

मंत्रे युक्तौ तव श्री मन्! ममापि च हिते रतौ
एतौ त्वया मयाप्यंग! पूजनीयौ कपीश्वर!' ५०८

इत्युक्त्वा स्वशरी रा त्स व्यवमुच्यातिवत्सलः
भूषणानि महार्हाणि तदांगदहनूमतोः ५०९

बबंधांगेषु स    म लंचक्रे नक्रेभतारकः
बहून्मासान् दत्तमहान् वासयामास सन्निधौ. ५१०

अथ काकुत्स्थरा    ज स्तं सुग्रीवं सबिभीषणम्
जाम्बवत्प्रमुखान् सर्वान्यूथपानिदमब्रवीत्. ५११

'यूयं मे सुहृदो    य त्नाद्भवद्भिरहमुद्धृतः
धन्यो राजा सुकंठोऽयं धन्योऽयं च बिभीषणः. ५१२

धन्या यूयं शरी रा न्मे प्राणेभ्यो वसुतः प्रियाः
ह्रिया स्वर्गद्रुमा व्याप्ता श्रुत्वा युष्मदुपक्रियाः. ५१३

सौम्य! सुग्रीव धा म त्वं किष्किंधायामलंकुरु
भुंक्ष्व निष्कंटकं राज्यं प्राज्यं सुखमवाप्नुहि. ५१४

बिभीषण सखे!ऽ ज स्त्वं लंकायां वस हर्षितः
स्मर्तव्योऽहं त्वया प्रीत्या गच्छ त्वं विगतज्वरः.' ५१५

श्रुत्वा वाक्यं सत्प्रि य स्य रामस्यर्क्षाश्च वानराः,

'साधु साध्वि'ति तं सर्वे प्रशशंसुः पुनःपुनः. ५१६
'तव बुद्धिर्वरा ज कुकन्येव त्रिजगद्धिता
माधुर्यं परमं राम! भवतो वचसि स्थितम्. ५१७
त्वं संश्रितानां श्रे य स्कृत् वीर्यमत्यद्भुतं तव'
तेष्वित्यादि ब्रुवाणेषु हनूमान् प्रणतोऽब्रवीत्. ५१८
'स्नेहो मे परमो रा जंस्त्वयि तिष्ठतु नित्यदा
भक्तिश्च नियता वीर! भावो नान्यत्र गच्छतु. ५१९
यावद्रामकथा म ह्यां चरिष्यति तवाद्भुता
तावच्छरीरे वत्स्यंतु[1] प्राणा मम न संशयः. ५२०
यच्च तच्चरितं श्री मन् कथां ते रघुनंदन!
तन्ममाप्सरसो राम! श्रावयेयुर्नरर्षभ!' ५२१
तच्छ्रुत्वा'हमुदा रा ख्य! तव चर्यामृतं प्रभो!
उत्कंठां प्रहरिष्यामि मेघलेखामिवा[2]निलः.' ५२२
एवं ब्रुवाणं रा म स्तु हनूमंतं वरासनात्
उत्थाय सस्वजे स्नेहाद्वाक्यमेतदुवाच च. ५२३
'एवमेतद्वायु ज! भो! भविता नात्र संशयः
चरिष्यति कथा यावदेषा लोकेषु मामिका. ५२४
तावद्भविष्यति य शस्तव देहेऽसवस्तथा
लोका हि यावत्स्थास्यंति तावत्स्थास्यंति मे कथाः.५२५
शेषस्येहोपका रा णां भवाम ऋणिनो वयम्
एकैकस्योपकारस्य प्राणान् दास्यामि ते कपे! ५२६
तज्जीर्णतां यातु म यि यत्त्वयोपकृतं कपे!
नरः प्रत्युपकाराणामापत्स्वायाति पात्रताम्.' ५२७
तस्यांजनातनू ज स्य मौक्तिकं हारमात्मनः
उत्तार्य कंठे श्रीरामो बबंध स्वयमादरात्. ५२८
मायामानुषका य स्य नत्वा पादौ पुनःपुनः

---

१. वत्सतु. २. हस्तदोषः—अनलः

जग्मुः स्वं स्वं गृहं रक्षः कपयः साश्रुलोचनाः. ५२९
विमानो राजरा ज स्य निदेशात्पुनरागतः
स राममाह, 'राजेंद्र ! शृणु विज्ञापनां मम. ५३०
मामाह स प्रभो ! य क्षस्वामी पुष्पक ! रावणम्
हत्वा त्वं निर्जितस्तस्मात्तमेव वह राघवम्. ५३१
प्रीतिर्मे परमा रा तौ हते तस्मिन् दशानने
कामो ममैष स्वीकारः कर्तव्यः प्रभुणा तव. ५३२
गच्छ रामं वह म नाक् नास्ति कश्चिद्व्यतिक्रमः
अहमाज्ञापयामि त्वां प्रभुसन्निहितो भव.' ५३३
'एवमाज्ञामहं श्री दात्प्राप्याद्य त्वामुपस्थितः
भो राम ! परमात्मंस्त्वं निर्विशंकः प्रतीच्छ माम्. ५३४
पूजयित्वा पुण्य रा शी रामः प्रीत्या तमब्रवीत्,
'गच्छ श्रीदांतिकं सौम्य ! त्वमागच्छ स्मृतो यदा.' ५३५
बत्वा चकार ग म नं तमनंतयशःप्रदम्
तत्पुष्पकं यक्षराजसमीपमवसत् पुनः. ५३६
ततोऽतिभद्रं प्र ज या प्राप्तं राज्ये तव प्रभो !
इत्येवं भरतः प्राह रामं राजशतोत्तमम्. ५३७
सर्वप्रजानां प्रि य कृद्राघवः सीतया सह
नंदनप्रतिमाशोकवनेऽथ विजहार सः. ५३८
अथ गर्भवती रा ज्ञी बभूव जनकात्मजा
तामाह रामः 'कामस्ते देवि ! कः क्रियतामि'ति. ५३९
स्मितं कृत्वा सुता म ह्याः सा श्रीरामं तदाब्रवीत्,
'तपोवनानि पुण्यानि द्रष्टुमिच्छामि राघव ! ५४०
कामोऽयमेव रा ज न् ! मे फलमूलाशिनां सताम्
अप्येकरात्रिं काकुत्स्थ ! निवसेयं तपोवने.' ५४१
वदान्यकोटिगे य स्तां सीतामाह प्रियः प्रियाम्,
'विश्रब्धा भव वैदेहि ! श्वो गमिष्यस्यसंशयम्.' ५४२

भद्रं दूतं सर्वे   ज नप्रवृत्तिज्ञं रघूत्तमः
पप्रच्छ, 'काः कथा भद्र! नगरे विषये च नः. ५४३

मदाश्रितानि न्या य ज्ञ! कानि सीताश्रितान्यपि
वाक्यान्याहुर्जना ब्रूहि, मा शंकां कुरु चेतसि. ५४४

वदंति खलु पौ राः किं किं वा जानपदा जनाः
अनुजान् वापि मे शूरान् कैकेयीं मातरं स्पश[1]! ५४५

वक्तव्यतां वं[2] रा म ह्या वने राज्ये व्रजंति हि
श्रुत्वेदानीं शुभं कुर्यां न कुर्यामशुभान्यहम्' ५४६

उवाच स स्पशः, श्री मन्! कथयंति शुभाशुभम्
दुष्करं कृतवान् रामः समुद्रे सेतुबंधनम्. ५४७

वशं नीता वान रा श्च दुर्धर्षो रावणो हतः.
दुराचारेण चौर्येण दशकंठेन या हृता. ५४८

तामाहृत्य महा म र्षं विस्मृत्य, जनकात्मजाम्
गृहमानीतवान् रामः कथं नायं जुगुप्सते. ५४९

अस्माकं स्त्रीष्वप्य ज स्रं सहनीयं भविष्यति
यथा हि कुरुते राजा वर्तते तमनु प्रजाः. ५५०

एवं रघूत्तम!   य थाप्रज्ञं बहुविधा गिरः
वदंति नगरे राष्ट्रे सर्वत्रोच्छृंखला जनाः.' ५५१

श्रुत्वा दूतवचो रा जा राघवः परमार्तवत्
उवाच, 'सुहृदस्तत्त्वं भवंतोऽपि वदंत्विति.' ५५२

सर्वेऽपि शिरसा म ह्यामभिवाद्य नताननाः
प्रत्यूचू राघवं दीन'मेवमेतन्न संशयः.' ५५३

विसर्जयामास ज गन्नाथस्तान्सुहृदस्ततः
अनुजांस्तूर्णमानाय्य न्याय्यमाह कृतांजलीन्. ५५४

'सीता प्रिया मे प्र य ता दिव्योत्तीर्णा कुलोद्भवा
तथापि पौरास्तां मां च निंदंतीति मया श्रुतम्. ५५५

---

१. स्पशः गुप्तश्चारः २. मह्याः वराः (महीपतयः).

अप्यहं जीवितं ज ह्यां युष्मान् वा पुरुषर्षभाः
अपवादभयाद्भीतः किं पुनर्जनकात्मजाम्. ५५६

अहमिक्ष्वाकन्व य जः, कीर्त्यर्थं जीव्यते बुधैः
श्वस्त्वं लक्ष्मण! वाल्मीकेराश्रमे त्यज जानकीम्. ५५७

प्रत्याख्यानं त्वया रा ज्ञो न कर्तव्यं विजानता
अप्रीतिर्मे परा वत्स! कार्येऽस्मिन्प्रतिवारिते. ५५८

पूर्वमुक्तोऽस्मि सु म ते!ऽनयाहं तापसाश्रमान्
पश्येयमिति तस्याश्च कामोऽनुष्ठीयतामयम्.' ५५९

एवमुक्त्वाथ स श्री मान् बाष्पेणापिहिताननः
तान्विसृज्यानुजान्त्साश्रून्प्रविवेश स्वमंदिरम्. ५६०

शापितास्तेन धी रा स्ते पादाभ्यां जीवितेन च
नोचुः किंचन शोकार्ताः केवलं रुरुदुस्तदा. ५६१

धर्मन्यायस्थिर म तिर्लक्ष्मणः[1] स्वप्रजावतीम्
प्रातः प्रोवाच, 'मातस्त्वामहं नेतुं तपोवनम्. ५६२

आज्ञया रघुरा ज स्य प्राप्तोऽस्म्येष रथस्तव.'
तच्छ्रुत्वा मुदिता देवी बभूव जनकात्मजा. ५६३

वस्त्राणि रत्नानि य यावादायारुह्य तं रथम्
पथि दृष्ट्वा निमित्तानि सीता चिंतान्विताभवत्. ५६४

अब्रवीच्च तदा रा ज्ञी लक्ष्मणं विहितांजलिम्,
'अशुभानि बहून्येव पश्यामि रघुनंदन! ५६५

मनोऽस्वस्थं किं नु म म स्फुरत्यक्ष्यथ दक्षिणम्
औत्सुक्यमधृतिश्चापि गात्रोत्कंपश्च जायते. ५६६

पश्यामि भूमिं वि ज नामिवाद्य पृथुलोचन!
अपि स्वस्ति भवेत्तस्य भ्रातुस्ते भ्रातृवत्सल! ५६७

श्वश्रूणां चैव मे य श्च सुहृद्वर्गोऽत्र वर्तते
अपि सर्वस्य कुशलं जनस्य पुरवासिनः.' ५६८

---

१. आत्मनो भ्रातृजायां सीतामित्यर्थः.

इति प्रांजलिरा　ज न्मशुद्धाचारा महाव्रता
　　सर्वेषां कुशलार्थं सा देवता अभ्ययाचत. ५६९
कृतांजलिस्तां प्र　य तो नत्वा सौमित्रिरात्मवान्
　　शिवमित्यब्रवीद्धृष्टो हृदयेन विशुष्यता. ५७०
सा गौतम्यास्तटे　रा मा रामारामावसन्निशाम्[1]
　　सुमंत्रयोजितरथे प्रातः संस्थाप्य मैथिलीम् ५७१
ययौ सौमित्रिर　म रत्नवर्तीं विश्ववंदिताम्
　　निरीक्ष्य तामथो दीनः प्ररुरोद महास्वनः. ५७२
तमुवाच ततः　श्री मद्रामस्य महिषी प्रिया,
　　'स्वस्थो भव महाबुद्धे ! किमर्थं रुद्यते त्वया ? ५७३
हर्षस्य काले वी　रा द्य विषादयासि मां कुतः ?
　　कच्चिद्विनाकृतस्तेन द्विरात्रं शोकमागतः. ५७४
प्रियो ममापि सु　म ते ! राघवो जीवितादपि
　　न चाहमेवं शोचामि मैवं त्वं बालिशो भव. ५७५
तारयस्वाशु मां　ज ह्नुकन्यां दर्शय तापसान्
　　ततो मुनिभ्यो वासांसि ददाम्याभरणानि च. ५७६
महर्षीणां वीर !　य था योग्यं कृत्वाभिवादनम्
　　तत्र चैकां निशामुष्य यास्यामस्तां पुरीं पुनः. ५७७
द्रष्टुं रामं पुष्क　रा क्षं ममापि त्वरते मनः.'
　　लक्ष्मणस्तद्वचः श्रुत्वा प्रमृज्य नयने शुभे ५७८
आरुरोह तरिं　म न्युमांस्तामारोप्य मैथिलीम्
　　सुमंत्र स्थीयतामाह प्रयाहीति च नाविकम्. ५७९
गंगातटं प्राप्य　ज वात्प्रांजलिं प्राह जानकीम्,
　　'मातर्मे हृदये शल्यं महदेतत्सुदुःसहम्. ५८०
कर्मण्यस्मिन्यो ज　य ता निंद्योऽहं प्रभुणा कृतः
　　अकार्यं कुर्वतो मातः ! श्रेयो मरणमद्य मे. ५८१

---

१. रामः आराम इव यस्याः सा.

प्रसीद त्वं सह ज या दययाढ्यासि शोभने !
न मेऽघमर्हसि ज्ञातुं भो मातः ! परवानहम्.' ५८२
इति प्रांजलिरा य त्तो निपपात क्षितौ रुदन्
तं सीतोवाच, 'किमिदं नावगच्छामि लक्ष्मण ! ५८३
ब्रूहि त्वं तत्वतो रा ज्ञा शापितोऽसि मयानघ
श्रोतुमिच्छामि हृच्छल्यमहमाज्ञापयामि ते.' ५८४
एवमुक्तः खिन्न म नाः प्राह प्रांजलिरीश्वरीम्,
'देवि ! पौरापवादेन त्यक्तासि प्रभुणा वने. ५८५
वक्तुं शक्यो न स श्री मत्यपवादस्तवाग्रतः
पितुः सखा मे वाल्मीकिर्वसत्यत्राश्रमे प्रभुः. ५८६
पादच्छायां तपो रा शेरुपागम्यास्य सन्मुनेः
उपवासपरैकाग्रा वस त्वं जनकात्मजे ! ५८७
व्रतमास्थाय वि म लं रामं कृत्वा सदा हृदि
श्रेयस्ते परमं देवि ! तथा कृत्वा भविष्यति.' ५८८
श्रुत्वा जनकरा ज स्य सुता तद्देवरोदितम्
परं विषादमागम्य निपपात धरातले. ५८९
संज्ञामवाप्य प्र य ता विललाप भृशं तदा,
'धात्रा मम तनुर्नूनं सृष्टा दुःखाय लक्ष्मण ! ५९०
यस्यास्तथा दुःख रा शिर्दारुणोऽध प्रदृश्यते
याहं शुद्धसमाचारा त्यक्ता नृपतिना सती. ५९१
पापं कृतं किंनु म हत्को वा दारैर्वियोजितः
किन्नु वक्ष्यामि मुनिषु कर्म त्यागोचितं कृतम्. ५९२
न खल्वद्यैवाम्र ज ले जाह्नव्या जीवितं निजम्
त्यजेयं, राजवंशो मे भर्तुर्मयि रघूत्तम ! ५९३
आज्ञां कर्तुं साधु य त त्यज मां दुःखभागिनीम्
श्वश्रूणां चरणौ नत्वा कुशलं ब्रूहि पार्थिवम्. ५९४
वक्तव्यश्च स रा ज न्यश्रेष्ठो भर्ता महायशाः

अपवादभयात्त्यक्ता त्वयाहमुचितं कृतम्. ५९५

सद्वृत्तिर्भ्रातृषु य था पौरेष्वपि तथास्तु ते
स्वदेहं नानुशोचामि देवो बंधुर्गुरुः पतिः. ५९६

प्राणैरपि प्रियं रा जन्! भर्तुः कार्यं स्त्रिया सदा
तस्मादहं न शोचामि सुयशास्त्वं सुखी भव. ५९७

इति मद्वचसा म ह्या वक्तव्यः स पतिस्त्वया
निरीक्ष्य[1] माद्य गच्छ त्वमृतुकालातिवर्तिनीम्.' ५९८

शोकम्लानमुख श्री कः शिरसा स्पृश्य मेदिनीम्
प्रदक्षिणं च तां कृत्वा व्याहर्तुं न शशाक सः. ५९९

ध्यात्वा मुहूर्तं तां रा ज्ञीमाह रामानुजो रुदन्,
'किं मां निरीक्ष्य गच्छेति त्वं वदस्यद्य शोभने! ६००

रूपं दृष्टं नहि म या पदौ दृष्टौ तवानघे!
कथं त्वामद्य पश्यामि रामेण रहितां वने?' ६०१

इत्युक्त्वा तामग्र ज स्य प्रियां नत्वा रुदन् पुनः
नावा गंगां समुत्तीर्य रथमध्यारुहद्द्रुतम्. ६०२

शोकाकुलः स प्र य यावनाथामिव तां सतीम्
परतीरस्थितां दृष्ट्वा परावृत्य मुहुर्मुहुः. ६०३

दृष्ट्वा मुनिकुमा रा स्तां रुदतीं जानकीं वने
प्राद्रवन् यत्र भगवान् वाल्मीकिस्तपसांनिधिः. ६०४

ते कृत्वैवाशु न म नं मुनिपुत्रा महर्षये
सर्वे निवेदयामासुस्तास्तु रुदितस्वनम्. ६०५

'भगवन्! मुनिरा ज स्त्री कस्याप्येषा महात्मनः
श्रीरिवादृष्टपूर्वात्र विरौति त्राहि पश्य ताम्.' ६०६

स ज्ञात्वा ज्ञानन य नः प्राद्रवद्यत्र मैथिली
अर्घ्यमादाय रुचिरं जान्हवीतीरमागमत्. ६०७

दृष्ट्वा सीतां स द्वि ज न्मश्रेष्ठो वाल्मीकिरब्रवीत्,

---

१. अद्य त्वं मां ऋतुकालातिवर्तिनीं गर्भवर्तीं निरीक्ष्य विचार्य मा गच्छ.

'स्नुषा दशरथस्य त्वं रामस्य महिषी प्रिया. ६०८
जनकस्यात्मजा य त्नाद्द्रष्टव्या सत्यधीश्वरी.
वत्से! जानकि! धर्मज्ञे! स्वागतं ते पतिव्रते!' ६०९
तां सीतां शोकभा रा र्तां वाल्मीकिर्मुनिपुंगवः
उवाच मधुरां वाणीं ह्लादयन्निव तेजसा. ६१०
'वृत्तं तवैतत्सु म ते! विदितं मम तत्वतः
सर्वं च दिव्यज्ञानेन त्रैलोक्ये यद्धि वर्तते. ६११
मुनिपत्न्योऽत्र सु श्री काः सुव्रतास्तपसि स्थिताः
तास्त्वां वत्से! यथा वत्सं पालयिष्यंति नित्यशः. ६१२
त्वामपापां वेद्मि रा ज्ञि! ध्यानलब्धेन चक्षुषा
विश्रब्धा भव वत्से! मे समीपे निवसिष्यसि.' ६१३
वचस्तदाकर्ण्य म हं प्राप्ता परममद्भुतम्
सीता नत्वा मुनेः पादौ तथेत्याह कृतांजलिः. ६१४
सीता प्रयांतं द्वि ज पं प्रांजलिः पृष्ठतोऽन्वगात्
तापस्यस्तं नमश्चक्रुस्ताः स वाल्मीकिरब्रवीत्. ६१५
'राजा दशरथो य ज्वा स्नुषेयं तस्य सुव्रता
रामस्य महिषी सीता जनकस्यात्मजा सती. ६१६
इयं त्यक्ता सती रा ज्ञा परिपाल्या मया सदा
इमां भवत्यः पश्यंतु स्नेहेन वचनान्मम.' ६१७
मुहुर्मुहुः प्राज्य म हास्तां ताभ्यः परिदाय सः
स्वमाश्रमं शिष्यवृतः पुनरायान्महातपाः. ६१८
उदक्कूले स्थितो ज ह्नुकन्याया मुनिना सतीम्
दृष्ट्वा प्रवेशितां भव्ये स्वाश्रमे लक्ष्मणस्तदा. ६१९
अब्रवीत्तप्तका य स्तं सुमंत्रं मंत्रसारथिम्,
सीतावियोगजं तापं पश्य रामस्य सारथे! ६२०
यो हि देवान्सभु ज गान् गंधर्वासुरराक्षसान्
निहन्याद्राघवः क्रुद्धः स दैवं पर्युपास्ते. ६२१

हंतास्मिन्कर्मणि य ज्ञोनाशके समनुष्ठिते
प्राप्तः सुमंत्र! रामेण को नु धर्मपरिग्रहः?' ६२२
सुमंत्रः प्राह तं रा मानुजं शोकाकुलं भृशम्,
'न संतापस्त्वया कार्यो दृष्टमेतत्पुरातनैः. ६२३
भृगुशापफलं म न्ये प्राप्तं रामेण विष्णुना
तस्य पत्नी हतानेन यत्पुराभयदा द्विषाम्. ६२४
वसिष्ठस्याश्रमे श्री मान् दुर्वासा मम सन्निधौ
पुरा दशरथायैतत्कथयामास लक्ष्मण! ६२५
त्वयापि विरहं रा जा प्राप्स्यत्येतत्कथंचन
भरते नैव वक्तव्यं शत्रुघ्नेऽपि च लक्ष्मण! ६२६
भृगुशापादयं म र्त्यलोके जन्माप्तवान् प्रभुः
रहस्यं कथितं तुभ्यं सीतात्यागार्तिभेषजम्. ६२७
नृलोके चक्रिणो ज न्म जातं हंतुं दशाननम्.'
इति श्रुत्वाथ सौमित्रिस्तामयोध्यां जगाम सः. ६२८
ततस्तस्योरुगा[1] य स्य साश्रुनेत्रस्य लक्ष्मणः
जग्राह चरणौ, पश्चाद्वाक्यमेतदुवाच सः. ६२९
त्यक्त्वा देवीं त्वद्गि रा हं वाल्मीकेराश्रमे शुभे
पुनरप्यागतो वीर! पादमूलमुपासितुम्. ६३०
मा शुचः संस्कृत म ते! कालस्य गतिरीदृशी
त्वद्विधा न हि शोचंति बुद्धिमंतो मनस्विनः. ६३१
यदर्थं मैथिल ज निस्त्यक्ता शोकं न मुंचतः
सोऽपवादः पुरे राजन्! भविष्यति न संशयः.' ६३२
तमाह रामो, 'नि य तं हितमुक्तं त्वयानघ!
मया सीतावियोगोत्थः स्वसंतापो निराकृतः. ६३३
राजकार्यं मया ज ग्नं कर्तव्यं तदकुर्वतः
निष्फला मम सौमित्रे! चत्वारो दिवसा गताः. ६३४

---

१. उरु गायं (कीर्तिः) यस्य सः, तस्य.

पौरकार्याणि यो य त्तो न करोति दिने दिने
संवृते नरके घोरे पतितः स भवेत् ध्रुवम्. ६३५

नृगेण हि पुरा रा ज्ञा कोटीः स्पर्शयता गवाम्
गौः संगादागतान्यस्य दत्तान्यस्मै द्विजन्मने. ६३६

विवदंतौ तौ स म न्यू गोः स्वामिग्राहकावुभौ
नृगद्वारि स्थितौ प्राप्तौ न प्रवेशं चिरं द्विजौ. ६३७

ताभ्यां शप्तो रुषा श्री मान् कृकलासो भवेति सः
निर्दिष्टो यादवः कृष्ण उद्धर्ता विष्णुरीश्वरः. ६३८

अद्यापि शापं तं रा जा भुंक्ते वत्स! सुदारुणम्
कार्यार्थिनां विमर्दो हि राज्ञां दोषाय कल्पते. ६३९

इक्ष्वाकुतनयो म ह्याः पतिर्निमिरुदारधीः
वसिष्ठेन पुरा शप्तो निमिनापि स लक्ष्मण! ६४०

मित्रावरुणते ज स्त्वमाविशेति चतुर्मुखः
वसिष्ठमुक्तवान् देवो विदेहः स तथाकरोत्. ६४१

उर्वशीहेतुतो य स्तु मित्रावरुणतेजसा
पूर्णः कुंभस्ततो जातो वसिष्ठोऽगस्त्य एव च. ६४२

प्रतीक्षा न कृता रा ज्ञा सत्रे यस्मात्पुरोधसः
तेनापराधेन निमिः शप्तस्तेन महात्मना. ६४३

स निमिः साधुर म रान्प्रोवाच वरदांस्तदा,
'नेत्रेषु सर्वभूतानां वसेयं सुरसत्तमाः. ६४४

तदुक्तमेवम ज राः श्रुत्वोचुस्तं निमिं नृपम्,
'नेत्रेषु सर्वभूतानां वायुभूतश्चरिष्यसि. ६४५

मथितस्तस्य का य स्तैस्तत्संतानार्थिभिर्द्विजैः
अरण्यां मथ्यमानायां प्रादुर्भूतो महातपाः. ६४६

नाम्ना मिथिः स रा ज न्यो मथनाद्रघुनंदन!
जननाज्जनको जातो वैदेहो यद्विदेहजः ६४७

ययातिर्न समो य स्माद्देवयान्यां स भूपतिः

शप्तः शुक्रेण सौमित्रे! जरां प्राप सुदुःसहाम्. ६४८

एवं रामो सहु रा पः कथयामास सत्कथाः
श्वोलूकयोरप्यहरन्न्यायकर्ता मनोव्यथाः. ६४९

अथागता भये म ग्ना मुनयो यमुनाश्रिताः
संपूज्य रामस्तान्कार्यं प्रपच्छ प्रांजलिः प्रभुः. ६५०

विप्राः प्रोचु‘र्मधुः श्री मान् दैत्यो भक्तोऽबिकापतेः
शूलं शूलाद्विनिष्कृष्य तस्मै दत्तं स्मरारिणा. ६५१

तत्पुत्रो लवणो रा जन्! बाधते शूलतेजसा,
तं शूलरहितं हत्वा ब्राह्मणांस्त्रातुमर्हसि. ६५२

अभिषिच्यात्मसा म र्थं शत्रुघ्नं तैर्द्विजैः सह
राघवः प्रेषयामास लवणं हंतुमोजसा. ६५३

रामादमोघम ज तः संभूतं शरमद्भुतम्
प्राप्य प्रणम्य तं प्रायाच्छत्रुघ्नः सेनया वृतः. ६५४

पुण्यकीर्तिराल य स्य वाल्मीकेराश्रमेऽवसत्
तत्र कल्माषपादस्य स मुनेरशृणोत्कथाम्. ६५५

यस्यां स राघवो रा त्रौ पर्णशालां समाविशत्
तस्यां सीताप्यर्धरात्रे प्रसूता दारकद्वयम्. ६५६

प्रसूतौ पुण्यस म ये बालचंद्रसमप्रभौ
दृष्टौ वाल्मीकिना प्रीत्या मार्जितौ तौ कुशैर्लवैः. ६५७

वाल्मीकिर्द्विजरा ज स्तं कुश इत्याह यः कुशैः
पुत्रः संमार्जितो ज्येष्ठो लवं च प्रोक्षितं लवैः. ६५८

अर्धरात्रे सोऽन्व य स्य वृद्धिं श्रुत्वा प्रभोर्मुदा
पर्णशालां ततो गत्वा मातर्दिष्ट्येति चाब्रवीत्. ६५९

प्रजावत्याः पुत्र ज न्मप्रहृष्टो लक्ष्मणानुजः
मुनिं प्रांजलिरामंत्र्य प्रययौ यमुनातटम्. ६६०

इक्ष्वाकोरन्ववा य स्य भूषणं यो महायशाः
स मांधाता हतोऽनेव लवणेन दुरात्मना. ६६१

इति शुश्राव सू रा त्मप्रभवायास्तटे मुनेः
च्यवनात्स सुमित्राया नंदनो विस्तरात्कथाम्. ६६२

ततः प्रभाते स म धोर्निर्गतः स्वपुरात्सुतः
भक्ष्यमाहर्तुमटवीं गतो दूरं महाबलः. ६६३

ज्ञात्वा तदैव स श्री मान् गृहीतवरकार्मुकः
उत्तीर्य यमुनां तूर्णं तस्थौ द्वारि मधोः पुरः. ६६४

प्राप्तेऽर्धे दिवसे रा त्स क्रूरकर्मा मधोः सुतः
आगच्छद्बहुसाहस्रं प्राणिनां भारमुद्वहन्. ६६५

ददर्श लवणो म द्यमांसमत्तः स राघवम्
तमाह, 'किमनेन त्वमायुधेन करिष्यसि?' ६६६

ईदृशानां मया ज न्ये सायुधानां नराधम!
भक्षितानि सहस्राणि कालेनानुगतो ह्यसि.' ६६७

श्रुत्वा वचो निर्भ य स्य हसतश्च मुहुर्मुहुः
शत्रुघ्नः कुपितः प्राह भ्राता रामस्य धीमतः. ६६८

'शत्रुघ्नोऽहं भूसु रा रे! वधाकांक्षी तवागतः
द्वंद्वयुद्धं देहि मत्तो न त्वं जीवन् गमिष्यसि.' ६६९

तच्छ्रुत्वा लवणो म त्तस्तमाह प्रहसन्मुहुः
'दिष्ट्या प्राप्तोसि मंद! त्वं भ्राता मन्मातुलद्विषः[1].

जन्यकामस्य ते ज न्यमहं दास्यामि दुर्मते!
मुहूर्तं तिष्ठ तावत्त्वं यावदायुधमानये.' ६७१

तमाह राघवो य त्तः, 'क्व मे जीवन् गमिष्यसि
स्वयमेवागतः शत्रुर्न मोक्तव्यः कृतात्मना.' ६७२

तल्लक्ष्मणस्यानु ज स्य वचः श्रुत्वा स राक्षसः
क्रोधमाहारयत्तीव्रं 'तिष्ठ तिष्ठे'ति चाब्रवीत्. ६७३

तं ब्रुवाणं तथा य ज्ञद्विजघ्नं घोरदर्शनम
शत्रुघ्नो देवशत्रुघ्न इदं वचनमब्रवीत्. ६७४

---

१. मन्मातुलस्य रावणस्य शत्रोः रामस्य.

‘शत्रुघ्नो न तदाऽ रा ते जातो भूपा हता यदा
तदद्य मद्बाणहतो व्रज त्वं यमसादनम्. ६७५

सर्वे हृष्टा भूम्य म रास्त्वां मया निहतं रणे
पश्यंतु रक्षोपसद ! त्रिदशा इव रावणम्.’ ६७६

यदैवं प्राह स श्री मांश्चुक्षुभेऽतितरामरिः
चिक्षेप वृक्षांच्छत्रुघ्नः शरैस्तांच्छतधाच्छिनत्. ६७७

ततोऽन्[1]यागप्रहा रा त्स क्षतांगो मूर्च्छितोऽभवत्
तमवज्ञाय तु हतं शत्रुघ्नं भुवि पातितम्, ६७८

रक्षो लब्धांतर म पि न विवेश स्वमालयम्
नापि शूलं प्रजग्राह तान् भक्ष्यान्समुदाहरत्. ६७९

लब्धसंज्ञः स ते ज स्विप्रवरस्तं महाशरम्
वज्राननं वज्रवेगं जग्राहामोघमद्भुतम्. ६८०

तस्मिन् धृते प्रल य ज्ज्वलनप्रतिमे शरे
भीतान् सुरर्षीनभयं ददौ देवः पितामहः. ६८१

संधाय बाणं सा[2] रा ढ्यं विकृष्य धनुराश्रुति
शत्रुघ्नः स महातेजा मुमोच लवणोरसि. ६८२

सायकोऽतुलसा म र्थ्यो विदार्यारेरुरस्तदा
गत्वा रसातलं हस्तं पुनरेवागमद्द्रुतम्. ६८३

निर्भिन्नवक्षा र ज नीचरः स लवणः खलः
पपात सहसा भूमौ वज्राहत इवाचलः. ६८४

तच्छूलं तन्निल य तः समुत्पत्य महाप्रभम्
पश्यतां सर्वदेवानां रुद्रस्य वशमागमत्. ६८५

पूजितः प्राप्तवि ज यः शत्रुघ्नः स महर्षिभिः
शक्रादिभिश्च त्रिदशैर्लवणे दुर्जये हते. ६८६

सुरास्तमूचुः प्र य तं ‘वरं वरय सुव्रत !’
तान्प्रत्युवाच शत्रुघ्नो बद्धांजलिपुटस्तदा. ६८७

---

१. अन्यागस्य अन्यवृक्षस्य प्रहारात्. २. सारेण स्थिरांशेन आढ्यः.

'पुरीयं मधुरा[1] रा जधानीत्वं प्राप्नुयादिति'
वरयामास ते प्रीताः सर्वे प्रोचुस्तथास्त्विति. ६८८

ततो निवेश्य सु म ना राजधानीं मनोहराम्
जगाम द्वादशे वर्षे द्रष्टुं रामं चिरोषितः. ६८९

वाल्मीकेराश्रमे श्री मानवसत्तेन पूजितः
शुश्राव रामचरितं गायतोस्तत्कुमारयोः. ६९०

श्रुत्वा रामयशो रा गी विसंज्ञो बाष्पलोचनः
मुहूर्तमाश्रमभवद्विनिश्वस्य मुहुर्मुहुः. ६९१

आश्चर्ये सैनिका म ग्राः शत्रुघ्नमिदमब्रुवन्,
'अद्भुतं किमिदं राजन्! वाल्मीकिं पृच्छ तत्त्वतः.' ६९२

स तानाहाश्रमेऽ ज स्रं सत्याश्चर्याण्यनेकशः[2]
अद्भुतोऽर्थः परिप्रष्टुं न क्षमोऽस्माकमीदृशः.' ६९३

अलब्धनिद्रः प्र य तः प्रातर्नत्वा मुनीश्वरम्
अयोध्यामगमद्रामं नत्वाभूद्धर्षनिर्भरः. ६९४

स उषित्वा सप्त रा त्रमाज्ञप्तः प्रभुणा पुनः
जगाम मधुरां भव्यां राजधानीं मनोरमाम्. ६९५

ततः कदाचिद्वि म ना मृतमादाय बालकम्
वृद्धो जानपदो विप्रो राजद्वारमुपागमत्. ६९६

चक्रे विलापं स ज रन् पुत्रशोकाकुलो भृशम्,
'नाहं पापी मृतोऽसि त्वं बाल! दोषेण भूपतेः. ६९७

राम! बालं जीव य मे नो चेद्वार्यत्र निश्चितम्
सदारोऽहं मरिष्यामि ब्रह्महत्यां त्वमाप्नुहि. ६९८

न दृष्टो न श्रुतो ज न्मी मृतः कश्चन कुत्रचित्
तवैव राज्येऽभिनवं मयैतदनुभूयते.' ६९९

एवं पुत्रस्यात्यं[3] य तः शोकाक्रांतो द्विजोऽब्रवीत्
ततोप्यतितमां रामो दुःखं प्राप सतां गतिः. ७००

---

१. हस्तदोषः—मधुरां २. हस्तदोषः—अनेकसः ३. विनाशात्.

वसिष्ठं तपसां रा शिं वामदेवं च नारदम्
मार्कंडेयं मुनीनन्यान्प्रांजलिः प्राह राघवः. ७०१
'वृद्धो मृतात्मजो म प्रः शोके जानपदो द्विजः
रुद्ध्वा द्वारं स्थितः कार्यं भगवंतो मयाद्य किम्?'. ७०२
तच्छ्रुत्वा नारदः श्री मानुवाच, 'रघुनंदन!
मन्ये तप्यति शूद्रोऽद्य तेन बालवधो ह्ययम्. ७०३
तस्मात्स्वदेशं त्वं रा जन्! मृगयाघं[1] निवारय
भविष्यत्येव धर्मेण विप्रबालस्य जीवनम्.' ७०४
नारदस्यामृत म यं श्रुत्वा वाक्यं रघूत्तमः
प्रहर्षमतुलं लेभे लक्ष्मणं चेदमब्रवीत्. ७०५
'गच्छाभ्यर्णं[2] त्वं द्वि ज स्य समाश्वासय सौम्य! तम्
बालस्य च शरीरं तत्तैलद्रोण्यां निधापय.' ७०६
एवं संदिश्य तं य त्तमाज्ञासंपादनेऽनुजम्
मनसा पुष्पकं दध्यावागच्छेति महायशाः. ७०७
तद्विज्ञायेंगितं रा ज्ञः पुष्पको हेमभूषितः
आजगाम मुहूर्तेन समीपं सेवनादृतः. ७०८
सोऽब्रवीत्, 'प्रणतो म ह्या नाथा'यमहमाज्ञया
वश्यस्तव महाबाहो! किंकरः समुपस्थितः.' ७०९
नत्वा महर्षीन् रा ज र्षिर्विमानमधिरुह्य सः
प्रतीचीमुत्तरां पूर्वां विचिन्वन् दक्षिणां ययौ. ७१०
शैवलस्य सरो य त्नादपश्यत्पार्श्वे उत्तरे
विंध्यस्य दक्षिणे भागे स्वादर्शतलनिर्मलम्[3]. ७११
तत्र कौसल्यात्म ज निस्तप्यंतं सुमहत्तपः
ददर्श तापसं वृक्षे लंबमानमधोमुखम्. ७१२
तमाह, 'कृशका य स्त्वं धन्यस्तापस! सुव्रत!
कोऽसि जात्या कस्तपोऽर्थो ब्रूह्येतत्सत्यवाग्भव.' ७१३

---

१. अघं मृगय इति पदे. २. समीपम्. ३. सुतरां आदर्शतलवन्निर्मलम.

अब्रवीत्सोऽवाक्शि रा स्तं रामं सत्यपराक्रमम्,
'शूद्रः शंबूकनामाहं स्वर्गार्थं देव! मे तपः.' ७१४
तच्छ्रुत्वैवासिम म लं कोशान्निष्कृष्य दारुणम्
लंबमानस्य शूद्रस्य शिरश्चिच्छेद राघवः. ७१५
सेंद्रा देवास्तदा श्री शं शशंसुः साधु साध्विति
पुष्पवृष्टिमुचः प्रोचु'र्वरं वरय राघव!' ७१६
प्रोवाच प्रांजली रा जा, 'द्विजपुत्रः स जीवतु'
त ऊचुः, 'पतिते शूद्रे द्विजपुत्रः स उत्थितः. ७१७
अगस्त्यं प्रति या म स्त्वं द्रष्टुमागच्छ तं मुनिम्
तस्य दीक्षा समासाद्य वर्षं हि द्वादशं गतम्. ७१८
सदा स्थितोऽभूत्स ज ले द्रष्टव्यः सुमहातपाः'.
इत्युक्त्वा ते सुरा जग्मुर्द्रष्टुं रामोऽपि कुंभजम्. ७१९
दृष्ट्वा सुरास्तं प्र य युः स्वर्गं रामस्ततो गतः.
तं संपूज्य मुनिः प्रीत्या प्रशशंसासकृत्प्रभुम्. ७२०
'राम! त्वमसि ना[1] रा णामयनं धर्मपालकः
त्वया धर्मेण[2] विप्रस्य जीवनं प्रापितः सुतः. ७२१
उषित्वा रजनी म त्र श्वः पुरीं गंतुमर्हसि
इदं गृहाण वलयं निर्मितं विश्वकर्मणा. ७२२
तद्गृहीत्वा कुंभ ज स्य प्रियकृद्रघुनंदनः
पप्रच्छ, 'भवता प्राप्तं कुतो वा केन वाहृतम्.' ७२३
सोऽब्रवीदद्भुत य शाः 'शतयोजनविस्तृते
वनेऽपश्यं सरो राम! प्रसन्नं योजनायतम्. ७२४
रम्यं शवं च रा ज न्! मे दृष्ट्वाभूद्विस्मयो महान्
अथापश्यं व्योमयानं स्वर्गिणं तत्र भास्वरम्. ७२५
तं शवं पन्नन य नो भक्षयामास सोऽखिलम्

---

१. नराणां समूहो नारं तस्य यद्वा नाराणां गुणानां अयनं स्थानं गतिरिति यावत्. २. शूद्रहननरूपेण.

तमपृच्छमहं कस्त्वं देवसंकाश ईदृशः. ७२६

यथा नाथो निर्जे रा णां गंधर्वाप्सरसां मतः

आहारो गर्हितोऽतीव किमर्थं वक्तुमर्हसि.' ७२७

स प्रांजलिः प्राह 'म म ब्रह्मन्! वृत्तमिदं शृणु

वैदर्भः श्वेतनामाहं सुदेवो मत्पिता मुने! ७२८

आश्रमोऽयं मम श्री मन्नत्र तप्तं मया तपः

त्रीणि वर्षसहस्राणि ब्रह्मलोकमहं गतः. ७२९

क्षुत्तृट् च सत्तपो रा शे! पीडयामास तत्र माम्

सत्यलोके महापुण्ये क्षुत्पिपासाविवर्जिते. ७३०

ब्रह्माणमवदं म र्त्येमिव मां भगवन्! कुतः

क्षुत्तृट् च बाधतेऽत्रापि देवभूतं तपोबलात्. ७३१

ब्रूह्येतद्दयया ज त्वं पाकोऽयं कस्य कर्मणः

आहारः कश्च मेऽत्यंतं क्षुधितस्य जगत्पते!' ७३२

ब्रह्माह मां 'भक्ष य त्वं श्वेत! स्वकुव्यमन्वहम्

देहमेव निजं पुष्टं, न दत्तं किमपि त्वया. ७३३

देहस्तेऽभ्यवहा रा र्थं भविष्यति पुनःपुनः

गर्हितात्कर्मणोऽस्मात्त्वामगस्त्यो मोचयिष्यते. ७३४

अगस्त्यं त्वामहं म न्ये नान्यस्यात्र गतिर्मुने!

इदं गृहाणाभरणं प्रसादं कर्तुमर्हसि. ७३५

इदं तावन्मुनेऽ ज स्त्रं सुवर्णं धनमंबरम्

भक्ष्यं भोज्यं च ब्रह्मर्षे! ददात्याभरणानि च. ७३६

गृहीत्वैतत्तार य मामिति श्रुत्वैव तद्गिरम्

मया गृहीतं वलयं मुक्तः कृच्छ्रात्स तत्क्षणात्. ७३७

शक्रतुल्येन रा ज न्! मे दिव्यमाभरणं स्वयम्

अस्मिन्निमित्ते श्वेतेन दत्तमद्भुतदर्शनम्. ७३८

श्रुत्वा विचित्रं भू य स्तं मुनिं पप्रच्छ राघवः

---

१. भक्षणार्थम्.

यत्प्रविष्टो वनं श्वेतः कथं त[१]दमृगाद्विजम्. ७३९

मुनिराह पुरा रा जा दंड इक्ष्वाकुनंदनः
ददर्श शुक्रस्य सुतां रूपेणाप्रतिमां भुवि. ७४०

धर्षयामास तां म त्तो विरजां गुरुनंदिनीम्
कृत्वैतद्दारुणं कर्म मधुमंतं पु[२]रं गतः. ७४१

तच्छ्रुत्वा भार्गवः श्री मान् विरजायाः प्रधर्षणम्
क्रुद्धः शशाप तं चंडं दंडं नविजितेंद्रियम्. ७४२

पांसुवर्षं सप्त रा त्राच्छक्रात्प्रादुर्भविष्यति
विंध्यशैवलमध्यस्थविषयस्य विनाशनम्. ७४३

वधं प्राप्स्यत्यसौ म त्तः सपुत्रबलवाहनः
शापं श्रुत्वाश्रमं त्यक्त्वा विषयांते गतो जनः. ७४४

त्यक्त्वाश्रमं मुनि ज ने गतेऽथ विरजां कविः
अब्रवी'दाश्रमेऽत्रैव वस त्वं सुसमाहिता. ७४५

त्वत्समीपे निर्भ य ता प्राणिनां वसतां सदा.'
इत्युक्त्वा भार्गवो वासमन्यत्र समकारयत्. ७४६

दंडस्य विषयो रा ज्ञो दुर्मतेस्तस्य राघव!
सप्ताहाद्भस्मसाद्भूतो यथोक्तं ब्रह्मवादिना. ७४७

देशो भार्गवसा म र्थ्यादभवान्निर्मृगाद्विजः
ततःप्रभृति काकुत्स्थ! दंडकारण्यमुच्यते. ७४८

तपस्विवासाच्च ज नस्थानं नाम्नाभवत्प्रभो!
एवं श्रुत्वा मुनिं नत्वा श्रीरामः स्वपुरं ययौ. ७४९

विमानं पुष्पकं य क्षभर्तुरंतिकमेव सः
पुनः संप्रेषयामास संपूज्य रघुवल्लभः. ७५०

भरतं लक्ष्मणं ज न्मप्रभृत्यात्ममतानुगम्
रामोऽपृच्छद्राजसूयं कर्तुं मंत्रविनिश्चयम्. ७५१

तं प्रभुं राजसू य स्य क्रियां कर्तुं समुत्सुकम्

---

१. पशुपक्षिरहितम्. २. एतन्नामकं नगरम्.

प्रांजलिर्दर्शयन् दोषं तोषं दातुं महामतिः ७५२

प्रोवाच भरतो, 'रा जसूयाद्बहुनृपक्षयः
भविष्यति दयालोस्तेऽयुक्त'मित्यसकृत्सुधीः. ७५३

अश्वमेधे कुरु म नो मनोरन्वयभूषण!'
इत्याह लक्ष्मणो रामं कामं सर्वसतां मतम्. ७५४

'हत्वा वृत्रासुरं श्री मान् देवराजः शचीपतिः
अदर्शनं गतो राम! ब्रह्महत्यानिपीडितः. ७५५

अश्वमेधेन घो रा या दुःसहाया रघूत्तम!
विमुक्तो ब्रह्महत्यायाः शक्रो विष्णुप्रसादतः.' ७५६

तमाह रामः, 'सु म ते! हयमेधोऽतिपावनः
मुक्तः स्त्रीत्वादिलः पुत्रः कर्दमस्य प्रजापतेः. ७५७

महासेनो[1] यत्र ज ज्ञे यत्रोमां भगवान् हरः
रमयामास तं देशमाजगाम इलो नृपः. ७५८

कृत्वात्मानं[2] शिवो य त्र स्त्रीरूपं पुरुषाभिधम्
वृक्षादि च प्रभू रेमे देव्याः प्रियचिकीर्षया[2]. ७५९

तं देशं स इलो रा जा मृगयायाः प्रसंगतः
प्रविश्यापश्यदात्मानं स्त्रीकृतं सानुगं तदा. ७६०

ज्ञात्वा तत्प्रभुसा म र्थ्यं जगाम शरणं हरम्
तं प्रहस्याह भगवान् बहुरूपो महेश्वरः. ७६१

'वरं वरय रा ज न्! मे पुरुषत्वं विनेप्सितम्.'
प्रणिपत्य शिवां स्तुत्वा प्रार्थयामास खिन्नधीः ७६२

उमाह, 'कार्दमे[3] य ! त्वं मत्तश्चेद्वरमिच्छसि
अर्धस्य दाता देवोऽयं वरस्यार्धस्य चाप्यहम्.' ७६३

प्रजापतेरात्म ज स्तामित्युवाच कृतांजलिः,
'मासं स्त्रीत्वं प्राप्य मातर्मासं स्यां पुरुषः पुनः.' ७६४

---

१. कार्तिकेयः. २. यत्र आत्मानं स्त्रीरूपं वृक्षादिपुरुषाभिधं स्त्रीरूपं च कृत्वा प्रभुः शिवः रेमे. किमर्थमेवमित्यत आह, देव्याः प्रियचिकीर्षयेति. ३. कर्दमपुत्र.

देव्याह, 'कार्दमे य! त्वं पुमान्मासं भविष्यसि
न स्मरिष्यसि पुंभावे स्त्रीत्वं स्त्रीत्वे च पौरुषम् ७६५

एवं लब्ध्वा वरं रा जा स इलो मुदमाययौ
स्त्रीत्वे पुत्रं बुधाल्लेभे पुरूरवसमुत्तमम्. ७६६

एवंभूतोऽपि सु म हृत्कृच्छ्रान्मुक्तः स भूपतिः
अश्वमेधेन सौमित्रे! प्रसादात्परमेशितुः. ७६७

प्रतिष्ठाने ततः श्री मान् उवास बहुलाः समाः
अश्वमेधसमो यज्ञो न भूतो न भविष्यति. ७६८

तस्मादावश्यको रा ज्ञामश्वमेधः सतां मतः
मयापि खलु कर्तव्यो वसिष्ठस्याभ्यनुज्ञया. ७६९

तद्वरिष्ठं मति म तां वामदेवादिभिः सह
वसिष्ठं द्रष्टुमिच्छामि तं त्वं गुरुमिहानय. ७७०

वसिष्ठादिर्मुनि ज नः समानीतस्तमानतः
रामः प्रांजलिराचख्यावश्वमेधमनोरथम्. ७७१

तमूचुर्मुनयो, 'य ष्टुमश्वमेधेन राघव!
समर्थस्त्वं वयं सर्वे सहायास्तव कर्मणि.' ७७२

गुरूणामाज्ञया रा जा भरतं गोमतीतटे
प्राहिणोन्नैमिषे कर्तुं यज्ञवाटं यथोचितम्. ७७३

दूतान्प्रस्थाप्य सु म तीन् शत्रुघ्नं कपिनायकम्
बिभीषणं नृपान् विप्रानानयामास सानुगान्. ७७४

अश्वस्य रक्षणे ज न्यप्रवीणं लक्ष्मणं प्रभुः
व्यादिदेश प्रववृते स यज्ञः परमाद्भुतः. ७७५

कांचनीं जानकीं य ज्ञक्रियार्हां रघुनंदनः
कारयित्वा ततो दीक्षां जग्राह जगदीश्वरः. ७७६

तस्मिन्यज्ञे जनोऽ ज स्रं हृष्टः पूर्णमनोरथः
दत्तं सर्वं सुखाद्यावदेहीति न विनिःसृतम्. ७७७

न बभूवेदृशो य ज्ञः शक्रस्य वरुणस्य वा

यमस्य सोमस्येत्यूचुः सर्वं एव तपोधनाः. ७७८

रात्रिंचरा वान रा श्च सुवेषाः प्रयताः प्रियाः

यज्ञागतानां सर्वेषामासन् सर्वेऽपि किंकराः ७७९

वाल्मीकिवाटः सु म हान् रुचिरो गोमतीतटे

आसीत्सुमहितो भूपैर्मुनिभिश्च महात्मभिः. ७८०

शिष्यावुवाच स श्री मान् 'युवां गत्वा समाधिना

कृत्स्नं रामायणं काव्यं गायतां परया मुदा. ७८१

यदि पृच्छेद्युवां रा जा रामः कस्येति दारकौ

वाल्मीकेरथ शिष्यौ द्वावेवं ब्रूतां मुनिस्पृहौ. ७८२

लोभो युवाभ्यां न म नाक्कर्तव्यो धनवांछया

किं धनेनाश्रमस्थानां फलमूलाशिनां सदा. ७८३

गेयं समग्रं सु ज नौ नावज्ञेयश्च पार्थिवः

पिता हि सर्वभूतानां राजा भवति धर्मतः.' ७८४

संदिष्टौ तौ विन य तस्तथेति रचितांजली

यथोक्तमृषिणा पूर्वं तत्र तत्राभ्यगायताम्. ७८५

तां शुश्राव सदा रा ध्यः सत्कृतिं मुनिनिर्मिताम्

बालाभ्यां मधुरं गीतां कौतूहलपरोभवत्. ७८६

कर्मांतरे सभा म ध्ये समाहूय महामुनीन्

बालौ कुशलवौ गातुं स्थापयामास राघवः. ७८७

सर्वज्ञसत्समा ज स्थौ श्रोतॄणां हर्षवर्धनम्

गेयं प्रचक्रतुस्तत्र तावुभौ मुनिदारकौ. ७८८

प्रवृत्तस्य सुगे य स्य श्रवणेनातिहारिणा

नैव तृप्तिं ययुः सर्वे श्रोतारो रामसंसदि. ७८९

हृष्टा विप्राश्च रा ज न्या वैश्याः शूद्राश्च दारकौ

पिबंत इव चक्षुर्भ्यां पश्यंति स्म मुहुर्मुहुः. ७९०

ऊचुः परस्परं य ज्ञे संगताः सर्व एव ते

---

१. एकाग्रेण मनसा.

उभौ रामस्य सदृशौ बिंबाद्बिंबमिवोद्धृतौ. ७९१
जटावल्कधरौ रा शी न स्यातां यदि तेजसाम्
विशेषं नाधिगच्छामो गायतो राघवस्य च. ७९२
ततोऽपराह्णस म ये सर्गान् श्रुत्वा स विंशतिम्
अष्टादशसहस्राणि सुवर्णस्य महात्मनोः. ७९३
प्रयच्छेति तदा श्री मान् राघवः प्राह लक्ष्मणम्.
ददौ स शीघ्रं सौमित्रिस्तयोः स्वर्णं पृथक् पृथक्. ७९४
दीयमानं कुमा रा भ्यां फलमूलाशिनोर्वने
किमनेनेति ताभ्यां तत्सुवर्णं नोररीकृतम्. ७९५
तथा तयोः पर म कं वाक्यं श्रुत्वा निरिच्छयोः
श्रोतारश्चैव रामश्च सर्वं एव सुविस्मिताः. ७९६
पप्रच्छ तौ सुते ज स्कौ रामः कौतूहलान्वितः
'कर्ता काव्यस्य कः क्वास्ते कौ युवा'मिति सादरम्.
तमूचतुस्तौ 'सु य शा वाल्मीकिर्भगवान्मुनिः
काव्यस्य कर्ता संप्राप्तो यज्ञस्य सविधं प्रभुः. ७९८
यदि बुद्धिः कृता रा जन्! श्रवणाय महारथ!
कर्मांतरे क्षणीभूतस्तच्छृणुष्व सहानुजः.' ७९९
बाढमित्याह सु म ना रामस्तावथ तं तदा
आपृच्छय जग्मतुर्हृष्टौ यत्रास्ते मुनिपुंगवः. ८००
ततः स राघवोऽ ज स्रं तद्गीतं परमं शुभम्
शुश्राव मुनिभिः सार्धं नृपवानरराक्षसैः. ८०१
तस्मिन् गीते सुनि य तौ ज्ञात्वा तौ जानकीसुतौ
दूतान् पारिषदो मध्ये रामो वचनमब्रवीत्. ८०२
दूताः शृणुध्वमृ ज वः प्रयतेनांतरात्मना
मद्वचो ब्रूत गच्छध्वमितो भगवतोऽतिके. ८०३
सीता सदा चेत्प्र य ता सा पुनर्वीतकल्मषा

१. मुर्खाभूतः कृतविश्रान्तिरित्यर्थः. २. सीताप्रसवप्रतिपादककाव्यश्रवणेन ज्ञात्वा.

करोत्विहात्मनः शुद्धिमनुमान्य महामुनिम्. ८०४

अभिप्रायं मुने रा दौ ज्ञात्वा तस्याश्च हृद्गतम्
प्रत्ययं दातुकामायास्ततः शंसत मे लघु. ८०५

श्वः प्रभाते सुता म ह्याः सीता शपथमात्मनः
करोतु परिषन्मध्ये शोधनार्थं ममापि च.' ८०६

नत्वा दूता गताः श्री मान् वाल्मीकिर्यत्र तत्र ते
तं नमस्कृत्य तत्कार्यं कथयामासुरानताः. ८०७

श्रुत्वा तद्भाषितं रा ज्ञो मुनिर्ज्ञात्वा मनोगतम्,
'एवं करिष्यते सीता दैवतं हि पतिः स्त्रियाः.' ८०८

इत्याह यत्सोऽति म हा, 'दूताः प्रत्येत्य राघवम्
बभाषिरे स तच्छ्रुत्वा प्राह सर्वानृषीन् नृपान्. ८०९

'भगवंतो मुनि ज नाः सशिष्याः सानुगा नृपाः
पश्यंतु सीताशपथं यश्चैवान्योऽपि कांक्षते.' ८१०

श्रुत्वा तद्धर्मन थ वद्वाक्यं तस्य महात्मनः
ऋषीणां च नृपाणां च साधुवादो महानभूत्. ८११

कृत्वैवं निश्चयं रा जा श्वो भूत इति राघवः
विसर्जयामास तदा सर्वान् शत्रुनिषूदनः. ८१२

रात्रौ गतायां स म ये वसिष्ठादीन्मुनीन्नृपान्
राम आह्वयति स्मार्यान्सभायामितरानपि. ८१३

सर्व एव समा ज ग्मुर्वैश्याः शूद्राः सहस्रशः
सीताशपथवीक्षार्थं कुतूहलपरा जनाः. ८१४

प्राचेतसोऽतिप्र य तः ससीतः समुपागमत्
तमृषिं पृष्ठतः सीताप्यन्वगच्छदवाङ्मुखी. ८१५

कृतांजलिर्बाष्प ज लव्याप्ताक्षी जनकात्मजा
श्रुतिं ब्रह्माणमिव तां वाल्मीकिमनुगामिनीम्. ८१६

देवीं समालोक य तां साधुवादो महानभूत्
रामं सीतामुभौ केचित्प्रशशंसुस्तदा जनाः. ८१७

जनौघमध्ये श्री रा र्यैः प्रविश्य मुनिसत्तमः
सीतासहायो वाल्मीकिरिति प्रोवाच राघवम्. ८१८

'इयं राम ! स्वच्छ म तिः सुव्रता धर्मचारिणी
अपवादात्परित्यक्ता ममाश्रमसमीपतः. ८१९

लोकापवादा त्ते श्री मन् राम ! भीतस्य सुव्रत !
प्रत्ययं दास्यते सीता तामनुज्ञातुमर्हसि. ८२०

इमौ तव सुतौ रा जन्मलौ यमलौ बुधौ
न स्मराम्यनृतं पुत्रो दशमोऽहं प्रचेतसः ८२१

बहूनि वर्षाणि म या तपश्चर्यास्ति या कृता
नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली. ८२२

भूतपूर्वं न मे ज न्मन्यस्मिन् राघव ! किल्बिषम्
फलमश्नामि तस्याहमपापा यदि मैथिली. ८२३

विचिंत्य सीतां प्र य तां मनःषष्ठेंद्रियेष्विमाम्
गृहीतवानहं सेयं प्रत्ययं तव दास्यति.' ८२४

तमाह प्रांजली रा जा, 'यथा वदसि धर्मवित् !
प्रत्ययस्तु मम ब्रह्मंस्तव वाक्यैरकल्मषैः. ८२५

वृत्तः पुरापि सु म हान्प्रत्ययः सुरसन्निधौ
सेयं लोकभयात्त्यक्ता तद्भवान् क्षंतुमर्हति. ८२६

शुद्धा प्रिया च मेऽ ज स्रमियं सीता मुनीश्वर !
पुत्रौ च मम जानामि यमजातौ कुशीलवौ[1].' ८२७

रामस्य तेऽभिप्रा य ज्ञाः पुरस्कृत्य विधिं सुराः
सीतायाः शपथे तस्मिन्सर्व एव समागताः ८२८

समागतेष्वब्ज ज न्मप्रभृतिष्वमरेषु सा
बद्धांजलिरधोदृष्टिराह काषायवासिनी. ८२९

'हृदाप्यन्यं नैव य था राघवाच्चिंतयाम्यहम्,
तथा मे माधवी[2] देवी विवरं दातुमर्हति. ८३०

---

१. कुशशब्दस्य कुशाभावः पृषोदरादित्वात् इति तिलकः. २. विष्णुपत्नी भूदेवी.

मनोवाक्कर्मभी रा मं चिंतयामि सदा यथा
तथा मे माधवी देवी विवरं दातुमर्हति. ८३१

सत्या यथैषा म म वाक् वेद्मि रामात्परं न चेत्
तथा मे माधवी देवी विवरं दातुमर्हति.' ८३२

शपंत्यां हृदये श्री शं ध्यात्वा तस्यां रघूत्तमम्,
भूतलादुत्थितं दिव्यं सिंहासनमनुत्तमम्. ८३३

तस्मिंश्च धरणी रा ज्ञीं बाहुभ्यां गृह्य मैथिलीम्,
स्वागतेनाभिनंद्येमां स्थापयामास सादरा. ८३४

तदा तां दिव्यसु म नोवृष्टिः सीतामवाकिरत्,
श्रियं सिंहासनगतां प्रविशंतीं रसातलम्. ८३५

साधुकारस्तदा ज ज्ञे देवानामंबरे महान्,
व्याजह्रुर्बहुधा वाचो दृष्ट्वा सीताप्रवेशनम्. ८३६

नृपा महर्षयो य ज्ञवाटस्था इतरे जनाः,
दृष्ट्वा प्रवेशं सीताया विस्मयान्नोपरेमिरे. ८३७

भुवि प्रविष्टां तां रा ज्ञीं दृष्ट्वा बाष्पाकुलेक्षणः,
अवाक्शिरा दीनमना राम आसीत्सुदुःखितः. ८३८

चिरं रुदित्वाह, 'म नःशोको मे स्प्रष्टुमिच्छति,
पश्यतो मम सीताद्य नष्टा श्रीरिव रूपिणी. ८३९

रावणेन हृता ज ह्नुकन्येव प्रयता सती,
तदाहं सन्निधौ नासं पश्यतो मे भुवाद्य सा. ८४०

रक्षःपतेराल य तः सिंधोः परात्प्रिया मया,
आनीता येन मे तस्य किमगम्यं रसातलम्. ८४१

वसुधे! देवि! भ ज तः सीता निर्यात्यतां मम,
दर्शयिष्यामि वा रोषं किं न जानासि मद्बलम्. ८४२

श्वश्रूस्त्वमसि मे य त्सा त्वत्सकाशान्महात्मना,
कर्षता हलहस्तेन जनकेनोद्धृता पुरा. ८४३

तस्मान्निर्यात्यतां रा मा विवरं वा प्रयच्छ मे,

पाताले नाकपृष्ठे वा वसेयं सहितस्तया. ८४४
त्वमानयाशु तां म त्तस्तत्कृतेऽहं वसुंधरे.
नो चेद्विनाशस्ते मत्तो मत्तोषं विनिहंसि यत्.' ८४५
एवं क्रुद्धं प्रभुं श्री मानुवाच चतुराननः,
राम! राम! न संतापं कर्तुमर्हसि सुव्रत! ८४६
स्मर त्वं पूर्वकं रा जन्! मंत्रं भावमरिंदम!
सुखेन नागलोकं सा प्राप्ता सीता तव प्रिया. ८४७
भूयः स्वर्गे संग म स्ते भविष्यति तया सह
शेषं भविष्यं काकुत्स्थ! काव्यं रामायणं शृणु. ८४८
महाकाव्यं तु रा ज र्षे! मया देवैः सह श्रुतम्.'
एवमुक्त्वा सुरैः सार्धं ब्रह्मा स्वभवनं ययौ. ८४९
रामो मुनिं विन य तः प्रार्थयामास सांजलिः
भगवन्! यद्भविष्यं तच्छ्वोभूते संप्रवर्त्यताम्. ८५०
एवमुक्त्वा सदा रा ध्यः श्वोभूते मुनिभिः सह
तं जनौघं निवृत्यागात्पर्णशालां महामुनेः. ८५१
कुशीलवौ श्रोतु म नाः सोऽब्रवीद्राघवः सुतौ
गीयतामविशंकाभ्यामिति वाल्मीकिसंनिधौ. ८५२
तेषूपविष्टेषु ज गत्पूजितेषु महात्मसु
भविष्यदुत्तरं काव्यं जगतुस्तौ कुशीलवौ. ८५३
श्रुत्वा रहस्यं प्र य तैर्मुनिभिः सह राघवः
ततो विसर्जयामास सर्वान् यज्ञागतान्नृपान्. ८५४
यज्ञावसाने स्व ज नैः सहितः सकलैरपि
एकाकिनमिवात्मानं मेने जनकजां विना. ८५५
यदा वियुक्तः प्रि य या तया सद्गुणसंपदा
बभूव तत्स्मृतिस्तस्य सुधीरस्यापि कंपदा. ८५६
बभूव दुःखभा रा र्तः सीतां स्मृत्वा क्षणे क्षणे
रामः शून्यं जगन्मेने न शांतिं मनसागमत्. ८५७

सर्वान्विसृज्य प्र म दां हृदि कृत्वानुजैः सह
प्रविवेश ततोऽयोध्यां रामो राजीवलोचनः. ८५८

न सीतायाः परां श्री मान् वव्रे भार्यां रघूत्तमः
यज्ञे यज्ञे च पत्न्यर्थं सैवाभूत्कांचनी प्रभोः. ८५९

धर्मेण राघवो रा ज्यं चकार स महायशाः
दशवर्षसहस्राणि वाजिमेधानथाकरोत्. ८६०

चक्रेऽत्यद्भुत सा म र्थ्यस्ततो दशरथात्मजः
वाजपेयान्दशगुणांस्तथा बह्वाप्तदक्षिणान्. ८६१

अग्निष्टोमैश्च ते ज स्वी सोऽतिरात्रैश्च[1] राघवः
ईजे क्रतुभिरन्यैश्च श्रीमान् बहुसुवर्णकैः ८६२

सदैव धर्मे प्र य तमानस्यैवं धरापतेः
स कालो व्यत्ययात्तस्य राघवस्य महात्मनः. ८६३

वानरास्तं महा रा जमृक्षा रात्रिंचराश्च ये
सदानुरंजयंत्याज्ञानिरता रघुनंदनम्. ८६४

वृष्टिर्बभूव स म ये नाकाले निधनं तदा
हृष्टपुष्टजनाकीर्णं पुरं जनपदास्तथा. ८६५

अथ ता मातरो ज ग्मुः स्वर्गं रामस्य सुव्रताः
पुत्रपौत्रैः परिवृताः प्रापुर्दशरथं पतिम्. ८६६

तासां चकार सु य शाः स्वयं धर्म्याः क्रियाः प्रभुः
ता उद्दिश्य ब्राह्मणेभ्यो ददौ दानानि वत्सलः. ८६७

युधाजिताथ द्वि ज पो गार्ग्यो निजपुरोहितः
दत्त्वायुतं हयान्नानावस्त्ररत्नधनं बहु. ८६८

संप्रेषितस्तं प्रि य कृत् राघवो भ्रातृभिः सह
प्रत्युद्गम्य क्रोशमात्रं पूजयामास सादरम्. ८६९

संपूज्य तमृषिं रा जा तद्धनं प्रतिगृह्य च
पृष्ट्वाथ कुशलं सर्वं मातुलस्य युधाजितः. ८७०

---

१. यागविशेषैः.

'किमाह मातुलो म ह्यं यदर्थं त्वमिहागतः
तत्सर्वं भगवन्! ब्रूहि' स श्रीमानित्युवाच तम्. ८७१
गार्ग्यः प्राह, 'तव श्री मान्मातुलस्त्वाह राघव?
सिंधोर्नद्स्योभयतः पार्श्वेऽयं विषयो महान्. ८७२
शैलूषस्य सुता रा ज्ञो गंधर्वाणां महाबलाः
तिस्रः कोट्य इमं देशं रक्षंति रणकोविदाः. ८७३
तान्निर्जित्य रणे म त्तान् गंधर्वनगरं च तत्
निवेशय पुरे द्वे स्वे देशोऽयमतिशोभनः.' ८७४
तमाह बाढं रा ज र्षिस्तक्षपुष्कलनामकौ
भरतस्यात्मजौ वीरौ तं देशं विचारिष्यतः.' ८७५
एवमुक्त्वा पुण्य य शाः कुमारावभ्यषिच्य तौ
प्रेषयामास भरतं महत्या सेनया सह. ८७६
मातुलेन सहा रा त्तद्गंधर्वनगरं ततः
सप्तरात्रं महायुद्धं भरतस्तैः सहाकरोत्. ८७७
ततस्तेषु महा म न्युर्भरतो राघवानुजः
संवर्तमस्त्रं[1] मत्तेषु गंधर्वेष्वभ्यचोदयत्. ८७८
कालपाशसिता[2] ज ग्मुर्विलयं सर्व एव ते
क्षणेनाभिहतास्तेन तिस्रः कोट्यो महात्मना. ८७९
नानायुधधरा य त्ता गंधर्वा भस्मसात्कृताः
तद्युद्धं तादृशं घोरं न स्मरंति दिवौकसः ८८०
ततो रामस्यानु ज न्मा तस्मिन् देशे पुरे वरे
निवेशयामास तयोः स्थापयामास नंदनौ. ८८१
तक्षस्य धर्मन्या य प्रज्ञवरस्य महामतेः
अलका धनदस्येव पुरी तक्षशिला मता. ८८२
पुष्कलस्यापि वी रा णां धीराणां संमतस्थितेः

---

१. संवर्तं नाम प्रलयकालानलाख्यमिति तिलके. २. कालपाशेन सिताः विदारिताः.

पुष्कलावतमत्याख्यं नगरं [3]नगरंजितम्. ८८३

निवेश्य सद्गल　म ये पुरेऽब्दैः पंचभिस्ततः

पुनरायान्महाबाहुरयोध्यां राघवानुजः. ८८४

आगते भरते　श्री मान् रामः सौमित्रिमब्रवीत्,

'अंगदश्चंद्रकेतुश्च तव पुत्राविमावहम्. ८८५

अभिषेक्ष्यामि वी रा द्य देशः साधु विलोक्यताम्.'

अब्रवीद्भरतो 'देशो रम्यः कारुपथः प्रभो!' ८८६

गुरुवाक्यसमं　म त्वा भरतस्य वचः प्रभुः

लक्ष्मणं प्राह, 'गच्छ त्वं कुरु तत्र पुरद्वयम्.' ८८७

स गुरूक्तः स्वात्म ज योश्चकार द्वे पुरौ शुभे

अंगदस्यांगदीयाख्या पुरी परमशोभना. ८८८

चंद्रकेतोश्चाश्र　य दा सतां साधुगुणैर्युता

चंद्रकांताभिधा रम्या गम्या जातु न या द्विषाम्.८८९

रामाभिषिक्तं स्वं रा काकांतकांतप्रभुं सुतम्

अंगदं स्थापयित्वागादयोध्यां लक्ष्मणोऽब्दतः. ८९०

भरतोपि तथा　म ल्लं चंद्रकेतुं महाबलम्

निवेश्य राज्ये साकेतमगात्संवत्सरोषितः. ८९१

उभौ रामांघ्रिभ　ज ने सौमित्रिभरतौ रतौ

कालं गतमपि स्नेहान्न विजानीत एव तौ. ८९२

पौरकार्येषु प्र　य तमानानां धर्मचारिणाम्

एवं वर्षसहस्राणि दश तेषामयुस्तदा. ८९३

अथ काले गतेऽ　ज स्य निदेशेन महात्मनः

कालस्तापसरूपेण राजद्वारमुपागमत्. ८९४

'दूतोऽहं तस्य भो! य स्य महर्षेरमितं बलम्

रामं दिदृक्षुरायातः कार्येणे'त्याह तत्र सः ८९५

तच्छ्रुत्वा लक्ष्मणो रा ज्ञे न्यवेदयत 'तापसः

---

३. नगैः पर्वतैः रंजितं शोभितम्.

दूतस्त्वां द्रष्टुमायातस्तं त्वं पश्य रघूत्तम!' ८९६

रामः प्रोवाच, 'सु म ते! वत्स! मत्सविधं द्रुतम्

प्रवेश्यतां मुनिस्तात! महौजा द्वारि मास्तु सः. ८९७

सौमित्रिणा ततः श्री मांस्तापसः स प्रवेशितः

अभिगम्य रघुश्रेष्ठं वर्धस्वेत्याह सादरम्. ८९८

सत्कृत्याह मुनिं रा जा, 'यस्य दूतस्त्वमागतः

तस्य संदेशवाक्यानि समग्राणि निवेदय.' ८९९

एवमुक्तः स स म यं तापसः प्राह, 'राघव!

रहस्येतत्प्रवक्तव्यं किंचान्यदपि भूपते! ९००

यः श्रोता कोपि रा ज न्! यो द्रष्टा वा रघुनंदन!

स वध्यस्तव रामाज्ञा मुनींद्रस्येदृशी स्फुटा.' ९०१

सुदृढव्यवसा य स्तच्छ्रुत्वा तापसभाषितम्

तथेति स प्रतिज्ञाय रामो लक्ष्मणमब्रवीत्. ९०२

'द्वारि तिष्ठ प्रवी रा द्य द्वास्थं त्वमपसारय,

वाचं यः शृणुयाद्वा नौ पश्येद्वध्यः स मे भवेत्.'९०३

द्वारि निक्षिप्य सु म तिं लक्ष्मणं लक्ष्मणाग्रजः

तमुवाच मुनिं वाक्यं कथयस्वेति सोऽब्रवीत्. ९०४

'वचनं शृणु रा ज न्मे यदर्थमहमागतः

पितामहेन देवेन प्रेषितोऽस्मि महाबल! ९०५

कालोऽहं भूरि गा य स्य तव पुत्रो रघूत्तम!

समयो यः कृतः पूर्वं परिपूर्णः स सत्पते! ९०६

हत्वा दशास्यं त्रि ज गत्त्वया निष्कंटकं कृतम्

समयोऽयं निजं लोकमागंतुं जगदीश्वर! ९०७

नृलोके समयो य स्ते कृतो वस्तुं सुरेश्वर!

दशवर्षसहस्राणि दशवर्षशतानि च, ९०८

स संपूर्णो महा रा ज! प्रजाः संरक्षितुं यदि

भूयोऽपीच्छसि भद्रं ते वस राम! यथासुखम्.' ९०९

एवं पितामह म तं श्रुत्वा कालमुखात्प्रभुः
प्रहसन्नब्रवीत् 'काल! मान्यं ब्रह्मवचो मम. ९१०
कार्यमेव मया श्री मान् यथैवाह पितामहः.'
'भद्रं तेऽस्तु गमिष्यामि यत एवाहमागतः.' ९११
तथा तयोः काल रा जश्रेष्ठयोर्वदतोर्मिथः
दुर्वासा भगवान् योगी राजद्वारमुपागमत्. ९१२
स पुत्रोऽत्रेरुग्र म हा द्वास्थं सौमित्रिमब्रवीत्,
ममार्थोतिक्रमत्याशु, रामं दर्शय कुत्र सः.' ९१३
नत्वा रामस्यानु ज स्तं मुनिमाह कृतांजलिः,
'कोऽर्थस्ते भगवन्! रामो व्यग्रास्तिष्ठ क्षणं मुने! ९१४
स चंड आह,'मां य त्वादस्मिन्नेव क्षणे द्रुतम्
प्रतिवेदय रामाय दुर्वासा विश्रुतो ह्यहम्. ९१५
नो चेत्त्वामथ तं रा मं शत्रुघ्नं भरतं तथा
संततिं नगरं राष्ट्रं शप्त्वा यास्येऽवमानितः.' ९१६
स 'एकस्यास्तु म म मा सर्वेषां मरणं समम्[1]'
इति बुद्ध्या विनिश्चित्य राघवाय न्यवेदयत्. ९१७
कालं विसृज्य स ज गद्भर्ता दुर्वाससं मुनिम्
प्रत्युद्गम्य प्रणम्याह, 'किं कार्यं भगवन्निति.' ९१८
रामं प्रत्याह स य मिप्रवरोऽनशनव्रतम्
अयुताब्दं कृतं सिद्धमन्नमिच्छामि राघव!' ९१९
श्रुत्वाशु रघुरा ज स्तद्वाक्यं सुप्रीतमानसः
भोजनं मुनिमुख्याय यथासिद्धमुपाहरत्. ९२०
स तद्भुक्त्वास्तूद य स्ते सदेत्युक्त्वा महातपाः
तृप्तोऽमृतरसान्नेन स्वमाश्रममुपागमत्. ९२१
स्मृत्वा कालवचो रा जा स्वां प्रतिज्ञां च वत्सलः
दुःखितोऽवाङ्मुखस्तूर्ष्णीं तस्थौ तं लक्ष्मणोऽब्रवीत्.

---

१. युगपत्.

'महाराज! त्वम म लां स्वां कीर्तिं सुस्थिरां कुरु,
जहि मां सौम्य! विस्रब्धं प्रतिज्ञां परिपालय. ९२३

भग्नप्रतिज्ञा ये श्री मंस्ते यांति नरकं नराः
जहि मां निर्विशंकस्त्वं धर्मं वर्धय राघव!' ९२४

तथोक्तः शोकभा रा र्तो बभूवाकुलमानसः
तद्वृत्तं सुहृदां मध्ये कथयामास सन्नवाक्. ९२५

मंत्रिणो गतसा म र्थ्यास्तूष्णीमासन्विचेतसः
अथोवाच वसिष्ठस्तं सत्यसंधं महामतिः. ९२६

'दृष्टं मयैतद्रा ज र्षे! तत्त्वज्ञाच्च श्रुतं पुरा
लक्ष्मणेन वियोगोऽयं भावितैव तव प्रभो! ९२७

त्यजैनं राम! सु य शाः प्रतिज्ञां मा वृथा कृथाः
प्रतिज्ञायां विनष्टायां धर्मः सर्वोऽपि नश्यति.' ९२८

स गुरोः सत्यसा रा त्तच्छ्रुत्वा वाक्यमकल्मषम्
धैर्यात्परिषदो मध्ये रामो लक्ष्मणमब्रवीत्. ९२९

'विसर्जये त्वां सु म ते! मा भूद्धर्मविपर्ययः
त्यागो वधो वा विहितः साधूनामुभयं समम्' ९३०

इत्युक्तः साश्रुर ज नि प्रभुं नत्वा स लक्ष्मणः
विवेश वेश्म न प्रायात्सरयूतीरमात्मवान्. ९३१

तत्रोपस्पृश्य स यं[1] तस्रोता बध्वासनं दृढम्
योगयुक्तोऽभवद्धीमान् संस्मरन् राममात्मनि. ९३२

शक्रादयस्तम ज रा दिव्यैः पुष्पैर्मनोहरैः
अवकीर्य मुदा स्तुत्वा गीतैर्वाद्यैश्च नर्तनैः. ९३३

सत्कृत्य सर्वेप्रि य कृत्प्रवरं राघवानुजम्
सशरीरं विमानेन स्वर्गं निन्युः कृतोत्सवाः. ९३४

विसृज्य लक्ष्मणं रा मो दुःखशोकसमन्वितः

१. यतानि नियमितानि स्रोतांसि इंद्रियद्वाराणि येन सः, निगृहीतेंद्रिय इत्यर्थः.

पुरोधसो मंत्रिणश्च नैगमांश्चेदमब्रवीत्. ९३५

'अयोध्यायां पतिं म ह्या भरतं धर्मवत्सलम्
वीरमद्याभिषेक्ष्यामि ततो यास्याम्यहं वनम्. ९३६

राजास्तु भरतः श्री मान्संभारानानयंत्विह
अद्यैवाहं गमिष्यामि लक्ष्मणेन गतां गतिम्.' ९३७

तच्छ्रुत्वा वचनं रा ज्ञः सर्वाः प्रकृतयो भृशम्
शिरोभिः प्रणता भूमौ गतसत्त्वा इवाभवन्. ९३८

भरतश्चापि वि म ना विसंज्ञोऽभूत्तदा भृशम्
राज्यं विगर्हयामास वचनं चेदमब्रवीत्. ९३९

'वचनं शृणु रा ज न्! मे राज्यं स्वर्गं त्वया विना
न कामये क्षणं स्वप्ने सत्येनाहं शपे प्रभो! ९४०

कुशो लवश्च न य विद्धर्मवित्प्रवरः प्रभो!
कोसलेषूत्तरेष्वेतावभिषेक्तुं त्वमर्हसि. ९४१

इतो दूताः सत्व रा स्तं शत्रुघ्नं प्रति राघव!
गच्छंत्वाख्यातुमस्माकं गमनं भक्तवत्सल!' ९४२

ततो गुरुः प्राह, 'म हीं पश्येमाः प्रकृतीर्गताः
ज्ञात्वासामीप्सितं कार्यं वत्स! मा विप्रियं कृथाः.' ९४३

दयालुरुत्थाप्य ज नान् किं करोमीत्यथाब्रवीत्
ततः सर्वेपि ते भक्ता रामं वचनमब्रुवन्. ९४४

'सदाराः ससुता य त्तास्त्यक्त्वा सर्वस्वमीश्वर!
गच्छंतमनुगच्छामो यत्र राम! गमिष्यसि.' ९४५

भक्तान्समस्तान्स्व ज नान् बाढमित्येव सोऽब्रवीत्
ततोऽभिषिच्य तौ पुत्रावंकमारोप्य वत्सलः. ९४६

परिष्वज्य स्वभि य कृन्मूर्ध्न्युपाघ्राय चासकृत्
स्वे पुरे प्रेषयामास सुसंपन्नौ कुशीलवौ. ९४७

ततः परं सदा रा ध्यो रामो राजीवलोचनः
दूतान्संप्रेषयामास शत्रुघ्नाय महात्मने. ९४८

प्रभुणा प्रेषिता म ध्येऽकृतवासा महाजवाः
दूतास्त्रिभिरहोरात्रैः साकेतान्मधुरां ययुः. १४९
शत्रुघ्नायाथ ते श्री मद्वृत्तमाचख्युरद्भुतम्
लक्ष्मणस्य परित्यागं प्रतिज्ञां राघवस्य ताम्. १५०
'विभज्य पुत्रयो रा ज्यं दत्तं विंध्यस्य रोधसि
पुरी कुशावती नाम कुशस्य रचितोत्तमा. १५१
श्रावस्तीति पुरी म ह्यां प्रसिद्धिं प्रापिता वरा
लवस्य निर्मिता वीर ! राघवेण महात्मना. १५२
कृत्वा त्वयोध्यां वि ज नां राघवो भरतस्तथा
पौरैः समं स्वर्गमने कृतोद्योगौ सहानुगौ.' १५३
एवं निवेद्य प्र य ताः शत्रुघ्नाय महात्मने
विरेमुस्ते ततो दूता'स्त्वर भूपे'ति चाब्रुवन् १५४
श्रुत्वा वृत्तं तत्त्व रा वाञ् शत्रुघ्नः कांचनाभिधम्
पुरोहितं समानीय प्रजाश्चाकथयत्स्वयम्. १५५
अभिषिच्याथ सु म हत्तद्राज्यं स्वं विभज्य सः
पुत्राभ्यां प्रददौ लेभे सुबाहुर्मधुरां पुरीम्. १५६
शत्रुघाती च ते ज स्वी वैदिशं प्राप सत्पुरम्
एवं कृत्वाऽगादयोध्यां रथेनैकेन सत्वरम्. १५७
स शत्रुघ्नो विन य वानभिवाद्याह राघवम् !
'तवानुगमने राजन्विद्धि मां कृतनिश्चयम्. १५८
वृत्तं राज्यं तनु ज योः कृतं कृत्यमशेषतः
न चान्यदद्य वक्तव्यमागतोऽहमुपासितुम्. १५९
त्वच्छासनं स्वाश य ज्ञ ! प्रभो ! नित्यमनुष्ठितम्
निहन्यमानं नेच्छामि प्रसादं कर्तुमर्हसि.' १६०
तं बाढमित्युदा रा णां गुरुराहातिवत्सलः
ततः समागता ऋक्षा वानराश्च सयूथपाः. १६१
ते कृतांजलयो म ह्यां पतिताः प्रभुमब्रुवन्,

'नयास्मानपि काकुत्स्थ! शरणागतवत्सल!' ९६२

तांश्च बाढमिति श्री मानुवाच श्रितवत्सलः
अथ बद्धांजलिः प्राह सुग्रीवो रघुनंदनम्. ९६३

'अभिषिच्यांगदं रा ज्ये प्राप्तोऽहं राम! कामद!
तवानुगमने राजन्विद्धि मां कृतनिश्चयम्.' ९६४

तं स्मयन्नाह स म ये प्राप्तं बाढमिति प्रभुः
बिभीषणमथोवाच वाचस्पतिशतस्तुतः. ९६५

'शृणु राक्षसरा ज! त्वं कार्यं मच्छासनं त्वया
प्रजाः संरक्ष धर्मेण नोत्तरं वक्तुमर्हसि. ९६६

यावच्चंद्रोऽब्जप्रि य श्च यावत्तिष्ठति मेदिनी
यावच्च मत्कथा लोके तावद्राज्यं तवास्त्विह.' ९६७

तथेति रक्षसां रा जा प्रतिजग्राह तद्वचः
तमेवमुक्त्वा श्रीरामो हनूमंतमथाब्रवीत्. ९६८

'तावत्प्रीतस्त्वं र म स्व मद्वाक्यमनुपालयन्
मत्कथाः प्रचरिष्यंति यावल्लोके हरीश्वर!' ९६९

कृतांजलिर्वायु ज स्तमब्रवीद्राममीश्वरम्.
'यावत्तव कथा लोके तावत्स्थास्याम्यहं भुवि.' ९७०

जांबवंतं प्रव य सं मैंदं च द्विविदं प्रभुः
प्राह, 'यावत्कलियुगं तावज्जीवत सर्वदा.' ९७१

अथ प्रभातर ज नौ पृथुवक्षा महायशाः
रामः कमलपत्राक्षः स्वपुरोहितमब्रवीत्. ९७२

'अग्रेऽग्निहोत्रं प्र य तैर्विप्रैः सार्धं व्रजत्विदम्
वाजपेयातपत्रं च शोभमानं महापथे. ९७३

ततो गुरुस्तपो रा शिः सर्वं निरवशेषतः
चकार विधिवद्धर्मं महाप्रस्थानिकं विधिम् ९७४

सूक्ष्मांबरधरो म त्या स ब्रह्मावर्तयन् परम्
कुशान् गृहीत्वा पाणिभ्यां सरयूं प्रययौ स्वयम्. ९७५

मौनव्रतधरः श्री मान् पद्भ्यामेव चलन् पथि
निर्जगाम गृहात्तस्माद्दीप्यमानो यथांशुमान्. १७६

पार्श्वेऽस्य दक्षिणे रा ज्ञः पद्मा श्रीः समुपस्थिता
सव्येऽपि च मही देवी [1]व्यवसायस्तथाग्रतः. १७७

स्तुतानि शस्त्राण्य म रैर्यानि तस्य जगत्पतेः
अन्वयुस्तानि तं रामं कृत्वा पुरुषविग्रहम्. १७८

वेदाश्च सर्वे त्रि ज गन्मूलं राजर्षिरूपिणम्
अनुजग्मुस्तदा रामं प्रभुं ब्राह्मणरूपिणः. १७९

ओंकारश्चाथ गा य त्री वषट्कारश्च मूर्तिमान्
यज्ञाश्चानुव्रता रामं सर्वे पुरुषविग्रहाः. १८०

हृष्टाः सपरिवा रा स्तं पौरा जानपदा जनाः
अन्वयुः पशवः सर्वे पक्षिणः स्थावरा अपि. १८१

सर्वे रामानुग म ने हृष्टाः पुष्टाः प्लवंगमाः
तेषां बभूव भाग्येन स्वर्गद्वारमपावृतम्. १८२

भूताः प्रेताश्चानु ज ग्मुः प्रभुं किंबहुना तदा
सुसूक्ष्ममप्ययोध्यायां प्राणिजातं न दृश्यते. १८३

भ्रातरौ मंत्रिणा य त्ताः सर्वे सांतःपुराः पुरात्
निर्गत्य तेऽन्वयू रामं प्रभुं तद्गुणरंजिताः. १८४

[2]अध्यर्धयोजनं ज न्मिजन्ममृत्युभयापहः
गत्वा ददर्श सरयूं रामः पुण्योदकां नदीम्. १८५

तस्याः स्वर्गप्रदो य स्तं देशं रामः समागतः
तस्मिन्मुहूर्ते ब्रह्मापि त्रिदशैर्मुनिभिः सह. १८६

विमानानां भास्व रा णां शतकोटिभिरावृतम्
प्रभाभिः स्वर्गिणां व्योम ज्योतिर्मयमिवाभवत्. १८७

सुखस्पर्शस्तत्र म रुद्ववौ शीतः सुगंधवान्
पपात पुष्पवृष्टिश्च देववाद्यानि सस्वनुः. १८८

---

१. व्यवसायशक्तिः २. अर्धाधिकं योजनं गत्वा.

गंधर्वाश्च जगुः श्री मद्रामस्य चरितं मुदा
मुख्या अप्सरसस्तत्र ननृतुर्हृष्टमानसाः. ९८९

रचितांजलि रा रा त्तमागत्य विधिरब्रवीत्,
'आगच्छ विष्णो! भद्रं ते तां तनुं प्रविश स्वकाम्.[1]

भ्रातृभिः सह धा[2] म त्वं निजं विष्णो! विभूषय
लोकानां गतिरस्याद्य न त्वां जानंति केचन. ९९१

ज्ञानशक्तिं विना[3] ज! त्वां न जानंति जगद्गुरो!'
इति वाक्यं विधेः श्रुत्वा रामो रमयतां वरः ९९२

पद्मापतिः पुण्य य शाः सशरीरोऽनुजैः सह
विवेश वैष्णवं धाम ध्यातं यत्साधुभिः सदा. ९९३

ततो विष्णुमयं रा मं पूजयंति स्म देवताः
साध्या मरुद्गणाश्चैव सेंद्राः साग्निपुरोगमाः. ९९४

देवर्षयो जात[4] म हा गंधर्वास्त्रिदशांगनाः
सुपर्णनागयक्षाश्च दैत्यदानवराक्षसाः. ९९५

'अद्य त्वय्यागतेऽ ज! त्रिदिवः पूर्णमनोरथः
हृष्टो विकल्मषो[5] जात इत्यूचुर्विष्णुमव्ययम्. ९९६

अथ विष्णुः स्वप्रि य कृत् तं पितामहमब्रवीत्,
'एषां लोकं जनौघानां दातुमर्हसि सुव्रत. ९९७

इमे सर्वेऽप्यात्म[6] ज न्मन्स्नेहान्मानुगताः सदा
भक्ता हि भजितव्याश्च त्यक्तात्मानश्च मत्कृते.' ९९८

श्रुत्वा वाक्यं सप्रिय य स्य ब्रह्मा विश्वकृदब्रवीत्,
'लोकान्संतानकान्नाम यास्यंतीमे समागताः. ९९९

तिर्यग्गतं त्वानु रा गात् यद्विष्णोऽनुगतं ध्रुवम्
प्राणांस्त्यक्ष्यति भक्त्या तत्संतानेषु निवत्स्यति. १०००

लोको यथा मम म हान् युक्तो ब्रह्मगुणैः[7] सदा

---

१. निजां वैष्णवीम्. २. वैकुंठम्. ३. न जायतेऽसौ अजः. ४. जातानंदाः. ५. पापरहितः. ६. ब्रह्मन. ७. सत्यसंकल्पत्वादिभिः ब्रह्मगुणैः.

ब्रह्मलोकसमीपस्थः क्रममुक्तिप्रदः कृतः. १००१

लोकः संतानकः श्री **मा**न्मयैषामद्य कल्पितः'
इत्युवाच स्वयं ब्रह्मा भगवान्भूतभावनः[1]. १००२

ततः पतिर्वान **रा** णां सुग्रीवो हृष्टमानसः
निमज्य सारवे[2] तीर्थे विवेश रविमंडलम्. १००३

गोप्रताराह्वये[3] **म** ग्नास्तीर्थे परमपावने
ऋक्षाश्च कपयः प्रापुः सुरान् येभ्यस्तदुद्भवः[4]. १००४

पौरा जानपदा **ज** ग्मुः स्वजनैः सह सारवम्
स्वर्गस्थाः शुश्रुवुस्तेषां चकिताः सहसा रवम्. १००५

स्थावरा जंगमा **य** ज्ञैर्महद्भिर्दुर्लभं पदम्
गोप्रतारे कृतस्नानाः प्रापुर्भासुरविग्रहाः[5]. १००६

सुतीर्थे प्राणिवा* **रा** स्ते प्रहृष्टाः कृतमज्जनाः
दिव्यदेहाः प्रसादेन प्रभोः सर्वेऽपि सज्जनाः. १००७

अमर्त्यत्वं गता **म** र्त्या दिव्यालंकारवाससः
विमानानि समारूढाः सर्वे भास्वरमूर्तयः. १००८

गोप्रतारे तदा **ज** न्मी सर्वस्त्यक्तकलेवरः
दिव्यरूपोऽभवच्छ्वापि[6] बिडालो ग्रामसूकरः. १००९

सरयूपुण्यतो **य** स्य महिमा परमाद्भुतः
ये तत्र त्यक्तदेहास्ते लोकं संतानकं गताः १०१०

संतानकं मुदा **ज** ग्मुर्ऋक्षवानरराक्षसाः
अनुग्रहाद्भगवतो रामस्याद्भुतकर्मणः. १०११

गंधर्वैः सह गा **य** द्भिः पुण्यं निजयशोद्भुतम्
शृण्वन्त्संतानकं निन्ये विमानैस्तान् दयार्णवः[7]. १०१२

तत्र सर्वानुदा **रा** णां नाथः श्रीविष्णुरीश्वरः

---

१. भूतानि भावयति उत्पादयति सः. २. सरय्वा इदं सारवं तस्मिन्. ३. गोप्रतारनामधेये. ४. येभ्यः तेषां ऋक्षादीनां उद्भवः. ५. उज्ज्वलदेहाः * प्राणिसमूहाः. ६. अभवत् श्वापि इति पदच्छेदः. ७. दयासागरः.

स्थापयामास तान्प्रेम्णा पितापुत्रानिवौरसान्. १०१३

ततः स्वयं स्वधा[1] म स्वैः सर्वैर्ब्रह्मादिभिः सह
ययौ भक्तमयूराणां मेघो रामः सतां गतिः. १०१४

श्रीमद्रामायणं श्री मान्वाल्मीकिर्मुनिपुंगवः
महाकाव्यं चकारेत्थं भव्यमादिमहाकविः. १०१५

गीतं रामकुमा रा भ्यां श्रुतं सर्वैर्महर्षिभिः
ब्रह्मणा सत्यलोके च कैलासागेऽपि शंभुना. १०१६

अश्वमेधे महा[2] म न्यौ सह सर्वैर्मुनीश्वरैः
सचिवैर्भ्रातृभिः सार्धं रामेणापि श्रुतं स्वयम्. १०१७

हितेच्छुभिः समा[3] ज प्यं श्राव्यं दुःस्वप्ननाशनम्
पापतापप्रशमनं मनोरथकरं परम्. १०१८

वेदैः सममिदं य ज्ञदानतीर्थफलप्रदम्
सर्वपापैः प्रमुच्येत पादमप्यस्य यः पठेत्. १०१९

पापान्यपि दिवा रा त्रौ यः कुर्यान्मानवः सदा
पठत्येकमपि श्लोकं पापात्स परिमुच्यते. १०२०

न केवलमिदं म ह्यां पाताले त्रिदिवेऽपि च
नित्यं शृण्वंति संहृष्टाः काव्यं रामायणं परम्. १०२१

श्रीमद्रामायणेऽ ज स्रं प्रेमात्यंतं हनूमतः
नारदस्य तु सर्वस्वमेतद्वाल्मीकिसद्गुरोः. १०२२

गंधर्वैर्गीयते य लात्सिद्धैश्च परमर्षिभिः
सर्वैर्मुमुक्षुभिर्मुक्तैः सेव्यते सुमनोहरम्. १०२३

रामायणं यशोऽ ज[4] स्रं श्रीमच्छ्रीनायकाननम्
का न नंदत एतेन सभैतत्स्वर्द्रुकाननम्[5] १०२४

प्रेम रामायणे य स्य प्रसन्नास्तस्य देवताः
या आपदः प्रपश्यंति स्वबलं अश्यदेव ताः. १०२५

---

१. स्वं लोकम्. २. महाक्रतौ. ३. सम्यक् जपनीयम्. ४. नित्यम्. ५. कल्पद्रुमकाननम्.

वाल्मीकिं तपसां रा शिमनुमान्य महाकविम्
तद्गुरुं नारदं व्यासं शुकमन्यान्कवीन्मुनीन् १२

'मंत्ररामायणं म ह्यं श्रीमद्रामायणात्स्वयम्
दत्तमुद्धृत्य बालाय श्रीरामेण दयालुना. १३

---

## मंत्रगणना

मंत्ररामायणे बालकांडे रामप्रसादजे
त्रयोविंशतिरेवात्र मंत्राः संत्रासदाः[1] कलेः. १

द्वितीयेऽत्र सतामिष्टेऽयोध्याकांडे शुभप्रदाः
विंशतिः परिसंख्याता मंत्राः सेव्याः सतां सदा. २

तृतीयेऽरण्यकांडेऽत्र त्रिंशन्मंत्राः प्रकीर्तिताः
कामदाः कविवर्गाणां नंदनस्था[2] द्रुमा इव. ३

चतुर्थे त्वत्र किष्किंधाकांडे कांडेऽभिपूजिते
त्रिंशदेव महामंत्राः पुरुषार्थफलप्रदाः. ४

पंचमे सुंदरे कांडे मंत्राः षट्त्रिंशदुत्तमाः
सर्वोऽपि सेवनाद्येषां भवेत्पुरुष उत्तमाः[3]. ५

मंत्राः षष्ठे युद्धकांडे षडशीतिरुदाहृताः
सर्वेऽपि रसिका येभ्यः समुत्पन्नमुदाहृताः. ६

मंत्रा उत्तरकांडेऽत्र सर्वसंसिद्धिवल्लभाः
एकोनाशीतिरुदिता मुदिता यैः सतां सभाः. ७

एवं सप्तसु कांडेषु सर्वे मंत्राः शुभप्रदाः
सदा जयंति चत्वारः शतानि त्रीणि चार्चिताः ८

मंत्ररामायणे ग्रंथे सज्जनानां सुखप्रदे
अक्षिबाणांकशिखि ( ३९५२ )भिर्विज्ञेया श्लोकसंमितिः. ९

त्रयोदशाक्षरो मंत्रः सर्वत्रात्र विराजते
तेनैतन्नामतः 'श्रीमन्मंत्ररामायणं' बुधाः. १०

---

१. संत्रासं भयं ददतीति संत्रासदाः. २. इंद्रोद्यानवर्तिनः. ३. विनष्टा ज्ञानः.

वर्णः प्रथमकांडेऽत्र महामंत्रस्य सज्जनाः
श्लोकानां प्रथमे पादे सर्वत्र प्रथमः स्फुटः. ११
द्वितीये च द्वितीयः स तृतीये च तृतीयकः
एवं सप्तमकांडेऽन्त्ये मंत्रवर्णोऽत्र सप्तमः. १२
पृष्ठे त्रयोदशश्लोकलिपेरेतत्स्फुटीभवेत्
आर्षात्[1]समुद्धृतमिदं तीर्थं गंगाह्रदादिव. १३

सत्काव्योपवनं यदाद्यकविना वाल्मीकिना निर्मितं
तत्रत्यैरतिरम्यपद्यकुसुमैः प्रीत्या गृहीतैर्गुणे
श्रीमंत्रे[2] विरचय्य दाम रुचिरं 'श्रीमंत्ररामायणं'
श्रीरामस्य जगद्गुरोरुचितयोः पादाब्जयोरर्पितम्. १

इति श्रीमंत्ररामायणे श्रीरामनंदनमयूरविरचिते श्रीमदुत्तरकांडे
एकोनाशीतितमो मंत्रः समाप्तः ।

---

# *रामनामाष्टोत्तरशतरामायणम्

श्रीपतिः शेषशयनो रक्षस्त्रस्तसुरस्तुतः[3]
वितीर्णेष्टाभयवरः सत्यसंधः सुराश्रयः १
ऋष्यशृंगेष्टिसंभूतः सूर्यवंशविभूषणः
चतुर्मूर्तिर्[4]दाशरथिः कौसल्येयोऽतिसुंदरः २
कैकेयीनंदनो रामः सुमित्रानंदवर्धनः
लक्ष्मणानुचरो विद्वान् वसिष्ठच्छात्रसत्तमः ३

---

१. मूलरामायणात्. २. श्रीयुते "श्रीराम जय राम जय जय राम" इत्येवंरूपे मंत्रे. * अत्र कविः पयोराशेरमृतमिव रामायणाच्छ्रीरामनाम्नामष्टोत्तरं शतमुद्धृत्य तन्मुखेनैव निखिलां रामायणीं कथामविच्छिन्नामुपाहरति विदुषां पारितोषाय । कथाप्रवीणानां च नाम्नामेतेषामर्थो न दुरूहो भवेदिति कानिचिदेव दुर्गमाण्यत्रत्यानि पदानि व्याख्यायन्ते। ३. रक्षोभ्यः त्रस्ताः सुराः तैः स्तुतः । ४. चतस्रः रामलक्ष्मणभरतशत्रुघ्नरूपा मूर्तयो यस्य सः ।

कौशिकात्तधनुर्वेदः सर्वशस्त्रास्त्रविद्वरः
ताडकास्वनिलाहीषुर्मखप्रत्यूहनाशनः ॥ ४
सुबाहुप्राणसंहर्ता मारीचस्मयभंजनः
अहल्यांहोनगपविः शतानंदस्तवांचितः ॥ ५
महेश्वरधनुर्भेत्ता जानकीप्राणवल्लभः
जामदग्न्याहंकृतिघ्नः पितृचित्तप्रसाधकः ॥ ६
गुर्वर्थत्यक्तराज्यश्रीर्दारानुजसमन्वितः
सुमंत्रसूतः सत्वाढ्यो वल्कली गुहसत्कृतः ॥ ७
भरद्वाजाभ्यनुज्ञातश्चित्रकूटकृतस्थितिः
निवापविधिसंनिष्ठो भरतार्पितपादुकः ॥ ८
लब्धात्रिसत्कृतिः श्रीमान् मुनिप्रणतिसादरः
विराधोद्धरणोत्साही शरभंगसभाजितः ॥ ९
सुतीक्ष्णकृतसत्कारः कुंभसंभवपूजितः
कृतपंचवटीवासो जटायुर्विहितादरः ॥ १०
छिन्नशूर्पणखाघ्राणः खरघ्नो दूषणांतकः
मायास्वर्णमारीचरक्षःप्राणापहारकः ॥ ११
यतिच्छद्मदशग्रीवहृतप्राणप्रियांगनः
दयिताविरहात्यार्तसर्वकामिविडंबकः ॥ १२
स्वतातसखगृध्रेंद्रसुदुरापगतिप्रदः
कबंधबाहुबंधच्छित् शबरीक्षणनिर्वृतः ॥ १३

---

१. ताडकायाः अस्वनिलः प्राणवायुः तस्य अहिरिव सर्प इव इषुर्बाणो यस्य सः २. स्मयो दर्पः। ३. अहल्याया अंहांसि दुरितानि तेषां नगः पर्वतः महान् समूह इत्यर्थः, तस्य पविः वज्रमिव। ४. निवापः पितृभ्यो जलाञ्जलिदानम्, तस्य विधिः तस्मिन् सता निरतिशया निष्ठा यस्य सः। ५. शरभंगेण मुनिना सभाजितः पूजितः। ६. यतिच्छद्मना कपटयतिवेषेण रावणेन हृता प्राणेभ्योऽपि प्रिया अङ्गना यस्य सः ७. दयितायाः विरहेण नितरां पीडिताः ये निखिलाः कामिनस्तान् विडम्बयतीति तादृशः।

पंपातीरस्मृतप्राणप्रेयसीशोकविह्वलः
हनूमद्दर्शनप्रीतः सुग्रीवकृतसौहृदः १४
प्रियोत्तरीयभूषेक्षास्पर्शानंदनिमीलितः
सप्ततालभिदुद्दामवालिहृद्भेदनिष्ठुरः १५
सुग्रीवार्पितराज्यश्रीरंगजांगदवत्सलः
प्रियान्वेषणनुन्नर्क्षकुंजरप्लवगर्षभः[1] १६
स्तुततीर्णाब्धिदृष्टार्थदग्धलंकांजनांगजः[2]
नैकर्क्षवानरचमूशतकंपितभूनगः १७
शरण्यः शरणप्राप्तबिभीषणकृतोदयः
सेतुकृत्तीर्णवाराशिः सामार्थप्रहितांगदः १८
रक्षःकक्षमहादावो मेघनादांतकानुजः
कुंभकर्णाद्रिवज्रेपुर्दशास्यगजकेसरिः १९
दत्तदिव्यप्रियोपेतः पुष्पकाक्रमितांबरः
गुहविश्लेषतापघ्नो भरद्वाजाप्तसद्वरः २०
भरतप्रियकृद्राजपौरगुर्वभिषेचितः
अगस्त्यादिमहर्ष्यीड्यः सर्वप्राणिहितोद्यतः २१
कृतप्रजातिकल्याणो व्यसुविप्रात्मजासुदः[3]
शत्रुघ्नघातितात्युग्रद्विजारिलवणासुरः २२
त्रिजगद्गीतसत्कीर्तिरेकदुर्मतिनिंदितः
संत्यक्तसत्वसंपन्नोदारदारसमागमः[4] २३
प्राचेतसाश्रमप्राप्ततेजःकुशलवात्मजः
अश्वमेधोत्सवावाप्तवाल्मीकिच्छात्रनंदनः २४

---

१. प्रियान्वेषणार्थं नुन्नः प्रेरितः ऋक्षकुञ्जरो जाम्बवान् प्लवगर्षभाः वानरश्रेष्ठाश्च हनूमत्प्रभृतयो येन । २. स्तुतः तीर्णाब्धिः दृष्टसीतारूपार्थः दग्धलङ्कश्च अंजनांगजो हनूमान् येन । ३. व्यसवे मृताय विप्रात्मजाय असून् ददातीति तादृशः । ४. संत्यक्तः परित्यक्तः सत्वसंपन्नानां आपन्नसत्वानामुदाराणां च दाराणां सीताया इति यावत् भार्यायाः समागमो येन सः ।

भूयोदिव्यमहीमग्नमहिलाविरहातुरः
पुत्राष्टकपृथग्दत्तराज्यः प्राज्यप्रसादकृत् ॥ २५
शासनातिक्रमत्यक्तप्राणात्यधिकलक्ष्मणः[1]
विहितस्वयशस्तुल्यप्रभंजनसुतास्थितिः ॥ २६
आर्केंदुभूमि[2] स्वकथाबिभीषणकृताभयः
सुहृद्भरतशत्रुघ्नसुग्रीवात्मगतिप्रदः ॥ २७
सर्वसत्वप्रियः पौरस्थितिसंतानलोककृत्
विमानारोपिताशेषराष्ट्रायोध्याजनः प्रभुः ॥ २८
पवित्रसेव्यचरितो निगमाद्यैकविस्तुतः[3]
नमन्मयूरमुदिरः[4] पुण्यश्लोकशिखामणिः, ॥ २९
इति श्रीरामभद्रस्य नाम्नामष्टोत्तरं शतम्
रामायणपयोराशेरुद्धृतं परमामृतम्. ॥ ३०

श्रीरामो जयति ॥

---

१. शासनातिक्रमादाज्ञाभङ्गाद्धेतोः त्यक्तः प्राणेभ्योऽपि गरीयान् लक्ष्मणः येन। दृश्यतां कथाविज्ञानाय रामायणस्योत्तरकाण्डस्य पञ्चाधिकशततमः सर्गः। २. आर्कैन्दुभूमि यावत् सूर्यः चन्द्रमाः पृथिवी च तिष्ठन्ति तावदित्यर्थः। ३. निगमैः ऋगादिभिः आद्यकविना च स्तुतः। ४. नमन्तः भक्ता एव मयूरास्तेषां मुदिर इव मेघ इव निरतिशयानन्दजननः। अथवा कविपक्षे। नमन् प्रणतो यो मयूरकविस्तं मोदयतीति तच्छीलः।

# रामस्तुतिः*

(औपच्छंदसिकं वृत्तम्)

रघुनाथ! दयां कुरु प्रपन्ने मयि दीनेऽलसमेनमद्य मुंच
सदयः सदय[1]स्त्वमेव किं ते मुनिगीतं न यशः श्रुतं पवित्रम्. १
असदंतकराः शराः खरास्ते यमदंडाल्सततं सतां सहायाः
किमदो विमदो न यन्मनोभूरतनुः शर्वदृगग्निना कृतोऽपि. २
ग्रसते त्वदिषुर्द्विषं न राहुः स तथेंदुं कवयो नरेश्वराहुः
जहि रोषमरिं सतामलं का सरुषो हंत धियोऽपि राम! लंका. ३
यदि वानरसख्यमेवमीड्यं किमु वक्तव्यमहा नरैस्तदेभिः
[2]अधिसंसृतिसिंधु सेतुमेकं कुरु [3]भोः! किं स्वकृते कृतेन तेन? ४
विरहे न पितापि सांत्वितो यो विलपन्नेव मृतस्त्वदेकचित्तः
अहमज्ञतमस्तमद्य याचे [4]तृणवत्त्यक्तसदंगनानुजं त्वाम् ५
न हि तन्न हितं नतैर्यदीश! स्मृतमेकं खलु तावकं पदाब्जम्.
भ्रमरैर्भ्रमरैरिवातिलुब्धैः परिपीतं मुनिभिश्च राजहंसैः. ६
न फलं विषयाः फलं तु दास्यं तव जंतोर्वरमत्र जीवनस्य
तदृते न [5]दृतेरिवास्य राम! क्षणमप्युच्छ्वसितं सतां प्रशस्यम्. ७
दुरितोदधितो [6]दरप्रयत्नान्मुनिदारान्दयया यदुज्जहार,

*. अत्र कविः संसारदावानलदग्धः स्वसमुद्धरणायोपास्यं दैवतं श्रीरामचन्द्रं स्तौति रघुनाथेत्यादिना। भवाटवीपरिभ्रमणपरिखिन्नश्च स्वोद्धारे बिलम्बमसहमानो दुरितवारिधित्वमात्मनोऽत्र निदानमाशङ्कमानश्च श्रीरामचरितादेव बहून्युदाहरणानि समुपन्यस्य "पापिनामुद्धार एव ते व्रतम्, अहं च तेषामग्रणीः तन्मामपि द्रुतं समुद्धर" इति च विज्ञापयति। १. सतां अयः शुभंकरः। २. भवसागरे इत्यर्थः। ३ हस्तदोषः-भो। ४. तृणवत् त्यक्तौ सदंगना पतिव्रता सीता अनुजश्च लक्ष्मणो येन सः। ५. दृतिश्चर्मभस्त्रा। यथा भस्त्राया उच्छ्वसितमकिंचित्करं तथा तव दास्यादृते जन्तोर्जीवनं निष्फलमित्यर्थः। ६. दरप्रयत्नात् अल्पेनैवायासेन।

पदपद्मरजस्तवास्तु तन्मे [1]नतरक्षाविकलं कलंकनुत्यै. ८
वि[2]षयप्लवगैश्चलस्वभावैः सह सख्यं गतमेनमात्मतुल्यम्
रहितं प्रिययापि शुद्धवृत्त्या बत सत्या व्यसनेऽव मां नृपाल(म्?) ९
वितर[3]त्वमृतं करैरनेकैर्न जडात्मानमहं भजेऽपि तस्य:
अमृतं तव नाम पातुमीहे यदभूच्छूलभृतोऽपि तापशांत्यै. १०
बहवः सवितुः कुले प्रसूतास्त्वमलं तेभ्य उतापि गोत्र[4]कर्तुः
द्विकरोऽप्यकरोः समूलमेको जगतां तापतमःक्षयं स्वयं यत्. ११
सुधियो युधि योधमूर्धरत्नं विकिरंतं विशिखानरिष्वसुघ्नान्
करुणं तरुणं पुराणमाहुर्नरमीशं कथमुग्रमक्रुधं त्वाम्? १२
परिपालय मामनाथमार्तं भवरोगेण [5]नसोढवेदनेन
सुखयत्युदितश्चकोरमिंदुः कमलं भानुरथो मयूरम[6]ब्दः १३
तव भक्तजनेन मत्सदृक्षाः शुचिनोदारतरेण निस्तुलेन
विपदोऽत्र समुद्धृताः प्रभूताः किमदो राघव! विस्मृतोऽहमेकः? १४

---

१. नतानां भक्तानां रक्षायां रक्षणे विकल सर्वदा व्यापृतं प्रयतमानमिति यावत्। २. यथा त्वं शुद्धवृत्त्या पतिव्रतया सीतया विनाकृतश्चलस्वभावैर्वानरैः सह सख्यमकरोस्तथाहमपि शुद्धवृत्त्या सदाचारेण रहितश्चंचलैर्विषयप्लवगैः सख्यमकरवम्। तदात्मसब्रह्मचारिणं मां हे नृपाल त्वं रक्षेति योजनीयम्। शुद्धवृत्त्येति पदं श्लेषेण योजनीयम् ३. जडात्मा डलयोरभेदाज्जलात्मा चन्द्रः। जडस्वरूप इति ध्वनिः। चन्द्रः अनेकैः करैः किरणैः अमृतं वितरतु। तस्योऽप्यहं तं जडात्मानं जलात्मानपीति अपिशब्द आवृत्त्या द्वियोज्यः। न भजे। यत्तव नाम शूलभृतोऽपि शशिशेखरस्य शिवस्यापि तापं शममनयत्तत्ते नामैव मेऽमृतं तदहं पातुमिच्छामीत्यर्थः। अत्र शशिनामृतवर्षिणा शूलभृतः शिवस्य तापो न शान्तिं नीतः स च तव नाम्ना नीत इति शशिनोऽपि ते नाम गुणवत्तरमिति व्यज्यते। ४. गोत्रकर्तुः मूलपुरुषात्सवितुरित्यर्थः। ५ न सोढा नसोढेत्यत्र नशब्देन सुप्सुपेति समासः। ६. अब्दो मेघः। कविपक्षे तु ध्वनिना घनश्यामो राम इत्यर्थ। १३. "यशसा च जनेन मत्सदृक्षाः शुचिनोदारतरेण तेऽतुलेन"। इति साधुः पाठः। (**मयूरकविः**)।

[1]अहिषूग्रमरं गरं तमस्ते न परोत्कर्षसहाः सुराः समस्ते
भुवने परिदर्शितः समस्ते समनुक्रोशभरः प्रभो! नमस्ते. १५
कृपया नृप! याः स्वधाम नीता विरहं सोढुमनिष्ठुराः प्रजास्ताः
अयि भो! मयि भोगलालसे तत्कठिनत्वं त्वयि वा किमत्र युक्तम्?
यशसा विमलेन सन्मतेनापि च गीतेन मुनीश्वरेण तेन
कथमार्यमुखात्तदादृतोऽहं परिपीतेन न पावितोऽस्मि पापः? १७
कलिना प्रबलेन राहुणेंदोरिव तेजो यशसस्तवापि पीतम्,
कथमेवमहं ब्रवीम्यशंकं बुधशिष्योऽपि च सत्स्वदो विगीतम्? १८
[3]यशसाप्यचिकित्स्य एक आहोस्विदहं निस्तुल एवमेव दोषी,
न सतां मतमेतदप्यसारं विषहेद्धाम तमो न गाढमार्कम्. १९
कुरु यत्सदृशं व्रतस्य लोके यशसश्चापि सुविश्रुतस्य तस्य
किमतोऽधिकमेष दीनबंधो! गतिमंधो गहने न वेत्ति दीनः २०
शमनं न हि पश्यति प्रभो! त्वां [4]शमनं तं लभते जनः प्रपन्नः
असकृच्छ्रुतमित्थमार्यवक्त्रात्सदसि स्वादुवचः सतां सुधातः. २१
अनवद्यगुणार्य राम! भोः! किं बहुनोक्तेन पदोपकंठमेत्य,
स्वदृशः सदृशः प्रभो! भवेद्यः कृपणे त्वं मयि तं कुरु प्रसादम्. २२
नमदुद्धरणं सुदुष्करं ते मृतमुज्जीवयतः शिशुं द्विजातेः
दृषदप्यतिसुंदरी कृतैव प्रभुणा किं न वचः श्रुतं शुनोऽपि. २३

---

१. अहिषु सर्पेषु उग्रं गरं अलं प्रभूतमस्ति । अतस्तेऽहयस्तमः तमस्स्वरूपाः सन्ति । सुराः देवा अपि परोत्कर्षसहाः न । अतस्तेऽपि तमःस्वरूपा इत्यर्थः । किन्तु हे प्रभो, ते समनुक्रोशभरः कारुण्यभरः समस्ते भुवने समः । दृश्यते इति शेषः। नागलोकात्स्वर्गलोकाच्च मर्त्यलोक एव ते कारुण्यभरात्प्रशस्त इति भावः। २. तस्मिन् यशसि आदृतः आदरयुक्तः आर्यमुखात् सद्भ्यः त्वद्यशः श्रुतवानप्यहं न पावितोऽस्मीति योजना । ३. अहं तथा दोषैर्वातपित्तकफैः पातकैश्च व्यापृतशरीरः यथा तव यशोऽपि मे व्याधिं न प्रतिकुर्यादिति यत्सतां मतं तदसारं न सारवदेवेत्यर्थः । किंतु आर्कं धाम सवितुस्तेजः यथा गाढं तमः न विषहते तथैव तव यशसा अहमपि समुद्धर्तव्य एवेति भावः ४. शमनो यमः तम् । मरणमित्यर्थः ।

वशमा[1]हतमिंगितज्ञमाज्ञाकरमप्याकुलयंति मामनाथम्
अनयं जनयंति राम! कामप्रमुखा हंत कथं भवत्पुरेऽपि ॥ २४

न जने भजनेऽलसः प्रमादीत्यपटुर्वेत्त्यघदृग्वरं[2] मयीश!
न हि तैरहितैरयं न बद्धः कथमेवं सति किंकरः करोतु. ॥ २५

द्विषता दशकंधरेण रुद्धा पुरि शुद्धा दयितापि सा तदानीम्
भवतो भजनं किमीश! चक्रे स च नक्रेण वशीकृतः करींद्रः. ॥ २६

चरणस्मरणं सदा न दासस्तव कर्तुं क्षम उत्सुकोऽप्यभाग्यः
सुतनप्तृमुखानुवर्तिना यन्मनसांतर्बत यंत्रितोऽस्वतंत्रः. ॥ २७

स्मरणं शरणं ममेति युष्मच्चरणाब्जस्य न चान्यदस्ति जाने
बहिरंतरपि द्विषन्निरुद्धोऽप्यहमार्तोऽर्तिहरं क्वचित्स्मरामि. ॥ २८

द्विरदे चिरदेवनाभितप्तेऽस्युचितश्चेत्करुणाकटाक्षपातः
पद एव स शत्रुणा गृहीतः प्रबलैः षड्भिरयं तु सर्वतोऽपि. ॥ २९

बहुवारमहं द्विषद्भिरुग्रैरसहे पातित एव गर्भगर्ते
शृणु देव! तदेव कृच्छ्रमाप्तोऽमितकल्पानधुनापि तत्र वर्ते. ॥ ३०

द्विषतोऽप्यनुजे कृतः प्रपन्नेऽथ च सुग्रीववलीमुखे प्रसादः
दरसा[3]दरसात्त्वया तथा मय्यपि दीने स सदार्य! कार्य एव. ॥ ३१

रिपुभिः कृतगंजनं जनं कः कृपणं स्वं शरणं भियासमार्यः
सदयः परिपालयेन्न शक्तः स्वनुरक्तः सुकृते नये यशोर्थी. ॥ ३२

कुपितोऽसि किमागसा न साधुः कृतमंतौ प्रणते जनेऽप्रसन्नः
नमनादितरन्निसर्गसिद्धं किमिवार्येश! न पापिनामसन्नः ॥ ३३

शरदा वरदाधिराज! कृत्स्नः पयसो वार्यत एव मंक्षु पंकः
तव तूदितया दृशाऽतमस्कः क्रियते चंद्रिकयेव सर्वरंकः ॥ ३४

पिबतोऽखिलतापपापहंत्री तव कीर्तिर्द्रुतमेव सत्सुधातः

---

१. कामप्रमुखाः वशमनाथमपि मामाकुलयन्ति अनयं च जनयन्तीति योजना २. अघदृक्षु पापिषु वरं श्रेष्ठम । तैः अहितैः अयं बद्धः न इति न इत्यन्वयः । ३. दरस्य भयस्य सादो नाशः तस्मिन् यः रसः प्रेमा तस्माद्धेतोः, हे आर्य! सदा त्वया दीने मय्यपि स प्रसादः कार्य एवेत्यर्थः ।

अपि चेशशिरोधिदेवतातः श्रुतमुच्चैरिति हंत सत्सुधातः ३५
जहि मामहिमावहं विभो! मां जनमेवंविधमन्यमप्यवद्यम्
अयसा हि विना सुवर्णहेतोर्न गुणः स्पर्शमणेः प्रसिद्धिमेति. ३६
सुकृतं न किमस्य पंकमग्नामबलां गां विपदः समुद्दिधीर्षोः
मृतिभीतमरिं तृणास्यमाजौ जयिनस्त्वादृश एव पालयंति ३७
करुणावरुणालय! प्रभो! स्यान्मम किं स्वर्गसदां जडेन तेन
तरुणा तरुणार्कतप्तमूर्तेः सरसाल्पेन गजस्य वा भवेत्किम्. ३८
शिलया कपिभिर्निशाचरेण द्विजराजेन महेश्वरेण सेव्यः
त्वमितीश! भवंतमाश्रितोऽहं ससुरा मुक्तिमितास्त्वयैव देव्यः. ३९
सहितं प्रियया श्रियात्तमूर्त्या महितं भूपमुनींद्रदेववृंदैः
रहितं विगुणैः सदा गुणाढ्यं स्वहितं राम कमन्यमाश्रयामि. ४०
अयि! तं श्रित एष इंदिराया दयितं त्वामहमाद्यमीश्वराणाम्
मयि तंत्र इहाप्यशर्महासं शयितं तर्तुमघाब्धिमद्य विश्वम्. ४१
मनसि स्मृतिरस्तु तापहंत्री वदने नाम भवामयौषधं च
श्रवसी च वशीकरोतु कीर्तिस्तव सीतादयितेति मे मनीषा. ४२
वरदेश्वर! देव! देहि दास्यं दयया दर्शय पादपद्ममाशु,
अयनं नयनं विपक्ष्मपातं तव गोर्वत्सवदेव पश्यतीश! ४३
स्पृशता दृषदं पदेन युक्तं दयितां भूमिभुवं सदा हृदा ते
बत बाहुयुगेन धन्व चैशं कुत आसं कठिनत्वमार्यदृग्भ्याम्. ४४
न जनं व्यजनं प्रियागृहीतं सरसोशीरसरोजपत्रक्लृप्तम्

---

१. हे विभो अहिमावहं सन्तापकरं मां तथा चान्यमपि अवद्यं दुष्टं जहि। पापिनां सत्त्वं च जगत्यवश्यमित्याह। अयसेति। सुवर्णहेतोः स्पर्शमणेः सत्त्वेऽपि अयसोऽभावे तस्य गुणः प्रसिद्धिं नैति। तथा मादृशां पापिनामभावे नमदुद्धरणाख्यस्तव गुणः प्रसिद्धिं नोपेयादिति भावः। २. तृणमास्ये यस्य सः प्रपन्न इति यावत्। इयं लोकोक्तिः। ३. 'स्वर्जनुषा' इति पाठान्तरम (कविलिखितम्)। ४. "गुणैर्युतं कं स्वहितं त्वाद्य विना" इति पाठान्तरम्। ५. विगतः पक्ष्मपातः अक्षिनिमीलनं यस्मिन् कर्मणि। ६. धन्व धनुः।

सुखयत्यतितापतप्तमाप्तोत्तम ते नाम यथा कथोपनीतम्. ४५
सततं यदि दीनबंधुरेतद्बहु ते संमतमात्मनाम राम!
अयि! किं मयि किंकरेऽपि दीने करुणां कर्तुमियान्कृतो विलंबः. ४६
नवतामरसेन भृंगपोतस्तृषितो राम! यथा व्यथाहृतेण
भवताऽमरसेव्यपादुकेन स्वगुणैस्तोषकरैर्वशीकृतोऽहम्. ४७
तव नाम [1]भवदृते सुदूरादपि चेत्कर्णमुपैति सज्जनेन
उदितं मुदितं करोति चेतो दयितायाइव वाचिकं[2] प्रियस्य. ४८
धनिनः सुखिनस्तवैव नाम्ना परतः प्राकृततो धनादनित्यात्
धनिका न निकाममोदपात्रं जठराद्बिभ्यति ये स्वकादपीश! ४९
भवतो भवतोषदेन नाम्ना भिदुरेणामृतगर्वपर्वतस्य
भवतोऽ[3]भव तोकमात्मनोऽहेरिव मोच्यः स्वहितेच्छुनाहमज्ञः. ५०
तव सद्भिरुपास्यैकरुदारैः सदयैराप्ततमैरुपेक्षितः किम्
न[4] विनश्यदुपेक्ष्यमस्य कार्यं त्विति यत्सा खलु पत्युरत्युपास्तिः ५१
रहसीश निपीयते[5] प्रसादामृतमाकंठमिता मुदं हि संतः
वितरंति न मह्यमीषदेते बत कुक्षिंभरिरीतिमाद्रियंते. ५२
सकृपाः कथमार्तमत्यशक्तं कृपणं मां शरणागतं न पांति
अमिताम्न दयामृतादुदारा अपि दातुं कथमीषदुत्सहंते. ५३
विभवेऽधिगतेऽमिते सुहृद्भिर्न समं केवलमेव साकमन्यैः
कृपणैरहितैरपि प्रकामं सुखमार्येश्वर! साधवो भजंते. ५४
त्वमुदारवरः कथं सखायस्तव सख्युर्ननु नो समानशीलाः
मयि तेऽत्रभवान्कृपाविवार्ये बत बुद्धं ह्युभयेऽपि तुल्यलीलाः ५५
यदि नाथ! गतोऽसि साकमिष्टैर्वरमस्मान्कृपणाञ्छ्छूतान्स्वमेव

१. भवदृते भवद्दर्शनं विनापीत्यर्थः। २. सन्देशः। ३. अभव अज इति संबुद्धिः। आत्मनः तोकमपत्यं अज्ञः अहं स्वहितेच्छुना त्वयैव अहेरिव भवतः संसारान्मोच्य इति योजना। ४. विनाशं गच्छत् अस्य भगवतः कार्यं न उपेक्ष्यम्। सद्भिरिति शेषः। मा हि पत्युः ते अत्युपास्तिः परमोपासनेत्यर्थः। ५. निपीयते इत्यस्य सद्भिरिति कर्तृपदम्।

ननु पालयिता कृतोऽत्र कः स क्व च किं चानिलनंदनोऽपरो वा. ५६
स तु संप्रति गंधमादनाद्राविति नाथ! श्रुतमस्तु नः किमूनम्
परमेकमिहान्यसर्वकार्यस्मृतिरोधि व्यसनं हि सद्भिरुक्तम्. ५७
स हि किंनरचारणादिगीतं मुनिभिः साकमुदश्रु मीलिताक्षम्
सततं चरितामृतासवं ते पिबति त्यक्तभयोऽस्मृताखिलेहः ५८
श्रुतमेवमपीह यत्र नाम्नस्तव संकीर्तनमेष तत्र तत्र
रचितांजलिरश्रुपूर्णदृक्चेत्यपि वाल्मीकिमुनेर्न गीरपार्था. ५९
अयि नाथ! कथं नु तर्हि साधुर्बत सोऽद्यापि कपिर्मया न दृष्टः
यदि पातकनष्टदृष्टिरस्मि प्रतिमां तेऽहमहो कथं पिबामि? ६०
स्वजनो वरमात्मनः प्रियत्वात्प्रतिमातः किमितीश! चेत्तथास्ताम्
भवतो भवतोषदाच्च नाम्नोऽप्यधिकः किं श्रवणोत्सुकोऽस्मि दीनः. ६१
अधिको निजनामतो मतोऽयं स्वजनस्ते यदि तर्हि राम! तेन
क्षमिणातिदयावताथ सद्योऽखिलतापापह! कीर्तनेन भाव्यम्. ६२
अलमोमिति चेत्कथं न नाथ! द्रुतमद्याप्युपयाति हंत पातुम्
असकृद्धि पुरा स्मृतस्तदास्तामधुनैवापि तु चेतसा स्मरामि. ६३
अयि कीशवराद्भवर्थ! साधूत्तम! सीताहृदयव्यथौषधोक्ते
रघुवीर! यशःसुधाकरस्य त्वमनंतोऽस्यनवद्यपक्ष एषः ६४
अधुनापि च संस्तुतो न चास्यां स कवींद्रो[3] मुदितः स्तुतौ कथं स्यात्
इति वाच्यमहो यतोऽधिकस्ते भजकस्त्वत्त उदार आशुतोषः. ६५
कृतयैव यया कयापि नुत्या मुदमाप्नोषि विभो! भजज्जनेन
किमु योऽभ्यधिकः कृपालुरार्यो भवतो भागवतो मतोऽतिसाधुः. ६६
भगवन्! स[4] समीरसूनुरार्यस्त्वयि ते नाम्नि च साधुमोदधाम्नि
परमादृत इत्यवैमि तद्वत्स्मरतामुद्धरणेन नूनमद्य. ६७
स समीरसुतः कृतप्रयासः सुतरां संप्रति साधुविश्रमार्थम्
सखिभिश्चरितासवं तवालं परिपीयाद्य सुखं समं नु सुप्तः. ६८

---

१. महद्भिरिति पाठान्तरम्। २. अमत्या। ३. वाल्मीकिः । ४. स इत्यपेक्षितमपि मातृकाद्वयेऽपि न दृश्यते ।

न कृतः खलु लक्ष्मणेन देव्या भवता वाऽत्र सुहृन्मणौ प्रसादः
कथमेष न खिन्नमानसः स्यादनुरूपामनवाप्य सत्कृतिं स्वाम्. ६९
स हि कष्टभुगेव देव! नीता इतरे तु स्वपदं सहैव सर्वे
न कुशस्य[1] लवस्य वाप्यमात्येष्वपि ते हास्यपदः कृतो महात्मा. ७०
अथ किं बहुना[2] भवान् दयालुर्न कृतज्ञो न वरप्रदो न चाप्तः
त्यजता[3]नुजदारमारुतींस्ते कृतिना किं सुकृतं कृतं कृपालो! ७१
न भवाश्च भवज्जनोऽपि दीनेष्वशुचिष्वद्य कलाववद्यकाले
करुणो वरदं कृतज्ञमेकं तव तेषामपि नाम राम! कामम्. ७२

इति श्रीरामे स्तवोऽर्पितोऽयम् ।

---

# रामनाममहिमा

(गीतिवृत्तम्)

राम! तव नाम हित्वा मंत्रानन्याञ्जपञ्जनो मंदः
त्यक्त्वा चिंतारत्नं गृह्णन्नितरान्मणीन्कथं सुज्ञः. १
तव नाम्नैव कविमुखं भाति न चान्येन शब्दशास्त्रेण
अशिवमसिंदूरतिलकमपि रत्नभृद्देव सुभ्रुवो वदनम्. २
यो नाम वज्रकवचं तव चंद्रकलावतंसनुत! धत्ते
रघुनाथ! जगति सकले स कलेरतिदुःसहः पुमानेकः. ३
अपि यस्मै कस्मैचिज्जपते दीयंत एव नाम्ना याः
दातुमलं ताः सिद्धीरधिकारापेक्षिणो हि नाम्नायाः[4]. ४
मज्जयति श्रितमितरा जनमजकुलतिलक! का न नौकाऽस्ताम्
तर्तुं श्रिता वयं यां पदयुगलीं ते सकाननौकास्ताम्. ५

---

१. हनूमतस्त्वया कुशस्य लवस्य वा मन्त्रिषु पदं न दत्तमिति भावः । २. "भवान् कृतज्ञो न दयालुर्न" इति पाठान्तरम् । ३. अनुजः लक्ष्मणः, दाराः सीता मारुतिश्च तांस्त्यजतेति योजनीयम् । ४. आम्नायाः वेदाः ।

स्फुटतु शतधा श्रुते त्वयि यन्नाश्रुस्नपितमेवतत्तूरः.
धत्तेऽभक्तः[1] पशुरपि नृत्वं कनकत्वमिव स धत्तूरः.  ६
भूर्तिं बिभर्ति तनुते गतिमपि च वृषेण सत्यसुप्रियकृत्
कामं हरति हरति ते नाम श्रीराम वैश्रवणमित्रम्.  ७
पिबतः सुरभेः स्तन्यं वत्सस्याण्वपि तथा न राम! हितम्
अन्तोर्नाम यथा तेऽप्यमरा न पिबन्त्यदो न रामहितम्.  ८
नाम्नीवाप्नोति न शं कारुण्यनदीन[2]! मातुरंकेऽपि
नाम्नोऽन्ये त्रातुमलं लोकेषु न दीनमातुरं केऽपि.  ९
प्राप्य तव नाम निर्वृत्तिमेति यथा मातुरुरसिजं बालः
मंचोऽपरः पिपासोरिव लिप्तः काममुरसि जंबालः[3].  १०
मातुः स्तन्येन यथा बालास्त्यक्तास्तवार्य! नाम्ना ये
स्पष्टं तदितररस इव शक्तिस्तांस्त्रातुमस्ति नाम्नाये.  ११

इति रामनाममाहिमा[4] ।

---

# रामाष्टकम्

## (प्रथमम्)

(स्रग्विणीवृत्तम्)

यत्प्रसादाद्विषद्बन्धुरप्यद्भुतं राज्यमिंद्रादिभिर्दुर्लभं शाश्वतम्
प्राप कृत्वा सकृत्पादयोर्वंदनं चिंतयामः सदा तं सदानंदनम्[5]
सज्जनानां प्रियं दुर्जनानामपि स्वांतसंतोषदं स्वाश्रितानां समम्

---

१. यथा धत्तूरः कनकस्य सुवर्णस्य सर्वानपि पर्यायान् धत्ते न तु स तत्त्वतः सुवर्णं तथैव अभक्तः पशुपदवाच्योऽपि वृथैव नृत्वं धत्ते । २. नदीनामिनः स्वामी । कारुण्यनदीनः करुणासमुद्र इति यावत् । ३. जंबालः पंकः. ४. अस्य प्रकरणस्य नाम न कविलिखितमुपलभ्यते । अस्माभिरेव प्रकरणार्थमनुसृत्य नामैतत्कल्पितमिति ज्ञातव्यं सहृदयैः । ५. सतामानन्दनं श्रीरामचन्द्रम्.

सर्वतापप्रणाशक्षमं चंदनं चिंतयामः सुमित्रासखीनंदनम्. २
पुत्रतामेत्य चक्रे खरांशोर्विधोर्यो जयं तस्य न स्वामिनोप्युच्चकैः
जन्मदात्सर्वलोकेषु दिक्स्यंदनं चिंतयामः सदा तं रघोर्नंदनम्. ३
क्ष्माभृतां पालकं ह्यक्षमत्यद्भुतं चापबाणैकपाणिं तपस्विप्रियम्
एकपत्नीव्रतं विश्वसंक्रंदनं चिंतयामोऽजसूनोः[1] प्रियं नंदनम्. ४
सादरं यद्धनुर्ज्यानिनादो[2] गुरुर्नागभूदेवदेवांगनाराक्षसीः
गीतमध्यापयामास चाक्रंदनं चिंतयामोऽद्य सख्युर्हरेर्नंदनम्. ५
शिश्रिये यत्पुरोपाटवी[3] केवलं नैव सर्वर्तुभिर्योगिभिश्चोत्सुकैः
स्वर्गिभिश्चापि हित्वा प्रियं नंदनं[4] चिंतयामः सदा तं सदानंदनम्. ६
यन्मुखं[5] प्रेक्षतां नाकिनामेव नो विस्मृतं पक्ष्मभिर्भूगतानामपि
चित्रसन्मित्रतामीयुषां स्पंदनं चिंतयामः सदा तं सदानंदनम्. ७
अर्थिचेतश्चकोरामृतांशुर्मुखं साधु यस्यावदत्सर्ववर्णेष्वपि
एकमेवेति मय्यंगमानंदनं चिंतयामः सदा तं सदानंदनम्. ८

इति मयूरकृतं रामाष्टकम् ।

---

# रामाष्टकम्

## (द्वितीयम्)

(पुष्पिताग्रावृत्तम्)

**नवजलधरनीलमीड्यमेकं कलिमलनाशनकीर्तनं सुभद्रम्**
**प्रशमपरमुनींद्रगीतकीर्तिं दशरथनंदनमीश्वरं नमामि. १**

---

१. अजसूनोः दशरथस्य । २. गुरुर्यद्धनुर्ज्यानिनादो नागभूदेवदेवांगनाः गीतं राक्षसीश्चाक्रन्दनमध्यापयामास तं चिंतयामः इति योजनीयम् । ३. यत्पुरस्योपाटवी अयोध्याया उद्यानमित्यर्थः । ४. नन्दनवनम् । ५. "यन्मुखं प्रेक्षतां चित्रसन्मित्रतामीयुषां स्वर्गिणामेव नो विस्मृतम् । पक्ष्मभिर्भूगतानामपि स्पंदनम्" इत्यन्यः कविलिखितः पाठः ॥

जलरुहदललोचनं प्रशांतं पतितजनावनदक्षमीशितारम्
विपदघगिरिवज्रसारपादांबुजरजसं रघुनायकं नमामि. २
भजदखिलजनैककामकल्पद्रुममममलामितसद्गुणामृताब्धिम्
शिवहृदयनिवासमादिदेवं दशमुखकालमनंतमाश्रयामि. ३
सकरुणमवने रतं निजानामुरुभुजविक्रमनिर्जितारिदर्पम्
मुनिजननुतनीतिवर्त्मनिष्ठं परमपदप्रदमंतराश्रयेऽहम्. ४
शरधि[1]शरशरासनासिवल्लीधरमरिकाननदावमुग्रवीर्यम्
शरणदचरणं रणप्रचंडं विधिमुखमार्गितमुक्तिवर्त्म वंदे. ५
शुचिमुचितचरित्रमंचितांघ्रिं चतुरचकोरकचंद्रमिंद्रनाथम्
अचलमृ[2]चि गतं चराचरेशं चिरतरमच्युतमीशमानतोऽस्मि. ६
पवनसुतरथं ककुत्स्थनाथं विमलकथं चतुरास्यगीतगाथम्
कुशिकमुनिवशं नृपालवेषं प्रशमिततापमपास्तपापमीडे. ७
सुखकरमुरगेंद्रशय्यमार्यं वरदमुरुक्रममाश्रितामरद्रुम्
द्रुहिणगुरुमुदारमाद्वितीयं नुम उदरीकृतदीनमब्जनाथम्. ८

श्रीरामाष्टकम् ।

---

# रामप्रार्थना

भक्तास्ते धनमिति मया श्रुतं श्रुतेर्ननु राम
अतस्त्वातुमन्नानिशं यक्षीभूतं नाम ॥ दोहाछंदः । १
राम रघूत्तम रावणकाल! मयि प्रणते करुणां कुरु रंके
धर्मधनः सदयोऽसि समुद्धर मुंच न गामिह दुस्तरपंके
त्वां प्रणताहमृते जनमापदि पातुमलं जगतीश्वर कं के
त्वद्यशसा जित आधिमितो विधुरित्यपरेऽप्यहमेव न शंके २

—इदं सवयाछंदः

---

१. शरधी तूणीरौ च शराश्च शरासनं धनुश्चासिवल्ली खड्गलता च तासां धरम्. २. ऋचि वेदेषु गतं वेदवेद्यमित्यर्थः.

*



# अम्लानपंकजमालाबंधपंचकम्[*]

(स्रग्धरावृत्तम्)

धाता दाताविता त्वं गृह इह गहने लोकशोकघ्नकर्मा
  दीनानां नाथ! नान्यो [1]हृतनतपतनस्त्वां विना [2]विश्ववित्तः
[3]मायेशा ये न ये त्वामनु ननु मनुजास्तैः कृतं कृत्स्नकृत्यं
  वाविद्यावित्तविघ्नैर्बत! हतमतयो राम! वा मद्यमत्ताः. १
ज्ञानात्मानादिनाथः [4]स्वजनजयजनुः पावनो वर्ण्यवर्यः
  सेवा ते वासवार्हा किमुत मुनिमुदे राम! भूमन्! नमस्ते.
[5]कालं कालं बलं त्वद्भुजमज! न जहातीश! भो शर्वशक्ते!
  त्वं हंहो [6]हंत! हंता हरिररिहरिणो रावणोऽवद्यवर्त्मा. २
वीरो धीरो गुरो! त्वं शुचि[7]रुचिरुचितं सेवितुं विज्ञवित्तं

---

* स्रग्धरावृत्तपादे सर्वेऽपि यतिविभागाः समानाः सप्ताक्षराश्च । अतश्चित्रकाव्येष्वन्यतमस्याम्लानपंकजमालाबन्धस्य तदेवातीवोपकरोति । अस्मिन् हि द्वादश यतिविभागाः प्रतिश्लोकं तावन्ति पंकजानीति कल्प्यते । उद्धाररीतिस्त्वियम् । प्रथमस्यां पंक्तावक्षरमेकं द्वितीयस्यां त्रीण्यक्षराणि तृतीयस्यां च पुनरक्षरमेकमिति क्रमेण लिखिते एतान्येव पञ्चाक्षराणि सप्त सम्पद्यन्ते । प्रथमपंक्तिस्थितं प्रथममक्षरं, द्वितीयपंक्तिस्थितं मध्यमं द्वितीयमक्षरं, द्वितीयपंक्तिस्थितं प्रथम तृतीयं, मध्यमं चतुर्थं, तृतीयं पञ्चमं पुनर्मध्यमं षष्ठं, तृतीयपंक्तिस्थं च सप्तममिति वाचनक्रमस्तु इह योजितादुद्धारादर्शपत्रादवगम्येत । १. हृतं नतानां भक्तानां पतनं नाशो निरयगमनं वा येन सः । २. विश्वमेव वित्तं धनं यस्य तादृशः । ३. ये मायेशाः मायाधीनाः, ये च त्वदनुस्मरणेऽनुत्कण्ठाः तेषां नान्यत्किञ्चित्कर्तव्यं विद्यते । त हि अविद्यैव वित्तं तदेव विघ्नास्तैर्दूषितमतयो भवन्ति वा मद्यमत्ता वा भवन्तीति कथञ्चिद्योजनीयम् । ४. स्वजनानां भक्तानां जयस्याभ्युदयस्य जनुः प्रभवः । ५. कालं कालं सर्वदा बलं त्वद्भुजं न जहातीत्यन्वयः । ६. हंहो इत्याश्चर्यार्थकमव्ययम् । हन्ता हरिः मारकः सिंहः, निन्द्यकर्मा रावणस्तु अरिहरिणः । ७. शुद्धतेजाः ।

मोदाढ्यो दासदायः[1] खलबलविलयो भावनावस्तु[2] वश्यः
शांतोऽनंतोऽतितोषात्सममरमणे! भासि पासि स्वसिद्धः
साधुर्बंधुर्विधुर्भोः कुरु गुरुकरुणां सेवकेऽव स्ववत्सम्. ३
माने दानेऽवनेऽलं त्वमसि महिमनोमोहनो हर्षहर्म्यं
कीशादीशातिशातं सुरनरवर! ते ह्यादरादत्र दत्तम्,
स्वाचारं चापचारुव्रतमत इतरे त्वां न केऽनर्घ्यनम्राः
सेवां ह्येवांग वांछन्कपिरपि स पिनाकी सदा सख्यसक्तः. ४
स्वौजा[3] राजा प्रजानां त्वमतिमहिमहःपालको लब्धलक्ष्मो
भोगी त्यागी भंगी[4] सोत्सवनवसवको मंदकंदर्पदर्पः
आशानाशान्न शाठ्यं कृतमुत नतरां घात एतच्च तज्ज्ञै-
र्ज्ञातं तातं हितं त्वां जगुरगुरुगुरुं[5] ज्ञानिनो नित्यनिष्ठाः. ५

---

# मुक्तामाला*

(गीतिवृत्तम्)

पुण्यश्लोकशिखामणिचरणं[6] शरणं सतामतापकरम्
वंदे नतनरकपिसखमखलजितं मखभुजां महः प्रथमम्. १

---

१. दासस्य दायः पित्राद्यागतं धनम् । २. भक्तिमत्सु । ३. स्वयंप्रकाशः । ४. सिद्धिसम्पन्नः । ५. अविद्यमानः गुरुः श्रेष्ठः यस्य सः अगुरुः सर्वश्रेष्ठो गुरुरित्यर्थः । *. अष्टोत्तरं शतमपि रामायणानि विरच्य श्रीरामकथागानेऽतृप्त इव मयूरकविर्दाशरथिचरितादेव कियन्तश्चन प्रसङ्गान् क्रमेणोद्धृत्य विविधालङ्कारचमत्कृतियुतान् विधाय पञ्चदशेन शतेन गीतिभिः सहृदयेभ्य उपायनीकरोति । ६. तत्रादौ स्वचिकीर्षितखण्डकाव्यस्य निर्विघ्नपरिसमाप्तयेऽवश्यविधेयं मङ्गलमातनोति । पुण्यश्लोकेति । पुण्यश्लोकाः नलयुधिष्ठिरवैदेहजनार्दनाः तेषामन्त्यनिर्दिष्टोऽपि सर्वश्रेष्ठो भगवान् शेषशायी विष्णुस्तस्य चरणं वन्दे । तद्धि सतां सदाचाराणां देवादीनां शरणमाश्रयस्थानम् । न च तेषां कदाचिदपि तापमकरोत् । नतौ भक्तौ यौ नरोऽर्जुनः कपिश्च हनूमांस्तयोः सखायं मित्रवदुपकारकम् । खलाः दानवाः तैः अजितम् । मखं यज्ञं

वरदानव्रतवित्तं वंदे करुणासुधैकघनचित्तम्
निस्पृहनिर्भयवित्तं श्यामलमतिशायितदयितमनिमित्तम्. २

बहुभिः कृतं, चतुर्भिः पंक्तिरथः पुत्रिणामभूत्प्रथमः
बहुदानामपि, पुत्रौ धर्मार्थमसौ ददौ यदौदार्यात्. ३

गाधिज! भवतोऽधीतं शिष्यैः कतिभिर्न गालवप्रमुखैः
वरमेको दाशरथिः पिबतामुदधेरपोऽबुदो ह्यधिकः. ४

मातरहल्ये! स्पृष्टा येन पदा तमपि पूजयसि बालम्
नूनं स तव सतीर्थ्यः पदाहतोऽप्युरसि यो ननाम भृगुम्. ५

---

लक्षणया यागीयहविर्द्रव्यं भुञ्जते ते मखभुजो देवास्तेषामाद्यं महस्तेजः। एतादृशं भगवतो विष्णोश्चरणमहं वन्दे। अत्र राक्षसैर्विहतयज्ञत्वादनशना देवा भगवन्तं शरण्यं दानवानामजय्यमादिनारायणमासाद्य तुष्टुवुरिति रामायणकथाभागो व्यज्यते। एवमेवोत्तरत्रापि समुचितैर्विशेषणपदैरेव क्रमेण रामायणी कथोपनिबद्धा सा च रसिकैः स्वयं सुखमूहनीया। १. निस्स्पृहाः निर्भयाश्च ये साधवस्तेषां वित्तम्। २. बहुभिर्निर्गुणैः पुत्रैरलं तैर्न कोऽप्यर्थः सम्पद्येतेति भावः। पङ्क्तिरथो दशरथस्तु चतुर्भिरेव गुणिभिः पुत्रैः पुत्रिणां श्रेष्ठोऽभूत्। तथा बहुदानामुदाराणां त्यागिनामपि श्रेष्ठोऽभूत्। यतो यज्ञरक्षणार्थं विश्वामित्रेण याचितोऽयं पुत्रौ रामलक्ष्मणौ धर्मार्थं यज्ञरक्षणार्थमदात्। ३. विश्वामित्रस्य गालवप्रमुखाः प्रभूताः शिष्या आसन्। सततं गुरुपरिचरणबद्धादरैरपि तैर्न तस्माद्बलातिबलाख्ये द्वे विद्ये अधिगते। रामस्तु सुबाहुप्रमुखान्निहत्य विश्वामित्रमेकवारमेव सन्तोष्य ते अधिगतवान् इति तस्य गालवादिभ्यो बहुगुणत्वं सूच्यते। अनुभूतश्चायमर्थो लोके बहुशः। यथा राम एव विश्वामित्रादेते विद्ये लब्धवान् न गालवादयः। यतः जलनिधेर्जलं पिबतां मेघ एव श्रेष्ठः स एव सर्वेषामधिकतरं वारि लभते इत्यर्थः। ४. कतमो देवानां श्रेष्ठ इति पृष्टो भृगुर्वैकुण्ठं गत्वा शेषशायिनं परीक्षितुकामस्तं पदा जघान। भगवांस्तु प्रबुध्य तस्य पदं संवाहयितुमारेभे। तं च समुचितयार्चया सम्भावितवान्। एवमेवाहल्याऽपि पदा स्पृष्टं राममर्चन्ती कविना निर्दिश्यते। पदा स्पृष्टस्य पूजनेऽहल्या च भगवान् रामश्च सतीर्थ्यौ एकस्यैव गुरोरन्तेवासिनौ एकाचारौ चास्तामित्यर्थः।

अबलाकृष्टमपि सदसि धनुरैशं हा कथं नु भग्नमिति
भीतमिवानतकंधरमाश्लिष्य ददाविवाभयं भगवान्. ६
सर्वसहापि धनुषस्तस्य चकंपे रवेण घोरेण
बालापि भृशं मुमुदे सीता मृदुनेव वेणुनादेन. ७
गुरुणा योगं कर्तुं संजीविन्येव सीतयातुलया
सर्वमतेन विनाशश्चापेनांगीकृतः कचेनेव. ८
बहुभुजमारिमजयमिति किमनेन दैवं नु हेतुरत्रैकम्
ग्रसते सहस्त्रकरमपि काले राहुर्हि बाहुविकलोऽपि. ९
भगवन्वसिष्ठ! कथमिदमधुनैव मुहूर्तमीदृश दत्तम्
क्व वनप्रयाणमहह क्व च युवराज्याभिषेकमहकालः? १०
पंकेरुहदृशमध्वनि तं केवलमंगनानुजानुगतम्

---

१. ईशस्य शिवस्येदमैशं धनुर्बलान्नाकृष्टमपि अबलया सीतयाकृष्टमपीति-ध्वनिः। नु वितर्के। कथं नु भग्नमितीशकोपप्रसङ्गाद्भीतमानतकन्धरं च रामं भगवान् विश्वामित्र आलिंग्याभयमिव ददौ। धनुःसज्जीकरणाय कृतेनाल्पेनैवायासेन धनुर्भग्नम्। भग्ने च तस्मिन् शिवकोपमुत्प्रेक्ष्य भीतं रामं विश्वामित्रः साधुवादेन समाश्वासयदित्यर्थः। २. सर्वसहापि भूमिस्तस्य धनुषो घोरेण निनादेन चकम्पे। किंतु बालापि सीता मुमुदे। रामस्योत्तीर्णपणत्वमालोक्य तस्या आनन्दातिशयोऽभूत्। बालापीत्यनेन सुलभभयत्वं द्योत्यते। ३. यथा कचेन गुरुणा बृहस्पतिना सञ्जीविन्या योगं कर्तुं विनाशोऽङ्गीकृतस्तथा चापेनापि शर्वस्य मतेन गुरुणा रामेणातुलया सीतया योगं कर्तुं विनाशोऽङ्गीकृतः। चापभङ्गानन्तरं रामः सीतां पर्यणयदित्यर्थः। ४. हे जामदग्न्य, बहुभुजं सहस्त्रबाहुं कार्तवीर्यमहमजयमिति गर्वं मा कृथाः। तत्कुलविनाशे च दैवमेव केवलं हेतुः। अत्र दृष्टान्तः। बाहुरहितोऽपि केवलं शिरःस्वरूपोऽपि राहुः सहस्त्रकरमपि सवितारं पर्वण्यमावास्यायां ग्रसते। जितेऽपि कार्तवीर्ये रामस्ते जेतुमशक्य इत्यर्थः। ५. महः उत्सवः। ६. केवलमङ्गनया शुभाङ्ग्या सीतया अनुजेन लक्ष्मणेन चानुगतं पङ्करुहदृशं कमललोचनं रामं वनगमनोद्यतं वीक्षितुं द्रष्टुमङ्के स्थितं शिशुमपि विस्मृत्य स्त्रीभिर्धावितमित्यहं (कविः) शङ्के। धावितमित्यत्र भावे निष्ठाप्रत्ययः।

शंके धावितमीक्षितुमंके विस्मृत्य शिशुमपि स्त्रीभिः. ११
नृत्यन्मयूरपरिवृतमेणकुलानुगतमलिभिरुपसृष्टम्[1]
तं घनदूर्वापुंजश्यामलमब्जाननं भजेऽध्वन्यम्. १२
सौरावप्यमृतकरौ[2] यौ राजवरैः सदा शिरोधार्यौ
गौरासितौ वरमणी पौरा बत! हारितौ प्रमादेन. १३
मात्रा माऽत्राऽऽस्वेति[3] प्रहितो वनमालयान्निजं धर्मम्
पित्रापि त्रातुं यस्तं धर्मज्ञोत्तमं जगुः कवयः. १४
किमिति[4] निषाद! विषादः पश्य कुमारोऽयमर्ककुलपालः
वनमागतोऽपि वल्क्यपि जटिलोऽपि नृपोत्तमश्रिया श्लिष्टः १५
कुशली[5] तेऽस्ति कुमारो मा रोदीरम्ब तं बहोः कालात् ।

---

१. अहं अध्वन्यं वनेचरं तापसवेष रामं भजे । कीदृशम् । घनवन्मेघवत् श्यामलं नीलकांतिम् । अत एव घनभ्रान्त्या प्रमोदान्नृत्यद्भिर्मयूरैः परिवृतम् । तथा च दूर्वापुञ्जवत् हरिन्नीलमत एव यवसपुञ्जभ्रान्त्या एणकुलैर्हरिणसमूहैरुपसृतम् । तथा च अब्जाननं पद्ममुखमत एव पद्मभ्रान्त्या भ्रमरवृन्देनोपसृष्टम् । २. सूर्यवंशोद्भवावपि अमृतकरौ चन्द्राविति विरोधः । अमृतं नाम मोक्षः हस्ते ययोस्ताविति परिहारः । गौरो लक्ष्मणः स्फटिकश्च । असितस्तु रामः इन्द्रनीलश्चेति द्वौ वरमणी । ३. यो मात्रा कैकेय्या अत्र मा आस्स्व मा तिष्ठेत्यालयाद् गृहाद्वनं प्रहितः प्रेषितः । यश्च पित्रापि आत्मनो धर्मं दत्तपूर्वस्य वरद्वयस्यानुष्ठानात्मकं त्रातुं पालयितुं वनं प्रेषितः । तं रामं कवयः पण्डिता धर्मज्ञेषु श्रेष्ठं जगुः । पित्राज्ञापालनात्मकस्य धर्मस्यानुष्ठानाय रामो वनं वव्राजेति भावः । अत्र आस्व इत्येकसकारं रूपं सर्वत्र दृश्यमानमशुद्धम् । ४. हे निषाद गुह रामो राज्यं परित्यज्य वनमागतः इत्यत्र किमिति किमर्थं ते विषादः । विषादं मा भजस्वेति भावः । यतः पश्यायमर्ककुलपालः सूर्यवंश्यानां धुर्यः राज्यं परित्यज्य वनमागतोऽपि वल्कलधरोऽपि बद्धजटोऽपि नृपोत्तमश्रिया राजलक्ष्म्या श्लिष्टोऽविरहित एव । वनं गतं जटावल्कलधारिणमपि राजलक्ष्मीर्न त्यक्तवतीतिभावः । ५. सीतारामलक्ष्मणान् वनं प्रापय्य निवृत्तः सुमंत्रः कौसल्यामाह । हे अम्ब तपश्चरणेन कार्श्यं गता वनवासितपस्विनो रामदर्शनमेव परमं जीवितफलं मन्वाना एतावन्तं कालमवातिष्ठन्त । तत्तेषां तपश्चरणं सफलं भवतु । वनं गता रामादय ऋषिभिः सत्कृता इत्यर्थः ।

तृषिताः पिबन्तु वन्याः संन्यासिन उत्सुकाः सुकाश्र्यमिताः १६
[1]वर्ते पितुरुत्संगे संगे मातुः पुरे पुरेव सुखम्
इति भवदात्मजमतमत आत्मानं देवि! काननेऽमंस्थाः. १७
नं[2]दन वनं व्रजेति त्वमवोचः सत्यमजकुलोत्तंस!
स तु वनमगात्तमीक्षितुमविचार्य गतोऽसि नंदनं हंत! १८
अमृतमपि नाम पिबतस्तापो बहुलीभवत्यदः किमिति
प्रष्टुं नु दशरथ! त्वं दे[3]स्रावस्राकुलेक्षणो यातः. १९
[4]स्त्रैणं त्वामूचुरहो रहोगता मन्त्रिणो न मुनयोऽपि
साकममरपतिना के नाकेऽपि भवन्तमागतं वीक्ष्य. २०
शो[5]च्यासि त्वमयोध्ये!ऽपहृतमटव्या त्वदीयसौभाग्यम्
पतिमिच्छन्त्या भाव्यं त्वयापि मातर्विपक्षवेषयुजा. २१
[6]मा मातरमवमंस्था भरत! स्वगुणप्रकाशहेतुमिमाम्
सेकादधिकमशोके कुशलं पादाहतेर्यदि वरं सा. २२
विषयविरक्तिर्गुरुपदभक्तिरखिलसज्जनेषु महितत्वम्।
कत्थं सत्यं वद पदपद्मं मा जातु मातुरवमंस्थाः. २३

---

१. वने स्थितोऽप्यहं पितुरुत्सङ्गे वर्ते। मातुः सङ्गे सन्निधौ चास्मि। पुरे स्थित इव च सुखमनुभवामि। इति भवत्पुत्रो मन्यते। तत्किमिति हे देवि, आत्मानं कानन इव शून्ये गृहे वर्तमानममंस्थाः अमनुथाः। २. हे अजकुलोत्तंस दशरथ, त्वं पुत्रं रामं "नंदनवनं व्रज" इत्यादिष्टवान्। सोऽपि नन्दन-शब्दं सम्बुद्धौ वर्तमानमवगत्य वनं गतः। त्वं तु नन्दनवनं गतो मे पुत्रो भवे-दित्याशयाविचार्यैव नन्दनं स्वर्गं गतः। वनं गते रामे दशरथः पञ्चत्वमगमदिति भावः। ३. दस्रावश्विनौ देवभिषजौ। अस्रमश्रु तेन आकुले आक्षिणी यस्य तादृशः। ४. रहोगता मंत्रिणो मुनयोऽमराधिपेन सहिता देवा अपि त्वां स्त्रैणं स्त्रीवशंगतं वदन्ति। ५. हे अयोध्ये! त्वं शोच्या शोचनीया सम्पन्ना। यतस्त्वदीयं सौभाग्यं प्रकृष्ट-मैश्वर्यं श्रीरामरूपमटव्याऽपहृतम्। यदि त्वं पुनरात्मनः पतिमिच्छसि तर्हि त्वमपि विपक्षस्य सपत्न्या अटव्या वेषं धारय। रामेण परित्यक्ता अयोध्या वनवन्निर्जना शून्या च समभूदिति भावः। ६. हे भरत स्वगुणानां भ्रातृप्रेमादीनां प्रकाशस्य

मातः कैकेयि! जगति कृतिषु कृतोपकृतिषु त्वमेव वरम्
यदखिललोकहितं कृतमुररीकृत्यापि दुःसहं व्यसनम्. २४
कास्यान्यास्याब्जासवमधुपी[1] त्वत्तो नृपस्य बहुमान्या
दास्या हास्यास्पदतां सरले! नीतासि देवि! मन्थरया. २५
उदितं[2] नीतिमदमतं मुदितं सिद्धिं समीक्ष्य भोक्तुमलम्
उदितं फलमनयतरो रुदितं बत मंथरे! त्वया किमिति? २६
शोक[3]दवज्वलनावृतशुद्धांतवनैकसंश्रया मृग्यः?
बाष्पस्नातास्तिष्ठत जीवनदः क्व नु स सांप्रतं मृग्यः? २७
दीपक इव निःश्वासैर्नहि शोक[4]शिखी प्रयाति निर्वाणम्
बत! वर्धतेऽश्रुसलिलैरपि तूष्णीकैस्त्वयं सुखं जेयः. २८
चिंते! किं ते विषयैर्ध्यातैः क्षणभंगुरैर्विषादफलैः
दास्यति लब्ध्वा कामं कामं का मंगला मुदं संपत्. २९
मूर्तः सदयः सदयः सरसः सु[5]धैकपरिपूर्णात्

---

हेतुं कारणभूतामिमां ते मातरं मावमन्यस्व । यद्यशोकस्य सेकात्पादाहतेः प्रमदापाद-ताडनेनाधिकं कुशलं सद्यो विकसनरूपं भवति तर्हि सा पादाहतिरेव वरम् । एव-मेव मातुस्ते रामस्य वनं प्रति प्रव्राजन ते गुणानां प्रकाशस्य कारणमभूदतस्त्वया नेयमवमन्तव्येति भावः । १. अस्य नृपस्य का अन्या अब्जासवमधुपी न कापि त्वदन्येत्यर्थः । किंतु हे देवि सरले, त्वमनया दास्या मन्थरया हास्यास्पदतां नीतेति योजना । २. नीतेः कुटिलनीतेर्यो मदस्तस्य मत त्वयोदितमुक्तम् । सिद्धिं च प्रारि-प्सितस्य दृष्ट्वा त्वया मुदितम् । अधुना त्वस्यानयतरोर्भोक्तुमलं पर्याप्तं फलमुदितं प्रादुर्भूतम् । हे मन्थरे किमिति त्वया रुदितमिति प्रश्नः । ३. शोक एव दवज्वलनो वनवह्निस्तेनावृतं व्याप्तं शुद्धान्तः अन्तःपुरमेव वनं तदेव एकः संश्रयः आश्रयस्थानं यासां तत्सम्बुद्धौ । मृग्यः कौसल्यादयः । जीवनं ददातीति तादृशो मेघः । मृग्योऽ-न्वेष्यः । ४. शोकशिखी शोकाग्निर्निश्वासैर्नैव निर्वाप्यते । किंतु तूष्णीकैः शनैः-शनैः प्रवर्तमानैरश्रुभिरेव शमं याति । 'शोकक्षोभे च हृदयं प्रलापैरेव धार्यते' इति-वत् । ५. सुधैकपरिपूर्णात्सरमस्तडागादपि सरसो मधुरः आह्लादक इति यावत् । शमलं कल्मषम् । द्वितीयत्र शम् अलम् इति पदच्छेदः ।

शमयन्नमतां ममतां शमलं शमलं ददाति कोऽपि जटी. ३०
[1]कापि तपस्विजनानां तपसां सिद्धिर्महेशगलमाला
नीलापिलाधरमुपहसति गुणैरिंदुमपि पयोधिमपि. ३१
[2]अवने पटुस्त्रिजगतामवनेराद्यः प्रियोऽपि जामाता
भवने विधातुराढ्यः स वने सवनेतृनायको जयति. ३२
रक्षोबलदलनविधौ दक्षो वक्षोजगिरिहरिर्लक्ष्म्याः
[3]पक्षो जयति वलक्षोऽस्माकमधिक्षोणि शक्रनीलनिभः. ३३
[4]अव्ययमदस्युगोचरमुर्वेपि न मदप्रदं पदं प्रमुदाम्
वित्तमनीहमनोहरमस्माकं चित्तमात्मसात्कुरुते. ३४
[5]अंकरहितममृतकरं शंकरहितमनिशमेधमानकलम्
मित्रं स्वया श्रियाप्युपकुर्वाणमहं भजे चकोरशिशुः. ३५
कति न जटिला वटा इव धन्वधराः कति न कानने शबराः?
एकः कोऽप्यजकुलजः क[6]पर्दिसुमधन्वनोः श्रियं हरति. ३६
यामे रजनेश्वरमे या मेघनिभा सुनिस्पृहैश्चिंत्या

१. काप्यनिर्वचनीया तपसां सिद्धी रामरूपा नीलापि श्यामापि इला पृथ्वी तस्या धरं शेषमिन्दुं पयोधि च गुणैः सामर्थ्याह्लादकत्वगाम्भीर्यादिभिरुपहसति तानतिशय्य वर्तते इत्यर्थः । २. अवनेः पृथिव्याः प्रियोऽपि भर्ताप्याद्यो जामाता सीतापाणिग्रहणेनेति विरोधाभासः । सवस्य यज्ञस्य नेतारः फलभोक्तारो देवास्तेषां नायको मुख्यः । ३. पक्षः सुहृत् । वलक्षो यशसा धवलः । अधिक्षोणि पृथिव्याम् । ४. अव्ययं विकारं क्षयं चागच्छत् । उर्वेपि प्रभूतमपि मदप्रदम् । अनीहानां वीतस्पृहाणां मुनीनां मनो हरतीति तादृशम् । ५. चकोरशिशुर्बालचकोरोऽहं अमृतकरं अमृतं मोक्षो हस्ते यस्य तं श्रीरामचन्द्रं चन्द्रं च भजे इत्यन्वयः । अयं रामचन्द्रोऽङ्करहितो लाञ्छनरहितः स तु सलाञ्छनः । अयमनिशमेधमाना वर्धमानाः कला यस्य तादृशः स तु कृष्णपक्षे क्षीयमाणकलः । तथा चायं स्वया श्रिया मित्रमपि सुहृदमप्युपकुर्वाणः स तु मित्रात्सूर्यादाप्तश्रीर्न तस्योपकरोतीति व्यतिरेकः । शङ्करहितामित्युभयत्रापि समानम् । ६. कपर्दी शङ्करः सुमधन्वा कुसुमधन्वा मदनस्तयोः श्रियं हरति तावपि श्रियातिशेते इत्यर्थः ।

सामेतरैरुपायैः[1] सा मे भूतिर्न कैश्चिदपि लभ्या. ३७

द्यावाभूमिभ्यामिव[2] याभ्यां स्त्रीभ्यामपि प्रजाः सुचिरम्
निर्भयमराजकेऽपि त्राता वां पादुके नमस्यामः. ३८

भरत![3] भगवता गुरुणा सुशिक्षितनयो युवाप्यधीरस्त्वम्
मन्ये धन्ये त्वत्तो जडेऽपि खलु पादुके समे व्यसने. ३९

भो याज्ञवल्क्यशिष्य[4] त्वां नैव यथा जहाति सन्निष्ठा ।
जामातरं तथा ते कन्यानन्या सती वने भवने. ४०

लब्धा विराध! भवता सीताऽपात्रेण[5] मृत्यवे न मुदे
कपटपटुना क्षणं सुरपंक्ताविव राहुणा सुधाधारा. ४१

जंगमनिर्जरतरुणा[6] तरुणारुणपादपल्लवेन सह
दृष्टा कनकव्रततिर्व्रततीर्थतपःफलप्रदा वनिभिः. ४२

धन्वी जटी फलाशी तन्वीरत्नेन[7] सादरं सततम्
अन्वीयमान ईदृक्सन्वीतभयः सतामगादुटजम्. ४३

अभ्रामलदीप्ति[8] महो बभ्राम चिराय दंडकाभूमौ

---

१. सा मेघनिभा घनश्यामा मे भूतिरैश्वर्यं रामरूपं सामेतरैः सामादिभ्यः शमध्यानादिभ्योऽन्यैरुपायैर्न सुलभेति योज्यम् । २. पादुके इति सम्बुद्धौ द्विवचनम् । वां युवां नमस्यामः । अराजके दशरथे दिवं गतेऽयोध्यायां राजाभावात् । स्त्रीभ्यामपीति प्रायः स्त्रीणां राज्यपालनानर्हत्वम । सुचिरं चतुर्दश समाः । ३. अत्राधीतनीतिशास्त्रोऽपि युवापि भरतः आत्मानं प्रजापालनकर्मण्यसमर्थममन्यत । पादुके तु जडे अपि तदनुष्ठितवत्याविति भरतस्य व्याजनिन्दा ध्वन्यते । व्यसने श्रीरामविरहाख्ये उभयोः समे तुल्येऽपि ४. भो याज्ञवल्क्यशिष्य जनक, यथा सति ब्रह्मणि निष्ठा त्वां न जहाति तथा ते कन्यापि भवने वा वने वानन्यपरायणा सती जामातरं रामचन्द्रं न मुञ्चति । ५. अपात्रेणानर्हेण । ६. वनिभिस्तपस्विभिः व्रततीर्थतपसां फलप्रदा तरुणौ नूतनौ अरुणावाताम्रौ पादौ पल्लवाविव यस्य तादृशेन जङ्गमेन चलेन निर्जरतरुणा सुरद्रुमेण रामेण सह काऽपि कनकव्रततिः स्वर्णलता सीताख्या दृष्टेत्यर्थः । ७. तन्वीरत्नेन रमणीमणिना सीतयान्वीयमानोऽनुगम्यमानः । ८. अभ्रं मेघस्तद्वदमला कान्तिर्यस्य तत् । घनश्यामं महो रामचन्द्राख्यं श्वभ्रैर्गर्तै-

दभ्राम धश्चकार श्वभ्रामयमलिनशशधरज्योत्स्नाम्. ४४
सहसैव[1] पंचवट्यां हरिणा हरिणानुयायिना स्वगुहा
सापि च मुक्ता मुक्ता नीता बत! वंचकेन केनापि. ४५
नीता[2] शुनाशु नाशायात्मन एवासि पुत्रिके! मोहात्
हास्यति नो निधनमृते न मृते स्वयमत्र किं तवोत्कर्षः? ४६
तादिदमुपस्थितमचिराद्यदवोचोऽनागसं किमप्यंब[3]!
पात्रे दानं क्षेत्रे बीजं बहु भवति गुप्तमुप्तमपि. ४७
तप्तो वाचा लतया विषमय्या भुक्तयेव बालमृगः
शप्तो[4] वाचालतया कथमनघोऽप्येष देवरो देवि! ४८
एकं क्षणमपि धीरैरपि नूनमसह्यवेदना वाचः[5]
स यदपससार सहसा सौमित्रिः साश्रुराश्रमादाशु. ४९
दस्यो! क्व त्वं यास्यसि हृत्वा रत्नं जगन्निवासस्य?
कुत्र[6] निलीय स्थेयं मत्स्येनागस्कृता पयोराशेः? ५०
अद्ध्यां[7] कथमनया त्यक्तां छायामिव स्ववत्सलताम्

---

रामयेन राजयक्ष्मणा च मलिना कान्तिर्यस्य तस्य शशलाञ्छनस्य ज्योत्स्नां प्रकाशं दभ्रामल्पामधश्चकार तिरश्चकार । चन्द्रादप्यतिसुन्दरो राम इति व्यतिरेकः ।
१. हरिणानुयायिना मायामृगमनुसरता केनापि हरिणा सिंहेन रामचन्द्रेण च आत्मनो गुहा निवासस्थानं सापि मुक्ता मौक्तिकं सीतारूपं मुक्ता हारिता । सा च मुक्ता केनापि वञ्चकेन जम्बुकेन रावणेन च नीता । २. हे पुत्रिके सीते! शुना रावणेन त्वमात्मनो आशु नाशायैव नीतासि । स श्वा रावणस्त्वां निधनमृते मरणादृते न हास्यति न परित्यक्ष्यति । स्वयमेवास्मिन्न मृते सति तव गुणानामुत्कर्षः सम्भवेत्किम् । नैवेत्यर्थः । अननुष्ठिते हि रावणेन मरणापादके सीतापहरणाख्ये तद्विलोभनाख्ये च कर्मणि तव गुणानामुत्कर्षोऽविदित एव स्यादित्यर्थः । ३. हे अम्ब सीते । त्वमनागसं निरपराधमपि लक्ष्मणं यद्दुरुक्तमवोचस्तस्यैवेदमुपस्थितं फलम् । यतो गुप्तं पात्रे दानं क्षेत्रे गुप्तमप्युक्तं निक्षिप्तं बीजं बहुलीभवति । ४. शप्तो निन्दितः । देवरो भर्तुर्भ्राता । ५. वाचो दुष्टवाचः । ६. पयोराशेः समुद्रस्यापराधं विधाय मत्स्यः क्व स्थास्यतीत्यर्थः । ७. रामो लक्ष्मणं वक्ति । हे

गरलप्रसवां कथयस्यमृतमयीमादितोऽपि वत्स! लताम्.
सा[1] कुत्र पर्णशाले! मालेहाद्यैव या मया निहिता?
लब्धा मिथिलाजानेर्जाने न्यासापहारिणीं त्वाहम्.
गोदावरि! सा क्व गता? जगता सत्येति संस्तुता त्वमसि.
तमसि[2] च्युतरत्नं जनमंजनदानेन मामनुगृहाण.
कासार[3]कुंदकदलीकीरकेसरिकृष्णसारकेकिपिकैः
अलिचंपकबंधूकैः शून्ये बत! सुंदरी विभज्य हृता.
अयि[4]! ते दयिते! मयि तेऽमी संति कृतप्रतिक्रियाः कृतिनः
गुणलवजितोऽमृतद्युतिहारिणः करिणस्तथैव केसरिणः.
यद्यपि गणरात्र गतमद्यैवाहं समागतोऽस्मि वनम्
यद्भ्रहितो[5] भद्रहितोत्सवसुवसत्या श्रिया तया सत्या.
मृग! यामीक्षणविजितः शक्ष्यसि नोदीक्षितुं बत! त्रपया

---

वत्स, अनया सीतया छायेव सदा सन्निहिता स्ववत्सलता त्यक्ता इत्यहं कथं अ ध्यां कथं विश्वस्याम् । यतस्त्वं हि आदितः प्रभृति जन्मन आरभ्यामृतमयी ल गरलप्रसवां विषमयीं कथयसि । निदर्शनालङ्कारः । १. सीतामपहृतां विज्ञाय विल रामः पर्णशालां सीतागतं पृच्छति । या माला सीतारूपा मिथिलाजानेर्जनक धिगता मया अद्यैवात्र निहिता त्वयि न्यस्ता सा क्व वर्तते? अहं त्वा त्वां न्यास हारिणीं न्यासमपहरति तच्छीलां जाने । त्वयैव मे न्यासोऽपहृत इत्यहं तर्कया त्यर्थः । २. नमस्यन्धकारे च्युतं रत्नं सीताख्यं यस्य तं मामञ्जनस्य दिव्यदृष्टिप्रद दानेनानुगृहाण मय्यनुग्रहं कुरु । ३. कासारादिषु वर्तमाना गुणास्तैः सीत अपहृता इति द्योतयन् विलपति । अस्मिन् शून्ये विपिने सा सीता कासारादि विभज्य हृता । कासारे गम्भीराशयत्वं, कुन्दकलिकासु दन्तपंक्तिसाम्यं, कदल मूरुद्वयसादृश्यं, करिणि गमनं, केसरिणि कटी, कृष्णसारे आयतलोचनत्वं, केकि केशपाशानुकारिता, पिके स्वरः, अलिषु कटाक्षनीलिमा, चम्पके नासिकावंशसार वन्धूके चाधरराग इति गुणानां दर्शनात् । ४. तेऽमी कासारादयो मयि कृतप्र क्रियाः कृतवैरनिर्यातनाः कृतिनो धन्याः सम्पन्नाः । ५. भद्रं कल्याणं हितोत्स आनन्दसमयस्तयोः सुवसत्या सीतया रहित इति योजना ।

मृगयामि क्व नु तां वद मित्रमहं ते वनेचरो रामः. ५७
लीनासि किमेकांते कांते! कां ते व्यलंघयं वाचम्?
विरहज्वरविपदयि! ते दयिते! दयितेऽतिदुःसहाऽधीरे. ५८
सत्यंतकेऽप्यरातौ सत्यं सोढुं तमप्यहं धीरः
[1]सत्यंचितांगि! दूये सत्यंचलतोंऽतरेऽपि किं विरहे? ५९
[2]दृष्टं यत्सत्यागो वत्स! त्यागोचितं मयि प्रियया
तत्किं त्वया न लक्षितमक्षि तवाप्यनलसं मदाचरणे? ६०
वीजय मामंचलतः पं[3]चलतः पल्लवोऽमृतव्रततेः
सुदति! शयस्ते व्यजनान्मुदतिशयस्यैकहेतुरब्जकृतात्. ६१
कानन! तदासि नंदनमधुना पितृकाननं सुविस्पष्टम्
अहमपि [4]हरिरभवं तामृते त्विदानीं श्रियं महाभूतः. ६२
नित्यं निरंतराभ्यां सुदति! गुरुभ्यां निसर्गकठिनाभ्याम्,
ध्रुवमुपदिष्टं हृदयं तव स्तनाभ्यां स्वभावमृदुलमपि. ६३
किं दोषाकर! वच्म्यहमिंदो! निंदोचितं कुरु स्वैरम्
यस्य श्रियासि सुभगस्तस्मिन्मित्रे गतेऽस्तमुल्लससि. ६४
वत्स! न यदि ललना किं लोलेनालिंगिता मया लतिका
अस्तु त[5]दनुकृतिदयितामहमेनां झटिति नोत्सहे हातुम्. ६५
असवः क्व स वः प्रि[6]यसख एकाकी जन इतो गतो दूरम्
अलसा जलसारसयोर्नहि शोभा जीवनं मिथो विरहे. ६६

---

१. सति अश्चितानि प्रशस्तान्यङ्गानि यस्याः सा तत्संबुद्धौ। पदद्वयमपि संबोधने। अञ्चलतः वस्त्रतोऽप्यन्तरे सति अहं दूये इति योजना। २. हे वत्स लक्ष्मण! अपि दृष्टं त्वया यत्सत्या पतिव्रतयापि प्रियया मयि त्यागोचितमागो दृष्टं इति योजनीयम्। तदागस्त्वयापि न लक्षितं किम्। यतस्त्वदीयमपि नयनं मदाचरणे सदा बद्धलक्ष्यम्। ३. हे सुदति ते शयस्तव पाणिरमृतवल्ल्याः पंचलतः पञ्चशाखः पल्लवः अब्जकृतात् पद्मनिर्मितादपि व्यजनान्मुदोऽतिशयस्य हेतुः इति योज्यम्। ४. हरिरिन्द्रः। ५. तस्याः सीताया गुणानां मार्दवादीनामनुकरणेन दयिता प्रिया। ६. प्रियः सखा प्रियमित्रम्। अलसा इति सम्बुद्धिपदम्। जलं च सारसं कमलं च तयोः।

नीता वधूर्न दस्योस्त्रातेत्यलमार्य! तेन तापेन
शापेनेव सखा तेऽधर्मेण हतोऽस्यनेन पापेन. ६७

कश्चन युवा तपस्वी विरही परिषस्वजे तरुव्रततीः
व्रततीर्थपरा मुनयोऽनुनयोदारोक्तयस्तमानर्चुः. ६८

अमृ[2]तममृतफलमदरं बदरं प्रेम्णा बभक्ष चित्रमिदम्
तदपि च शबरीदत्तं मत्तं मन्ध्वं न मामियं मुनिवाक्. ६८

किमधिकमतोऽस्ति चित्रं मित्रं विपिनौकसां श्रुतिरहस्यम्
य[3]द्दर्शनाय यतिभिः पतिभिः पृथ्व्या मृगायितमरण्ये. ७०

वासववैभवमूनं चक्रुः कपयोऽप्यहोऽद्भुतं शृणुत
पपुरमृतमा[4]गलं ददुरगनगखगमृगारिपुभ्य उत्सवतः. ७१

प[5]त्युः करतस्त्वामप्युटजान्मामिव कथं बलाद्धृतवान्
न स मुद्रेऽत्र समुद्रे नौ नौवत्त्रातुमागतः कस्मात्? ७२

स्वपतिस्त्ववसतां हंता हंताहं तापमनुभवाम्यबला
तु[6]ल्यैवाधिसमुद्रे मुद्रे मुद्रेखया लिखितयाप्सु. ३७

अखिलप्रश्रयपात्रं सखि! लक्ष्मीवान्स लक्ष्मणः कुशली.
नै[7]खिलक्षगुरुर्हरिरिव मखिलब्धास्त्रः स चापि वीरमणिः. ७४

स्वं भागमिवादातुं हारिरिव हारिणेष्विहागमिष्यति किम्

---

१. आर्य हे जटायो! नीता वधूः स्नुषा सीता दस्यो रावणान्न त्रातेत्यलं सन्तापितेन। यतस्त्वमात्मनः सखा दशरथो यथा शापेन हतस्तथा पापेन रावणेनाधर्मेण त्वं हतः। २. अमृतं रामो मोक्षरूपः। अदरं भीतिरहितम्। बभक्षेत्यपाणिनीयम्। मन्ध्वमित्यप्यपाणिनीयम्। मुनिवाग् वाल्मीकिवचः। ३. यतिभिः पृथिव्याः पतिभिर्नृपैश्च यद्दर्शनायारण्ये मृगवदाचरितम्। ४. गलं मर्यादीकृत्यागलमाकण्ठम्। उत्सवतो मुदा। ५. राममुद्रां वीक्ष्य हनूमन्तं चादृष्ट्वा सीता मुद्रां प्रति ब्रूते। हे मुद्रे, यथा रावण उटजान्मां हृतवांस्तथा त्वामपि पत्युः करतः कथं हृतवानिति प्रश्नः। स श्रीरामः समुद्रे नौवत् नौ आवां त्रातुं कस्मान्नागतः इति योजना। ६. आधिसमुद्रे मनोव्यथासमुद्रे मुद् आनन्दः अप्सु लिखितया रेखया तुल्यः इत्यन्वयः। ७. नखिनां लक्षं तत्र गुरुः श्रेष्ठो हरिरिव सिंह इव। मखिनो विश्वामित्राल्लब्धान्यस्त्राणि येन सः।

मां सांत्वयितुमनाथां नूनं त्वं प्रेषितासि दयितेन. ७५

द्रष्टुं मातरिह त्वामार्यप्रहितोऽहमागतो दूतः ।
सूतः[1] प्रथमं रविणा नलिनीमिव जयति सोऽस्रिपुरुहूतः ७६

ग्रीष्मे गज इव सरसीं त्वां सीतां काननेष्वनासाद्य
श्रांतस्वांतः[2] श्रांतः कांतः कां तद्व्यथां ब्रवीम्यंब! ७७

गोष्पदमिव तीर्णं उदधिमयमहमबलोऽपि यस्य दासचरः
कथमर्णवभेकमरिं[3] पत्रिपतिजवस्तरेन्न तस्य शरः. ७८

अदहदजभवप्रहितोऽनंतबलोऽरिपुरमाशुगः[4] स हरिः
अयमपि तथैव दूतः पश्यत पीतांबरश्रिया श्लिष्टः. ७९

कोऽप्याह यतो धर्मस्ततो जयः सत्यमिति कविप्रवरः,
येत्खलु[5] विजितः सदनुगकपिना स पिनाकिवरसुरोन्मत्तः. ८०

न[6] कपिरनुक्तोऽग्निरपि न परवान्वनभंगमरिपुरीदाहम्
किं तु क्षुब्धाः सत्या निश्वासा एव चक्रुरत्युष्णाः. ८१

असुरप्रियाभिरारात्पाखंडोक्तिभिरशंकमाशिवाभिः[7]

---

१. सूतोऽरुणः । अस्रिषु पुरुहूतः इन्द्रः श्रेष्ठ इत्यर्थः । २. श्रान्तस्वान्तः खिन्नचेताः । ३. पत्रिपतिर्वैनतेयस्तस्येव जवो यस्य सः शरः अर्णवस्थं भेकमिव क्षुद्रमारिं कथं न जयेदित्यर्थः । ४. आशुगो हरिर्बाणरूपधारी विष्णुरजो यो भवः शिवस्तेन प्रहितः पुरा मयासुरनिर्मितं पुरमदहत् । तथैवायं हरिर्वानरो हनूमान् अजभवेनाजकुलोत्पन्नेन रामेण प्रहितो लङ्कापुरमदहत् । एवमयमपि पीताम्बरस्य विष्णोः श्रिया युक्तः । ५. सन्तः अनुगा कपयो यस्य तेन रामेण । पिनाकिवरः एव सुरा तयोन्मत्तः । ६. कपिरशोकवनिकाभङ्गं नाकरोद्यतः सोऽनुक्तः अनादिष्टः । रामेणेतयर्थात् । नाप्यग्निः शत्रुपुरीमदहत् । सोऽप्यस्वतंत्रो भगवदिच्छावर्तित्वादस्येति भावः । किंत्वेतद् द्वयमपि क्षुब्धाः सत्याः सीताया निश्वासा एव चक्रुरिति योजनीयम् । ७. एकसती पतिव्रताश्रेष्ठा सीता आरात्समन्तात् कुटिलायाभिर्दुर्मतिभिः अशिवाभिरमङ्गलाभिः पाखण्डा दुष्टा उक्तिर्यासां ताभिरसुरस्त्रीभिर्वने रुद्धा परिवृतातिष्ठत् । अत्रौपम्यं कलावुपनिषदिव । सापि परमपवित्रा कुटिलाशयाभिरसुरप्रियाभिर्दुष्टमतिभिः पाखण्डानां चार्वाकादीनामुक्तिभिः परिवृता दूषिता आसीत्.

+ २२

रुद्धा वने कलावुपनिषादिव कुटिलाशयाभिरेकसती. ८१
रक्षति कथमपि तन्वी देहादधिकं श्रुती दशावपि सा
अरिसुंदरीविलापं मधुरं त्वामपि च पातुममृतमिव. ८३
कपय[1]: स पय: केवलमब्धेस्तीर्णः सखा न बाहुभ्याम्
व्यक्तं नक्तंचरवरबलमपि कपिसैन्यदैन्यहरतेजाः. ८४
आर्यामपश्यमहितस्त्रीरुद्धां तां नितांततांततनुम्
अधि[2]कंटकारिकावृति घर्मे इवोत्खातरोपितां जातिम्. ८५
दग्धु[3]मना अप्यबला बालतृणानि क्षणादनार्द्राणि
दहनशिखेव सखायं त्वामेवास्ते सती प्रतीक्षन्ती. ८६
बंधु[4]रपि दस्यवे यः संश्रयदः स जडधी रिपोरिष्टः
किं प्रार्थ्यतेऽतिवेलं बध्यो लंघ्यस्त्वया जनैश्चान्यैः. ८७
राज्ञा गुरुणा त्यक्तो न विषयसक्तः सतां मतोऽत्यर्थम्
दैवात्खलु समशीलव्यसनः प्राप्तः सखा बिभीषण! ते. ८८
जीवेत्या[5]शीरुचिता दातुं नमतेऽविचार्य दत्ता श्रीः
न मनाक्पात्रविचारो नमनात्सर्वस्वदानमाश्चर्यम्. ८९

---

१. कपय इति सम्बुद्धिः। स सखा हनूमान् कपिसैन्यस्य दैन्यहरं तेजो यस्य तादृशो बाहुभ्यां न केवलमब्धेः पयस्तीर्णः। अपि तु राक्षससैन्यमपीत्यन्वयः। २. कंटकारिकावृतावित्यधिकण्टकारिकावृति। घर्मे निदाघे उत्खातरोपितां जातीलतामिव नितान्तं तान्ता ग्लानिमुपगता तनुर्यस्यास्तां सीतामपश्यमिति योजना। ३. अबला असमर्था दहनशिखा यथा अनार्द्राणि शुष्काणि बालतृणानि दग्धुमिच्छन्त्यपि सखायं वायुं प्रतीक्षते तथैव सीता रावणादीन् भस्मसात्कर्तुमिच्छन्त्यपि त्वामेव प्रतीक्षमाणा तिष्ठतीत्यर्थः। ४. बन्धुरपि सगरपुत्रैर्यज्ञियमश्वं मृगयमाणैः खातत्वात् यो जलधिः डलयोरभेदाज्जडधीः। दस्यवे रावणाय संश्रयं लङ्कारूपमदात्। अतः स रिपोरिष्टः शत्रुपक्ष्यः। अतः सोऽनिवेलं भृशं किमिति प्रार्थ्यते। प्रार्थ्यमानोऽपि नायं मार्गं ते दद्यादिति भावः। ५. नमते प्रणामं कुर्वते बिभीषणाय जीवेत्याशीर्दातुमुचिता। अभयदानमेव केवलं युक्तम्। किन्तु राघवेणाविचार्य श्रीरपि दत्ता। सर्वस्य स्वस्य सम्पदो दानमाश्चर्यम्। रावणस्य सम्पद एव बिभीषणाय प्रतिश्रुतं दानमिति विरोधपरिहारः।

राम ! त्वया [*]त्वयात्खलु समदुःखसुखः सखा[1] समासादि
व्यसनमुदधिं सुदुस्तरमन्योन्यबलेन यत्सुखं तीर्णौ. ९०
[2]अविलंबितमर्यादं बबंध बंधुं गुरुं ललंघ बली
भक्तं जघान शंभोर्मुनिसुतमपि कोऽपि हंत ! दारकृते. ९१
वंदे तं देवीनां हृतशोकं राक्षसीविलापगुरुम्
[3]उंछवृत्तयो यं तापापहमस्त्रभोगिनामगुरुम्. ९२
जटिलस्तमालनीलो वनवासिसखः प[4]तंगकुलपालः
कश्चन ददाह खेचरभूभृतमधिजलधि तापहा दावः. ९३
मेघेन केनचिदहो ! धनुष्मता भूगतेन शरवृष्ट्या
जलपूर्णा [5]वाहिन्यः खगमा निर्जीवनीकृताः सिंधौ. ९४
तृणकाननं ददाह न कीलालनदीः ससर्ज तापहरः
कश्चन पतंगकुलजस्तमालनीलस्त[6]नूनपात्तरुणः. ९५
कपिसख एकः कश्चन चक्रे [7]नाकौकसां क्षणात्कुशलम्
यत्कुलिशकरसुदुष्करमकालकूटाशशूलशिखिसाध्यम्. ९६
आस्तां यद्वधमकरो रक्षोधिपते रणे पणेन त्वम्
सोऽपि प्राज्यं राज्यं प्राणान्प्रजहौ न तु प्रतिज्ञां स्वाम्. ९७
आपदमाप्तुं स्पृष्टस्तापदमुग्रं कथं परकलत्रम्

---

१. सखा मित्रं बिभीषणः । समासादि लब्धः । २. अविलङ्घिता मर्यादा वेला गुरुजनादरश्च येन तादृशं बन्धुं सागरं बबन्ध । गुरुं च सागरमनुल्लंघनीयं ललङ्घ । शम्भोर्भक्तमपि मुनेः पुलस्त्यस्य सुतं रावणं च कोऽपि राम इत्यर्थात्। दारकृते सीताया अधिगमार्थं जघान । सर्वत्र विरोधाभासः। ३. उंच्छः कणशः क्षेत्रस्थस्य धान्यस्यादानं स एव वृत्तिर्येषां ते उञ्छवृत्तयो मुनयः । अस्त्राण्येव भोगिनः सर्पास्तेषामगुरुवत् कृष्णचन्दनवदाश्रयो रामः। ४. पतङ्गः सूर्यः । खेचरा राक्षसास्तेषां भूभृत रावणम् । ५. वाहिन्यो नद्यः सेनाश्च। निर्जीवनीकृताः निरुदकाः कृताः हताश्च । विरोधाभास आश्चर्यहेतुः । ६. तनूनपादग्निः। तृणकाननं न ददाह किन्तु कीलालनदीः शोणित-नदीः ससर्ज प्रवर्तयामास । विरोधाभासः । ७. नाकौकसां देवानाम् । कुलिशकरो महेन्द्रः । कालकूटाशः शिवः । * तु अयात् इति पदच्छेदः । अयः शुभावहो विधिः ।

पापदवानलदग्धो हा ! पदमखिलश्रियां त्वमपि वीर[1] ! ९८
अन्यकलत्रं[2] विषमं विषवह्नेरपितमां यदामूलम्
स्पृष्ट्वैकदैव दग्धो गुणदोषज्ञोऽपि बत ! समंत्रिकुलः ९९
नक्तमिवाशोकवनेऽप्यनिरीक्ष्य प्रियतमं तमांतांता[3]
दृष्ट्वा तु वह्निकुंडेऽप्यहनीव सरोजनी बभौ कांता. १००
सुहृदो[4] वियोगयोगौ नान्यौ स्तस्तापतोषयोर्हेतुः
प्रमदवने ग्लानिमिता तुष्टिं दहनेऽपि यत्प्रिये दृष्टे. १०१
विमलकनकमूर्तिरिव ज्वलनेऽप्यसि देवि ! लब्धपरभागा[5]
मा गा विषादमधिकां नुतिमाप्ता त्वं जगत्सु यदनागाः. १०२
अवताद्विभीषणस्त्वां[6] लंके ! यं केसरीव मेरुगुहाम्
आकल्पमचलपदभागेष पतिर्ध्रुवसखस्तवास्तु सुखी. १०३
भवमिव दुस्तरमुदधिं तीर्णास्त्वां देवि ! सुगतिमिच्छंतः[7]
अवलंब्य स्वोत्पादितमचलात्मानं सुपुत्रमिव सेतुम्. १०४
सुषमाजितघनशंपे[8] पंपेयं पेयवाणि चिरमस्याम्
सुदति ! रुदितमयि शिखिभिर्नृत्यद्भिरसद्भिरिव भृशं मुमुदे. १०५
पंचवटि ! त्वय्युषिताः शंयोध्यायामिवांब[9] ! लब्धाः स्मः

---

१. हे वीर रावण । २. विषवह्नेरतितमां विषमं परकलत्रं स्पृष्ट्वा स आमूलं दग्ध इत्यन्वयः । अपितमामिति लिपिकरप्रमादः । ३. "तमांतान्ता" इति लिपिकरप्रमादः । तम् आतान्ता आक्रान्ता इति पदच्छेदः । सरोजनी सरसो जनी जन्म यस्याः सा । 'जनी' इतीदन्तः 'कृदिकारादक्तिन.' इतीप्विधानात् । ४. सुहृदो वियोगयोगावेव तापतोषयोर्हेतुर्नान्यावित्यन्वयः । ५. लब्धः परभागः उत्कर्षो यया सा । ६. अवतादित्याशिषि लोट् । ध्रुवस्य सखा तद्वदचल इति भावः । ७. सुगति मोक्षस्वरूपां त्वामिच्छन्त इति योजना । स्वोत्पादितमात्मजम् । ८. अयोध्यां प्रति प्रस्थितो रामचन्द्रः सीतां वक्ति । सुषमया परमया शोभया जिता घनस्था मेघमध्यवर्तिनी शम्पा विद्युद्यया तत्सम्बुद्धौ । विद्युत्प्रभे सीते । पेया वाणी यस्यास्तत्सम्बुद्धौ । मयि अस्यां पम्पायां चिरं रुदति शिखिभिरसद्भिरिव नृत्यद्भिर्भृशं मुमुदे । भावे लिट् । ९. शं सुखम् । इता गता । स्वरपगेत्यत्र स्वरापगेति भाव्यम् । स्वर्धुनीत्यर्थः ।

मामियमितारिकीर्त्या सह सिंधु स्वरपगेव कालिंद्या. १०६
भो मातर्गोदावरि! यौवरिकरिहरिपती सतीसहितौ
सुचिरमुषितौ त्वदंके कौसल्याया इवांब ! तावेतौ. १०७
तुभ्यं बद्धोऽञ्जलिरयमीशशिरःसारसासने देवि!
गुर्वीमुल्लंघ्य त्वां तीर्णाः कथमापदं प्रतिज्ञां स्वाम्. १०८
तृषितोऽसि बालचातक! तात! करुणयागतोऽद्य जविनदः
पश्योन्मीलय नयने नय नेहामृतमनेहसं पातुम्. १०९
शृणुत मयूरा यं प्रियमीक्षितुमत्यंतमुत्सुका मुदिरम्
स महाभागत आगत उत्सव एकान्तिकेऽध नृत्यध्वम्. ११०
सिंहासन किं हा! स न पतिरद्य स्मर्यते महेंद्रसखः
येनास्यखिलनृपतिपतिनतिभाजनममृतपायिपीतयशः. १११
नाके साकेतयशोऽरुचिममृतरसेऽमृतांधसामकरोत्
सत्ये रत्येकपदं स्वं तांडवपंडितं मृडानीशम्. ११२
पस्पर्श पदा साध्वीं विश्वस्तं वीरमपि जघान वने
तत्याज सतीं कोऽपीनवंशजानां सतां मतः कुपतिः. ११३
यदमृतममृतजुषामपि यच्च सुखं योगसंपदामतुलम्
उपनिषदां यत्तत्वं तदयोध्यावासिनां विधेयमहो! ११४

---

१. अरय एव करिणस्तेषां हरिपती सिंहाविव रामलक्ष्मणौ सतीसहितौ। पतिव्रतया सीतया सहितौ। अत्र प्राप्तौ स्तः इति शेषः। २. ईशस्य शिरःसारसं शिरःकमलं आसनं यस्यास्तत्सम्बुद्धौ हे गङ्गे। कथं कथमपि। ३. बालचातक भरत। अमृतं पातुमनेहसं कालं मा नयेत्यन्वयः ४. मयूराः पौराः। महाभागतो महता भागधेयेन। मुदिरं मेघं रामं च। ५. महेन्द्रस्य सखा दशरथः। येनाधिष्ठितं त्वं अखिलानां नृपतिश्रेष्ठानां नतेर्नमनस्य पात्रमसि। यस्य ते यशोऽमृतपायिभिर्देवैः पीतं तं दशरथमद्य स्मरसीति प्रश्नः। ६. अमृतमन्धो भोजनं येषां तेषां देवानाम्। रतेरानन्दस्यैकं स्थानम्। ७. इनः सूर्यः। कोः पृथिव्याः पतिः कुत्सितः पतिश्च। विरोधाभासः। ८. विधेयं भृत्यः। राजा प्रजानां भृत्यः कार्यकरोऽस्तीति प्रसिद्धिमाश्रित्येयमुक्तिः।

मातरयोध्ये[1] ! भुक्ताः पतयः पारेशतं त्वया सत्या
स्मरसि कथं न तदधुना मधुना ननु मोहितामुना पत्या. ११५

---

# श्रीकृष्णस्तवनम्

(गीतिवृत्तम्)

केशव! के शवतुल्या न त्वयि विमुखाः खला मलाकाराः?
भक्तास्तव सक्ताः स्तवनतिपूजासु प्रभो! न के धन्याः? १
माधव! साधव एव त्वद्यशसि रता न दुर्जना मलिनाः,
हंसा[2] इव नो दृष्टा मौक्तिककवलादृता बकाः काकाः. २
यत्याहृतकथ! भगवन्नत्यादरतस्त्वमुपगतांछरणम्[3],
नत्या सकृदपि कृतया सत्यानंदप्रदो भवसि सद्यः. ३
यत्साधुगीतया त्वं कीर्त्या निजयापि देव! मुदमेषि,
तत्तां तव प्रियार्थं गातुमहं प्रेमतः प्रवृत्तोऽस्मि. ४
दत्त्वा विषमपरिमितं लब्धं त्वत्तोऽमृतं नु पूतनया,
पूतनया[4]ऽद्य वृतस्त्वं कीर्त्या तत एव नित्यनूतनया. ५
यैः[5] सति साधुः स तथा न यथाऽसति साधुरीड्य एष सताम्,
सदसि कथयंति कवयः पापोद्धृतिमेव विस्मरंति न ताम्. ६
अयि! के त्वयि केशव! न हि विनता विनतातनूजवाह[6]! जनाः,

---

१. हे अयोध्ये! परःशता नृपतयस्त्वया भुक्ताः। तानधुना कथं न स्मरसि। अमुना पत्या त्वं मोहिता ननु। 'सरघेव लोभिता' इति पाठान्तरम्। मधुना सरघा मधुमक्षिकेवामुना पत्या रामेण मोहितेत्यर्थः। २. यथा हंसा मौक्तिकानां कवलेष्वादृता दृष्टास्तथा दुर्जना इव बकाः मलिना इव काकाश्च नो दृष्टा न दृष्टाः इत्यन्वयः। ३. उपगतान् शरणमिति पदच्छेदः। ४. पूतनया पवित्रया। पवित्रार्थे पूतनशब्दो न कुत्रापि दृष्टचरः। ५. यथा असति दुर्जने साधुः सतामीड्यो भवति न तथा सति सत्पुरुषे साधुरित्यन्वयः। ६. विनतातनूजो वैनतेयो वाहः वाहनं यस्य तत्सम्बुद्धौ।

कंसारे! कं सारे पीते ते यशसि न च पुंमर्थमिताः[1]. ७
अजगरमजं[2] गरनिधिमरिमत्युग्रं ग्रस्तसात्मशिशुवत्सम्,
अकरोरमृतनिधिं किं न करो दाता जनायते सुहृदे. ८
अमुना यमुनामिव मे मतिमपदोषां पदा[3] कदा कर्ता,
वद भो मदभोगिमथन! पृच्छामि यतस्त्वमादृतो यशसि. ९
कुरु कुरुवरे[4] इव पतिते मयि शरतल्प इव देव! संसारे,
करुणां करुणावरुणालय! वरदगुरो! मुकुंद! कंसारे! १०
जानन्नप्यहमहितैः प्रसभं विषयैर्जनैः स धर्म[5] इव
क्रीडितुमलं प्रवृत्तस्त्वं दीनानां स एव बंधुरसि. ११
कामादिभिरहितैर्मे मतिरुग्रैः कौरवैरिव प्रसभम्,
धर्मस्य वधूरिव हाऽन्यायाद्विवशीकृता त्वया रक्ष्या. १२
कंसाराते! कीर्तिः कं सारा ते जनं न पातुमलम्,
वसुधाधाराद्य[6] विभो! न सुधाधारा[7] क्षमावितुं रुग्णम्. १३
य उपायनं प्रदातुं पृथुकप्रसृतिं[8] त उपगतो, भवता
अवता स दीनबंधोऽकारि सुदामा पदं मुदामाशु. १४
कविना न विना व्रजति ख्यातिं, बह्वपि यशः प्रभोर्जातु
मुदितमतः कुरु मां कविमविगीतकथा यथासुखं गातुम्. १५
पीतांशुक! गीतां शुककविना वाल्मीकिनेव रामस्य
रसिकाः पिबंति भवतः कीर्तिं देवाः सुधामिवाजस्रम्. १६
साधु शुकेनेव पुनर्गीतानि यशांसि ते मयूरेण
ख्यातिं प्रयांतु लोके भोः! के बद्धादरा न नव्यरसे[9]? १७

---

१. पुमर्थं पुरुषार्थं धर्मार्थकाममोक्षाख्यम्। २. अज हे कृष्ण। गरस्य विषस्य निधिम्। ३. त्वपदसञ्चरणेन यमुनामिव त्वद्भक्त्या मे मतिमपदोषां विगतदोषां कदा कर्ता करिष्यसीति योजना। ४. शरतल्पे पतिते कुरुवरे भीष्मे। ५. धर्मो युधिष्ठिरः। अहितैर्जनैः कौरवैः। ६. वसुधाधार आद्य इति सम्बुद्धिस्थं पदद्वयम्। ७. सुधाधारा रुग्णमवितुं रक्षितुं क्षमा न किमिति प्रश्नः। क्षमैवेत्यर्थः। ८. पृथुकानां प्रसृतिम्। ते उपगतस्त्वामुपगत इत्यर्थः। ९. नव्ये रसे सर्वेऽपि बद्धादरा इत्यर्थः।

स्तोतुमनसमकरोः किल गल्ले स्पृष्ट्वा ध्रुवं ध्रुवं[1] दरतः
तद्वन्मामादरतः कुरु पुरुकरुणार्य निजनुतौ निपुणम्. १८
नुतिकृतिकृतादरस्त्वं सदसि सतां श्रुतमिति श्रुतिज्ञानाम्,
त्वां तेन ते नमज्जनमंदारं प्रार्थये नमन्नंघ्रिम्. १९
ननु ते न नुतेरधिकं मतमन्यद्यदि तदिष्टमेव तव,
वितर वरं मय्याश्रिताहित स्वरंजितजगत्स्ववंशेन[2]. २०
स्तुत्वास्तु त्वामयमिह संसारे भोः प्रभो! जनो धन्यः,
याचे यतस्त्वमिच्छां पूरयसि सुखं वदान्यमूर्धन्यः. २१
येनार्थिकामपूर्तिः क्रियते खलु झटिति पारिजातेन,
स मया कथं नु रमया पूजितमपहाय ते पदं सेव्यः? २२
भवदाश्रितैः स[3] लभ्यस्त्वं तु न जात्वपि तदाश्रितैर्भगवन्!
भामाद्वारि स सततं न भवान् स्थित इंद्रमंदिरांतरपि. २३
तं जडमविवेकिनमगं[4] गमस्वाधीनं समाश्रयिष्यति कः
त्वां प्रभुमपास्य सर्वगमादिकविं करुणमखिलकामकरम्. २४
अंतर्बहिरपि कठिनश्चिंतामणिरुपल एव खल्वेषः
कामधुगपि पशुरशुभं भवतोऽन्यन्नाथ सर्वमस्माकम्. २५
ब्रह्मादयोऽपि देवाः कृच्छ्रे[5] त्वां देवदेवमुपयांति
सगदा[6] जगदाधार! प्राज्यामृतपाणिमिव[7] गुरुं भिषजाम्. २६
यः पुरदाहं चक्रे शक्रेण प्रार्थितः प्रभुः[8] सपदि
सोऽपि वृकव्यसनात्किल विलयं गत एव रक्षितो भवता. २७
भीतांस्त्रातुं दातुं वरमभिलषितं समस्तमार्थिभ्यः

---

१. शंखेन गल्ले स्पृष्ट्वा त्वं ध्रुवाख्यं बालं ध्रुवं निश्चितं स्तोतुमनसमकरोरिति योजना। २. स्ववंशेन स्ववेणुनिर्गतेन रवेण राञ्जितं जगद्येन तत्सम्बुद्धौ। सापेक्षत्वेऽपि गमकत्वात्समासः। ३. स पारिजातः। ४. अगं वृक्षं पारिजातमिति यावत्। व्यतिरेकेण पारिजाताद्भगवानेव श्रेष्ठ इति सूच्यते। ५. कृच्छ्रे संकटे। ६. सगदाः सातङ्का भीता इत्यर्थः। ७. अमृतहस्तं धन्वन्तरिमित्यर्थः। ८. प्रभुः शिवः। वृको भस्मासुरः।

अनलसमनलसमं[1] खलशलभलये त्वां वदंति सत्कवयः. २८
गजमंबुजंतुशक्रा[2]न्नक्राच्चक्रायुधावता भवता
दत्तमनुक्त्वाप्यभयं संसारग्राहपीडितेभ्यो[3] नः. २९
नारायणेत्यजामिल आक्रुश्यापत्यमत्यपत्यमतिः
त्वां प्राप पापनिलयः किल यः शतकल्पनिरयवासार्हः[4]. ३०
त्वामहमनिशं कलये[5] कलये यद्दत्तसाध्वसोऽसि त्वम्
प्रणतेर्यत्ना[6] अवमा अव मामित्यानतं दयालुमणे! ३१
एकस्त्वमेव शाश्वत आस्से सुखमब्जनाभ! यदनल्पे
कल्पेऽखिललोकानां भो भगवन्! भोगिभोगमयतल्पे ३२
नाथ कथंकारं ते महिमानमगाधमिममहो! ब्रूमः,
यत्त्वत्तत्त्वविचारेऽद्याप्यास्ते प्रभुरचंचल भ्रमः. ३३
गोप्या कोऽप्याप्तस्ते पांसुलयापि प्रसाद ईश्वरतः
सत्याप्यत्यादृतया[7] न मया न मर्याद उच्यतेऽप्यखिलैः. ३४
बद्धोऽस्युलूखले त्वं गोप्या हंत! व्रजे स दाम्ना यम्
ज्ञातुं कवयो न वयोगतमपि पश्यंति खलु सदाऽऽम्नायम्. ३५
अवतारा[9]तिभ्यो जगदवतारा देव! ये गृहीतास्ते
माधुरतः साधुरतः कोऽपि नतेष्विह तु सूद्धृता बहवः. ३६
इह गोकुलं व्रतं ते शिशवोऽप्यसवः कुमारिकाः श्रुतयः
गोपा गुरवः परमेश्वर किं बहुनारयः प्रियातिथयः. ३७
माथुर[10]मवतारमिमं मन्येऽखिलकामकल्पतरुमेव

१. खला एव शलभास्तेषां लये विनाशेऽनलसममग्निसदृशम् । २. अम्बुजन्तुषु जलजन्तुषु शक्रात् श्रेष्ठात् । ३. "षड्वर्गग्राहपीडितेभ्यः" इति पाठान्तरम् । षड्वर्गः कामादीनां समूहः । ४. शतं कल्पान् निरयवासं नरकवासमर्हतीति तादृशः । ५. कलये मनसि करोमि चिन्तयामीत्यर्थः । ६. प्रणतेर्यत्नाः अवमाः अपरित्याज्याः । सदा मया प्रणतिः कार्यैवेत्यर्थः । ७. "अत्यानतया" इति पाठान्तरम् । ८. मया अदः इति पदच्छेदः । ९. अरातिभ्यो रिपुभ्यः । १०. मथुरायां भवम् ।

वस्तु सकलमेकरसीकर्तुं द्रुतमस्ति जगति न रुमेव. ३८
भुक्तं सह पशुपशिशुभिरुक्तं कृतमेव गोपवामदृशाम्
मुक्तं चाश्रु वियोगे युक्तं भगवत्पदः किमात्मरते? ३९
भक्तानां पुरतस्त्वां नर्तयतीत्थं स्वभक्तवत्सलता
न व्यापृतो भवानिव कोऽपि कुटुंबी क्वचित् कुटुंबे स्वे. ४०
पार्थसहायस्य न ते का वा रीतिः कुटुंबिरीतिरिव?
दूतत्वं सूतत्वं भजतो व्रजतोऽनृतेन चापि पथा. ४१
सक्तं सपत्नमथने भक्तं भजता किरीटिनं पार्थम्
व्यक्तं निजमहितत्वं त्यक्तं स्वीकृत्य साधु सारथ्यम्. ४२
सोढ्वाप्यायासमरं समरं गत्वाऽसुसंशयं प्राप्य
लुब्धेनेव स्वार्थः पार्थः परिरक्षितस्त्वया व्यसने. ४३
भंगे श्रीकांत! नवे शांतनवे[1] प्रकुपिते प्रतिज्ञायाः
प्राप्तस्तथा न कंपं त्वं पंकजनेत्र! हृदि यथा सख्युः. ४४
उपनिषदां सर्वस्वं मूर्तं श्रेयः श्रियः सतां सत्वम्
वपुरापगेयसमरे[2]ऽनादृतमिषुविक्षतं न ते मित्रम्. ४५
श्रितमवतस्तव भीष्माद्रथचक्रभृतः क्षतप्रतिज्ञस्य
अद्यापि सत्यसंधैरप्युच्चैर्गीयते यशः सदसि. ४६
भगवन्नूनं[3] नूनं श्रितसमवनतोऽन्यदखिलमपि कर्म
परिपालयन्यदेकलमर्जुनमसि सर्वथा सतामीड्यः ४७
भक्तं नक्तंदिवमपि कपिकेतुं[4] नेतुमीप्सितां पदवीम्
किं किं न रक्षता कृतमुत किं किं कारितं न वान्यैस्ते. ४८
धर्मो यदवददनृतं यदकांडेऽदर्शनं जगाम रविः,
यदभजदिषुतल्पं कुरुगुरुरन्यद्यच्च तत्तवैव मतम्. ४९
धर्मद्विषोऽनुसरणे न रणेऽपि धनुर्भृतां गुरोर्विजयः
धर्मस्य तु ध्रुवं सोऽशस्त्रस्यापीति त उपदिष्टमिह. ५०

---

१. भीष्मे । २. आपगेयो भीष्मस्तेन सह समरे । ३. भगवन् ऊनम् इति पदच्छेदः । ४. अर्जुनम् ।

यद्यत्कृतं त्वयेश्वर जीवानामाशु तत्समुद्धृतये
धृतयेच्छया नृमूर्त्या श्रीसख्या शृण्वतां सतां धृतये[1]. ५१
यद्गोप्या राधिकयाराधि कयाधूसुतेन[2] चाप्यंतः
हृतभवगदं पदं ते ध्यायंति विमुक्तिपदमपि न संतः. ५२
राधामाधायोरसि बाधा माधाम्नि कामजा हृत्वा
सुप्तं गुप्तं सतमःपुंजे कुंजे स्मरंति यतयस्त्वाम्. ५३
गोपीभुक्त्वापि विटैः कृत्वापि न दस्युभिः सम[3] स्तेयम्
हृत्वापि घातुकैस्त्वं जगति गुणस्तेऽद्भुतः समस्तेऽयम्. ५४
यासां त्वया सुसंचितमपहृतमेकांततोऽपि नवनीतम्
ताभिरबलाभिरपि वद मनसि हृते देव! किं न तव नीतम्? ५५
राधास्तननिहितदृशं गलदमलस्तन्यबिंदुवदनेंदुम्
त्वां ध्यायत्यंतःश्रीः साधुसभा साश्रु सात्मकुत्समपि[4]. ५६
त्वामधिकदम्बमबलापटुपटपाटच्चरं[5] विलिख्य यथा
सत्यः प्रत्यहमात्मव्रतसंसिद्ध्यै भजंति पतिमत्यः ५७
दीपमिव त्वां स्नेहादुद्भासितरूपसंपदं गोप्यः
अभजन्पतंगिका इव मरणभयमपास्य रुचिररुचिरुचयः. ५८
मृत्स्नाशनागसि[6] विभो! भीताया विश्वदर्शनान्मातुः
स्वस्मिन्दुर्लभपुत्रस्नेहापायात्त्वमेव बहुभीतः. ५९
हा! बत! हंत! पिबंतं त्वाममृतनिधिं द्रुतं निरस्य भुवि
याता माता बहुमतदुग्धा, मुग्धाः खलु स्त्रियो जात्या. ६०
दुग्धे मुग्धे किमधिकमंब! त्वं बत! सुवंचितासीति
ज्ञापयितुमेवमेव त्वं गोरसभाजनेऽकरोः कोपम्. ६१
गुरुभिरपि गुरुवरेण च भवता ये बोधिताः क्रतौ गुरवः

---

१. प्रमोदाय। २. कयाधूसुतः प्रह्लादः। ३. समः स्तेयमिति पदच्छेदः। विटैर्न दस्युभिः समः त्वं स्तेयं कृत्वापीति योजना। ४. सात्मकुत्समात्मनो निन्दया सहितं यथा स्यात्तथा। ५. स्तेनम्। ६. मृत्स्नाया मृत्तिकायाः अशनेन भक्षणेन यदागः योऽपराधस्तास्मिन्।

हंत कथं तेऽप्यंधा बंधावहमेव यैर्वृतं कर्म. ६२

धन्या मन्यामह इह ता रामा[1]: सत्कृतोऽसि याभिस्त्वम्

अज्ञपतीनां नौका: सत्य: सत्य: स्तुतिर्न माहिमासाम्. ६३

श्रीकरधृतो जडोऽपि प्राप यशो जगति पर्वत[2]: स ततम्[3]

तद्दुर्दिनमप्यभवत्साधुमतं पुण्यपर्वत: सततम्. ६४

करुणामृतघन! करुणामृतवृष्ट्या ते जितैव सा वृष्टि:

जडजाप्यध[5]: पतंती हेतु: पंकस्य या च कंपस्य. ६५

गोवर्धनधर! तव भुजवीक्षाक्षण[6]विस्मृतात्मनां स्त्रीणाम्

अपि खरशब्दा[7] अब्दा: शंपा: कंपाय नाभवन्मनस:. ६६

त्रासेन सहोत्खात: सुहृदां सममुद्धृतो गवां पुच्छै:

अवतारित: पुनर्गिरिरिंद्रमदभरेण साकमीश्वर! ते. ६७

भूगोलभृद्भुजगमनमनुकुर्वन्[8] लीलया·धृताहार्य:[9]

उच्चैर्बभौ भुजस्ते छत्रस्य महेंद्रनीलदंड इव. ६८

वपुष: कांत्या मेघास्तव करकाराशय[10]: स्मितप्रभया

तडितोऽपि वाससा खलु पीता[11] भीता भुजाद् ध्रुवं वाता:. ६९

पर्वतधरेण भवता वज्रधरो लीलयाद्रिभिद्विजित:

आस्तां गिरिरपि हरिरपि जेतुमलं त्वं तृणेन कालमपि. ७०

गोत्रारे[12]र्वज्रभृत: क्रुद्धाद्गिरिरेकलोऽप्यपक्षो[13]ऽपि

प्राप्तो जयं न भङ्गं सत्पुरुषभुजाश्रितो न को विजयी? ७१

अमितापराधशमनं नमनं तव पादयो: सकृद्विहितम्

---

१. ऋषिपत्न्य: । २. गोवर्धनगिरि: । ३. व्याप्तम् । ४. मेघच्छन्नमह: । ५. डलयोरभेदाज्जलजा । पंकस्य कम्पस्य च हेतुरित्यन्वय: । ६. भुजवीक्षायां क्षणं विस्मृत: आत्मा याभिस्तासाम् । ७. गर्जन्त: । ८. शेषम् । ९. अत्र "तोर्लि" इत्यनेन नकारस्यानुनासिको लकार: कविना न प्रयुक्त: १०. करका वर्षोपलास्तासां राशय: ११. पीता: पीतवर्णास्तडित: । १२. गोत्राणां पर्वतानामरेरिन्द्रात् । १३. पुरा पर्वतानां पक्षा आसंस्ते च महेन्द्रेण च्छिन्ना इति कथात्र लक्ष्यते । व्यतिरेकोऽर्थान्तरन्यासश्च ।

किं द्रागिंद्राद्दूरीकर्तुमघमतोऽन्यदद्भुतं तीर्थम्. ७२
आगस्कृत्सु नमत्सु द्राक्कुरुषे त्वं क्षमां भृशं करुणः
अपराधिनां न चेत्किं कवचं तव चंडकालभीतिजुषाम्. ७३
त्रातो न कस्तृणादिर्जीवस्ते स्वपदरेणुना दरतः
कश्च चरः संसारान्मशकादिर्मधुरवेणुनादरतः. ७४
यश्चुंबितस्त्वयानिशमीश्वर! परमादृतेन वंशो[1]स्तम्
मन्ये रमाधराद्वरमिह माधुर्यं सदा नवं शस्तम्. ७५
जगता सममनुभूतं माधुर्यं चुंबता त्वया यस्य
स वरं श्रियोऽधरादिति वदता कविना श्रियः किमपराद्धम्? ७६
कास्ताः स्त्रियो न नीता वंशेन स्था[2]णुभावममुना याः
अन्यासां कैव कथा? सुकविशुक स्त[3]म्भमाह यमुनायाः. ७७
एणो[4] न केवलं तव वेणो रवमोहितो भुजंगोऽपि
हिंस्रोऽपि देव! बहुना किं स्रोतश्चारिजंतु[5]निकरोऽपि. ७८
द्यु[6]सदां सुमोहिता रवमधु पाययता च वेणुना सत्यः
पिदधे श्रुती शयाभ्यां यासां मुखमीक्ष्य मंक्षु नासत्यः. ७९
वंशो राकाजानेरंशो[7]रपि तापनाशको मधुरः
कोऽप्योघ[8] एष वहता गोप्यो दूरं हृता रसैर्येन. ८०
अगदं जगदंतर्बहिरस्तु सं[9]मुत्तव यशोऽमृतं पीत्वा
इति भगवत्यपराद्धं विधिना खलु वत्सवत्सपान्हरता. ८१

---

१. वेणुः। २. स्थाणोः स्तंभस्य भावं धर्मं स्तब्धतामिति यावत्। ३. यमुनाया जलमपि निश्चलमासीदित्याहेत्यर्थः। ४. हरिणः। ५. जलचरसमूहः। ६. यासां मुखं वीक्ष्य पुरा नासत्योऽश्विनीकुमारः पाणिभ्यां मंक्षु सपदि श्रुती श्रोत्रे पिदधे पिहितवांस्ता द्युसदां देवानां सत्योऽपि स्त्रियोऽपि रवमधु पाययता वेणुना सुमोहिता नितरां मोहिता इत्यर्थः। ७. अंशोः किरणात्। ज्योत्स्नाया इत्यर्थः। ८. एष वेणुरवस्य कोऽप्यपूर्व एव ओघः प्रवाहः। येन वहता रसैः शृङ्गारादिभिर्जलैश्च गोप्यो दूरं हृताः। "दूरं गोप्यो वहता रसैर्हृता येन" इति पाठान्तरम्। ९. मुदा सहितं यथा तथा।

तदनुभवोक्तेर्भ्रमो वयमद्भुतमेव हंत मोहस्तम्
निन्ये वशमाकृष्य द्युमणिमिव निजं गृहं तमोहस्तम्. ८२
पित्रा गवां रसास्ते तव पुत्रेण तु सपालका वत्साः
तच्चरितेन तु सकला गोपा गोप्यो वयं सुराश्च हृताः. ८३
स कथं निंद्यः कविभिः संस्थापयितुं पदे प्रशस्ते नः
योऽमृत[1]सागरफेनस्तेनमिह ततान ते यशस्तेनः. ८४
कृच्छ्राद्य[2]ददित्याप्तं दुर्लभमतुलैस्तपोव्रतैश्चीर्णैः
प्राप्ता गोप्यो गावस्तच्छ्रुश्रूत्वं श्रियो जगन्मातुः. ८५
यद्गोगोप्यो गावस्त्वामापुरपत्यमीश्वरं जगतः
न गतः किमिहोत्कर्षं विध्य[3]पराधोऽपि नाकिनां नगतः. ८६
अंगीकृता यदा ते गोगोपीनां जगद्गुरो! सुतता
मूर्तिर्न केवलं तव जाता सत्कीर्तिरपि जगत्सु तता. ८७
विधिपशुपशुपस[4]मदशा गोपकरायत्तबंधमोक्षेण
वत्सायितेन भगवन्! दाम्न्यर्पितकंधरेण तृणमाशितम्. ८८
येषां यत्स्वत[5]नुभुवा धनमपहृतमीश! सत्यपतिनापि
तेषां तदनूनाधिकमात्मधनं तेऽर्पितं सदीड्येन. ८९
स[6]वसंस्कृतहविषोऽपि प्रापितमुच्चैः पदं त्वया यवसम्
भवसंतरणेच्छुरहं हंत तृणेष्वपि तदा नतेष्ववसम्. ९०
हा हंत! तं तमंतर्भावयतोऽनुग्रहं व्रजे भवतः
मम तदपात्रस्य मनः किं तां चिंतां ब्रवीमि यां यातम्. ९१
वत्सीभूतं ब्रह्म ब्रह्मप्रमुखैर्महात्मभिश्चिंत्यम्

---

१. अमृतसागरस्य दुग्धसागरस्य यः फेनस्तस्य स्तेनं चौर्यकरम् । ततोऽप्याधिकं धवलमित्यर्थः । २. यत् अदित्या आप्तमिति पदच्छेदः । देवजनन्या यत् कृच्छ्रादाप्तमित्यन्वयः । ३. विधेर्ब्रह्मणः अपराधस्त्वां गोपीनां पुत्रं विदधतो विधेरपराध एव । स तु तासां नाकिनां नगतः कल्पवृक्षादप्यधिकं फलमदादित्यपराधस्योत्कर्षः । ४. "समकरुण" इति पाठान्तरम् । ५. स्वपुत्रेण ब्रह्मणा । ६. सवे यज्ञे संस्कृताद् हविषोऽपि । यवसं तृणम् ।

त्वां गोगोपीगोपाः पुपुषुः प्रेम्णा तनौ च रोमांचम्. ९२
स्वर्गाद्गुरु सत्यपदं सत्यपदाद्गुरुतरं च वैकुंठम्
वैकुंठादपि गुरुतममवनौ वृंदावनं वनं मन्ये. ९३
याः पूर्वं न क्वचिदपि कस्मैचिदपि प्रदर्शिताः प्रभुणा
अत्रैव पीतपट! ता अटता नटता त्वया कलाः सकलाः. ९४
यौ कमलावक्षस्यपि वक्षोजस्पर्शभूरिरक्ततलौ
तौ तव वृंदावनभुवि चंक्रमणं चक्रतुश्चिरं चरणौ. ९५
वृंदावनेऽनुभूतं गोपैर्गोपीभिरपि च यद्गोभिः
तन्नंदनेऽपि न सुरैर्नानंदवनेऽपि पंडितैः शर्म. ९६
चरणसरोजरजोभिर्देवसरित्कतिपयैः पुरा प्राप्तैः
महिमानमियंतामिता वृंदावनभूः किमंकिता पदकैः. ९७
तृणगुल्मव्रततिद्रुमदृषदो वृंदावनेऽत्र धूलिरपि
सर्वं तीर्थशताधिकमीश्वर! तीर्थांघ्रिणा[1] कृतं भवता. ९८
भोः! कतमो लोकतमो बाह्यं हर्तुं क्षमोऽन्य आदित्यात्
तेजास्विपूज्यपादात् आंतरमपि लोकबंधुतस्त्वत्तः. ९९
कुंभभुवां[2]भोधिरिव स्वेन निरुपमेन तेजसा यशसा
शौरिभुवा भवता द्रागप्ययमप्ययमलं भवो नीतः. १००
गोपोऽपि पंडितानां सर्वेषां संमतः सदा नंदः
यत्त्तैरलब्धगंधस्त्वमपि तदंकं गतः सदानंदः. १०१
जगति यशोदानंदौ धन्यौ शिशुना त्वया जगद्गुरुणा
उक्तावा[3]श्लिष्य गले यौ शतकृत्वस्त्वयांब! तातेति. १०२
वृद्धैरलमन्यैर्नो मैत्री भवतैव गोपशिशुनाऽस्ताम्
वृद्धसखा यामाप्तास्त्वत्तो मुदमाश्वपीह पिशुनास्ताम्. १०३
यममृतमुचो[4] वरं निजकिसलयतोऽमंस्त देवविटपी तम्

---

१. तीर्थं क्षेत्रं अंघ्री यस्य तेन। २. कुम्भभुवा अगस्त्येन। ३. यौ यशोदानन्दौ त्वया अम्ब! तात! इति शतकृत्वो गले समाश्लिष्योक्तौ इत्यन्वयः। ४. यं देवविटपी कल्पवृक्षोऽमृतं मुञ्चतो निजपल्लवाद्वरममंस्त तं घोषयोषिदधरं विटेन भवता पीतं धन्यं

किं घोषयोषिदधरं धन्यं ब्रूमो न देव विटपीतम्. १०४

द्रागद्रवति धीः श्रुते ते यशसि यथा नस्तथा न वेदांते

लब्धरतिः स्वपिति भुवि न पल्यंकेऽपीतरा[1] नवे दांते. १०५

त्वां सगुणं ब्रह्म वयं निर्गुणमपि नाथ संश्रिताः कवयः

रुचिवैचित्र्यादेकेऽलंकृतिमिव हेम केवलमिवान्ये. १०६

कैवल्यं पदमाप्ता ये भक्ता ये च विद्विषस्तव ते

तेन श्रिता वयं त्वां ब्रूमो भगवन्! प्रभो! नमो भवते. १०७

सकलं[2] स्ववयः कवयस्तव यत्र वयस्यममृतकरमहसः

सुयशः काले देशे व्यवहारे तन्नयंति तत्रैव. १०८

सरसि सरोजमिव त्वयि हृदयमिदं नः सुजीवने वसतु

तल[3] श्रीरिव भक्तिश्चात्रापि परंतु मात्र सेव चला. १०९

गीत्या मृग इव कुशलैः कामी प्रभुरिव सुरूपयार्पितया

भक्त्या भागवतैस्त्वं भगवन्! बहुभिर्वशीकृतोऽस्याशु. ११०

हृत्त्रस्तं[4] कस्य कवेः कालाच्छ्रुतरत्नसानुकंपस्य

तव संश्रयेन्न पादौ श्रितचिंतारत्नसानुकंपस्य. १११

इति श्रीरामनंदनमयूरविरचितं श्रीकृष्णस्तवनं संपूर्णम् ।

---

न ब्रूमः किमिति प्रश्नः । १. "प्यन्यथा" इति साधुः पाठः । (मयूरकविः) २. कवयो यत्रामृतकरमहसो वयस्यं तव सुयशो यत्र काले देशे व्यवहारे च वर्तते तत्रैव तत्सकलं स्ववयो नयन्तीत्यन्वयः । ३. त्वयि श्रीरिव नो भक्तिर्वसतु । सा भक्तिस्तु सा श्रीरिवात्र त्वयि चला मास्तु इति योजना । ४. हे श्रितानां चिन्तारत्न चिन्तामणे! श्रुतो रत्नसानोर्मेरोः कम्पो येन तादृशस्य कस्य कवेः पण्डितस्य कालान्मृत्योस्त्रस्तं भीतं हृन्मनः सानुकम्पस्य करुणावतस्तव पादौ न संश्रयेत् । सर्वस्यापि मनस्ते पादौ संश्रयेदेवेत्यर्थः ।

# रामकृष्णस्तुतिः*

(शार्दूलविक्रीडितं वृत्तम्)

कौसल्यासुत देवकीसुत यशोदापुत्र गोगोपिका-
सूनो पृश्नितनूज[1]नेऽदितिविकुंठाजानसूयात्मज
रोहिण्यात्मज देवहूतितनय श्रीरेणुकानंदन
ब्रह्माद्युद्भवमूल निस्तुल गुणैकालंकृते! पाहि माम्. १

कालिंदीतटकेलिलोल ललनालास्यैकबद्धादर
क्रीडानिर्जितकालियस्मय महादावानलप्राशन
कृष्ण क्लेशविनाशनाखिलकलाकौतूहलालंकृत
क्रूरारातिसमूहकाल करुणावारांनिधे! पाहि माम् २

कस्तूरीतिलकाभिराम कलिताकालांबुदात्मच्छवे
कुंजारण्यविलासकोकिल कलालापैकलुब्धश्रुते
कर्णालंबिविलोलकुंडल करेवेणो गलेकौस्तुभ
भ्राजत्कांचनकांतिचैल शिखिपिच्छोत्तंसभृत्! पाहि माम्. ३

खड्गालंकृतबाहुदंड खगमेशस्यंदन ख्यातिभृ-
त्खर्[2]वीभूत कृतप्रसाद खलखद्योतप्रदीपायित
खेदानाप्त खरासुरांतक खे[3]रेषुस्तोमतूणीरभृ-
त्खेलत्खेचरखंजरीटनयनागीतोन्नते! पाहि माम्. ४

गोधीगोचर दूरगूढगरिमन्गीतामृतांभोनिधे
गोपीगोरसभुग्गुहागत गृहस्थश्रेष्ठ गुप्ताशय
गीष्पत्युत्तम गुर्वनुग्रहगृहीतागाधलीलातनो

---

* यद्यपि कविलिखितायां मातृकायां "रामकृष्णस्तुति, पत्रें २." इति लिखितं वर्तते तथापि काव्यसंग्रहमुद्रिते पुस्तके दृश्यमानं 'हरिसम्बोधनस्तोत्रम्' इत्येवान्वर्थं नामास्य भासते। १. देवकीतनय। २. हस्तदोषः—खर्वी। खर्वीभूत वामन। ३. खराणामिषूणां स्तोमो यत्र तादृशं तूणीरं बिभर्तीति तत्सम्बुद्धौ।

गुह्यज्ञानगभीरतत्त्व गगनग्रस्तायते[1]! पाहि माम्. ५

गोविंदाच्युत गोपबालक गिरां दूरेत्य[2] गोपीपते

गंगातात गजेंद्रतारक गदापाणे गदाग्रेभव

गोसंरक्षक गेयसद्गुणतते गोवर्धनोत्धारक

ग्रैवेयीकृतगुंज गोकुलवधूलीलागुरो! पाहि माम्. ६

गंगाभृद्द्विरिभृद्गदाभृदरिभृत्[3]पाथोजभृत्कंबुभृ-

च्छ्रीभृत्कौस्तुभभृन्महीभृदसिभृत्तूणीरभृच्छार्ङ्गभृत्

गुंजाभृच्छिखिपिच्छभृत्तुलसिकाभृद्वंशभृद्वेत्रभृ-

च्छिंच[4]भृत्कंबलभृन्मनुष्यतनुभृच्छ्रीवत्सभृत्पाहि माम्. ७

चाक्रिंश्चित्तचकोरचंद्र चतुरास्यादे चतुर्वेदवित्

चातुर्याकर चारुचित्रचरितानिर्वाच्यवाचस्पते

चेतश्चोर चिरंतनाचल चमत्कारांचिताचंचला-

चाराप्रच्युत चिंतकाखिलजगच्चिंतामणे! पाहि माम्. ८

ज्योतिर्जीवनकृत् जनार्दन जगज्जीवातुकृज्जाह्नवी-

जन्मक्षेत्र जरादिवार्जित जयैकाधार जीवाश्रय

ज्याजाने जगदीश्वर व्रजवधूजाराऽज जन्याजित

ज्याघातांकितरम्यदोर्जलधिजामातः प्रभो! पाहि माम्. ९

तीर्थाधीश तपस्विमुख्य तपन त्रैय्यात्मक त्राणकृ-

त्तत्त्वज्ञानद तारक त्रिभुवनस्थायिन् तमालद्युते

ताराचक्रगत त्रिविष्टपगुरो तेजोनिधे तूर्णग

त्र्यक्षेषो[5]ऽतनुतापशामक[6] तुरंगास्य प्रभो! पाहि माम्. १०

दैत्यारे दलिताघ दानवरिपो दामोदर द्रौपदी-

दुःखारण्यदवाग्निदेव दमितादांतावदातादृत

दूरास्तोदय दीर्घदर्शन दयासिंधोऽतिदेवद्रुमो-

---

१. गगनग्रस्ता आयतिर्विस्तारो यस्य । २. गिरां वाचां दूरेत्यो दूरेभवोऽविषय इति यावत् । ३. अरिं चक्रं तद्बिभर्तीति । ४. शिचं शिक्यं बिभर्तीति तादृक् । ५. त्र्यक्षस्त्र्यम्बकः इषुर्बाणो यस्य । ६. 'क' इत्यपेक्षितमपि प्रमादादलिखितम् ।

दार द्राग्दितदासदैन्य[1] दरभृद्दिव्यद्युते! पाहि माम्. ११

दूर्वाश्यामल दासदूत दुरितास्पृष्ट द्युमन्देवकी-
दायाद द्युसदां पते द्विजपते दर्वीकरारिध्वज
दत्तात्रेय दिगंतविश्रुत दृशां दुर्लक्ष्य दीनावनो-
द्युक्तादीनवदावदाव[2] दयितानादिस्मृते! पाहि माम्. १२

दोषज्ञ द्रविणप्रद प्रथमजाऽभिज्ञ क्रियाज्ञ क्रतो
वैकुंठाधिपते दृढव्रत जितक्रोध प्रतीपांतक
कैवल्यैश्वर देव केशव हृषीकेशाऽक्षराऽधोक्षज
द्वारावत्यधिराज रुक्मिमदजित्सौभांतकृत्[3]! पाहि माम्. १३

धर्माध्वावन धन्य धीर धरणीध्राधार धीप्रेरक
ध्येयध्याननिविष्ट धार्मिक धुतानेकाघ काल ध्रुव
धानामुष्टिसुतुष्ट धेनुचरणप्रोद्धूतधूलीमिल-
त्धाराधूसर धीमतां धन धृताऽजीर्यत्धृते! पाहि माम्. १४

नित्यानंद निसर्गनिर्मल निधे नागेंद्र नारायण
न्यासीशान नवीननीतिनिपुण न्यग्रोध नासीरभृत्[4]
नानारूप निरीह नाथ नृहरे निर्माय नाकेश्वर
न्याधात्मनृपते नमस्कृतिगते नानानुते! पाहि माम्. १५

नंदांगप्रसनोत्सुकाजगरभिद्युग्मार्जुनोन्मूलन
द्रव्येशानुग शंखचूडदमनारिष्टप्रलंबांतकृत्
केशिद्वेषण धेनुकांतक तृणावर्तघ्न विघ्नापह
स्वीयानंदकरावतार खलजिद्राधापते! पाहि माम्. १६

पद्मावल्लभ पद्मनाथ परमप्रख्यात पाथोधर-
प्रख्य प्राज्ञ परात्पर प्रशमितापारप्रपन्नापद
पृथ्वीपालक पापिपावन पुरारातिप्रमोदास्पद
प्रेष्ठ प्रेमल पार्थसूत पुरुजित्पूर्णद्युते! पाहि माम्. १७

---

१. दितं खण्डितं दासानां दैन्यं येन सः। २. आदीनवा दोषास्तेषां दावो वनं तस्य दावो वह्निः। ३. सौभः शाल्वः। ४. नासीरं सेनामुखम्।

पारावारग पापपर्वतपवे पर्जन्यकृत्पूतना-
प्राणप्राशन पद्मसंभवपितः प्रेक्षावतां पूर्वज
पुण्याख्यान पुराणपूरुष पदानम्रापदुद्धारकृ-
त्पूताख्य प्रणवापराजित विपत्पाथस्तरे! पाहि माम्. १८

प्रद्युम्न प्रथितप्रभाव पिशिताशघ्न प्रजापालक
प्रह्वप्रेप्सितकृत्प्रसादसुमुख प्रांशोऽपवर्गप्रद
प्रीत प्रीतिकर प्रयागसदन प्राणिप्रयासापह
प्रज्ञानाकलित प्रपंचरहित प्राचां पते! पाहि माम् १९

बह्वाश्चर्य बुधेंद्र बुद्धिद बलिन्बुद्धाख्य बुद्धाखिल
ब्रह्मन्ब्राह्मण बाणबाहुदलन ब्रह्मण्य देवाब्जदृक्
बीभत्सुप्रिय बालकृष्ण बलभिद्बंधो बकारे बकी-
क्ष्वेडस्तन्यनिबद्धतृष्ण बलिभूयांचाबटो! पाहि माम्. २०

बद्धोन्मोचनकृद्द्विभीषणसख ब्रह्मद्विडुत्सादन
ब्रह्मास्त्रानलदग्धशात्रव बृहत्कीर्ते बलैकार्णव
बाणव्रातनिकृत्तराक्षसचमूतुंगोत्पतन्मस्तक-
व्यूहाच्छादितबिंबभास्कर कृतानेकस्तुते! पाहि माम्. २१

भौमास्वंतक भीष्मसंस्तुत भुजंगेंद्राभबाहोऽभव
भ्राजिष्णोऽभयदासदक्ष भरतभ्रातर्भृशोदाहृत
भूषाभूषण भूतिभासुर भिषग्भैषज्यकृत् भारभृत्
भैष्मीभर्तरिभारिविक्रमगते भृत्यार्तिभित्! पाहि माम्. २२

भक्ताभीप्सितभद्रभव्यचरितांभोधेऽभिरामाकृते
भूमन् भीहर भूभरापह भवभ्रांतिघ्न भूतिप्रद
भावायत्त भजज्जनाप्त भगवन्भास्वत्परार्ध्यप्रभ
भ्रूसंकेतवशानुवर्तिजगदुद्भूतिक्षते! पाहि माम्. २३

मेघश्याम मनोज्ञ मन्मथखने मानाथ मीनाकृते
मायाधीश्वर मानमानमधुभिन्मायिन्मुरद्वेषण
मूर्तानंद महेश माधव मुने मात्सर्यमोहातिग

म्लायत्सज्जनसस्यपूर्णकरुणावृष्टे महन्! पाहि माम्. २४
मार्कंडेयगुरो मृडार्चितमहाशक्ते मनोमंत्रकृत्
मंगल्याभिध मंजुरूप मघवन्मार्तंड मृत्युंजय
मुक्तालंकृत मुक्तपूजित मनोवाक्कायकर्मातिग
म्लेच्छोत्सादन मुक्त मुक्तिद महोराशे मधो! पाहि माम्. २५
यज्ञाधीश यशोधने यदुपते योगेश योगीश्वर
ध्येयांघ्रिद्वय यत्नलभ्य यमिहृद्विश्राम यत्युत्तम
यातायातविरामकारण यमाद्यष्टांगयोगास्थिते
यज्वन् यज्ञशरीर यज्ञफलभुग्यज्ञांतकृत्! पाहि माम्. २६
रोलंबालक[1] रोहिताक्ष रणजित् रागिन् रसज्ञार्थिकृत्
रत्नाधीश्वर रेणुकेय रिपुभिद्राजीवपत्रेक्षण
रक्षादक्षिण रैवताहितरते रोगघ्न रौद्राकृते
रुद्राराधितपादपल्लव रमारंग प्रभो! पाहि माम्. २७
श्रीमद्राघव रामभद्र रमणीयोदारकीर्ते रवे
राजाभिष्टुत राजराज रघुवंशोत्तंस रक्षोऽतक
रामारंजन राम रावणरिपो रात्रिंचरत्रासकृत्
रोचिष्णो रघुवीर रत्नरचिताकल्प प्रभो! पाहि माम्. २८
लावण्याकर लोभनीयललितव्याहार लक्ष्मीपते!
लीलामानुष लक्ष्मणाग्रज लयोत्पत्तिस्थितिप्रेक्षक
लोभानास्पद लोकलोचन लसल्लक्ष्मन् ललामांबुधे
लंकेशांतक लेखमोचनयशोलोल प्रभो! पाहि माम्. २९
वेदोद्धारक वेदवेद्य विषयव्यावृत्त विद्यानिधे
विश्वव्यापक वेणुवादनपटो विद्युल्लताभांबर
विष्णो वामन वासुदेव विनतावंशावतंसध्वज
व्यालाधीश्वरतल्प वासववरव्यूह व्रतिन्! पाहि माम्. ३०
वीर्योदारविराजमानविरते वर्ण्यावदान व्रजा-

---

१. रोलम्बा भ्रमरास्तत्सदृशा अलका यस्य ।

लंकार व्यसनघ्न वारिरुहभृत् विद्वंद्य विश्वंभर
विश्वास्य व्यपकारावित्तम वराहाकार विश्वंभरो-
द्धारोदार विशिष्ट विश्ववरद व्योमावधे! पाहि माम्. ३१
वालिध्वंसन वार्धिबंधन वसिष्ठाप्तात्मदृक् विश्वदृक्
विश्वामित्रमखावन व्रतिपते वैदेहकन्यापते
विख्याताद्भुतलील वाडववधूव्रीडाव्यथावारण-
व्यापारांघ्रिरजस्क वारितविपन्नाधे विधे! पाहि माम्. ३२
शौरे शाश्वत शुद्ध शोभन शतानंद श्रितानंदकृत्
शर्व श्राव्यगुण श्रमापह शरण्यांघ्रे शुभोत्पादक
शोचिष्केश शताह्व शोकशमन श्रेयस्तते शापहृत्
शंभो शंकर शर्वरीकरशरच्चंद्रास्य भो पाहि माम्. ३३
शूराग्रेसर शांत शांतिद शमिन् शोभाकर श्रीकर
श्रीकांत श्रुतिशेवधे श्रुतिशतांतःशंसित श्रीपते
श्यामांग श्वसनस्वरूप शरणप्राप्तावनैकादृत
श्रीजाने शिशुपालशातन शिव श्रीश्रीनिधे! पाहि माम्. ३४
शीलालंकृत शेषतल्पशयन श्रद्धालुसंशीलित
श्वेतद्वीपपदस्थिते शतधृते शंपाशताभांशुक
शर्माप्ते शिपिविष्ट शत्रुशमन श्रेष्ठश्रुते शारदा-
शब्दागोचर शक्तिशंसन शुचे शास्त्रारणे! पाहि माम्. ३५
शब्दब्रह्मशरीर शास्त्रकुशल श्लाघार्ह सच्छेखर
श्लोक्य श्लक्ष्ण शिखींद्रपिच्छमुकुट श्यामासमालिंगित
शश्वच्छोभित शर्मकृत् शतमख श्राद्धेश शुध्यागम
श्रीवत्सांचितवत्स शारदशशिच्छत्र प्रभो! पाहि माम्. ३६
सूक्ष्म स्वच्छ सुधांशुसुंदर सुदृक् सर्वज्ञ सर्वेश्वर
स्रष्टः साधुसहाय सज्जनसख स्वाधीन सत्यप्रिय
सत्यावल्लभ सत्यसंगर सुभद्रासोदर स्वंगद

---

१. वार्धिः समुद्रः ।

स्रग्विन्सामग सीरिहेत्यनुजने सन् सत्कृते ! पाहि माम्. ३७

सुत्रामानुज सात्वतर्षभ सहस्राक्षांघ्रिदोर्मस्तक

स्वर्भूसिद्धसमूहसेव्य सुभग स्वंग स्वतस्संभव

सर्वाध्यक्ष सुजात सित्विद सुहृत्संसारसंतारण

स्वामिन्सारसनेत्र सात्त्विक सुखस्तोमारणे ! पाहि माम्. ३८

सत्यज्ञाननिधे कलाकुलनिधे कारुण्यवारांनिधे

शब्दब्रह्मनिधे यशोमृतनिधे विश्वेष्टलीलानिधे

नानारत्ननिधे जगत्त्रयनिधे लावण्यपाथोनिधे

कल्याणैकनिधे महागुणनिधे तेजोनिधे ! पाहि माम्. ३९

हर्यक्षानन होमनिष्ठ हुतभुग्घोतर्हविर्भोजन

हीमन्हेपितकाल हंस हितकृद्धेलाजितद्वेषण

हारालंकृत हेमभूषण हताराते हराराधक

ह्रादिन्याभ धनुर्लताधर हरे हर्षांबुधे ! पाहि माम् ४०

क्षेत्रज्ञ क्षमिणांवर क्षितिभरक्षत्रापह क्षोभण

क्षुत्तृष्णादिविकारषट्करहित क्ष्मानिर्जरैकप्रिय

क्षत्तृप्रेमपद क्षताहितमद क्षेमालय क्षौद्रवाक्

क्षेत्रेश क्षणदाचरेशदमन क्षोणीपते ! पाहि माम्. ४१

क्षीरांभोनिधिमंदिर क्षणकर क्षांतापराध क्षम

क्षाम क्षीणविवर्धन क्षपितरुक्क्षुण्णासुरानीकप

क्ष्वेडग्रीवनुत क्षुमासुमनिभ क्षुब्धाब्धिफेनस्मित

क्षिप्रोत्धार करोहित क्षरपर क्षेत्रस्थिते ! पाहि माम्. ४२

छिन्नानेकभवोत्सवासनगुण च्छंदानुगेच्छावश

छद्मद्यूतहृताप्तसंपदवनीपालासुरच्छेदक

छत्रीभूतफणींद्रवारितघनासारच्छलानाकुल

छंदोभिष्टुतपादपंकजरजःस्वच्छच्छवे ! पाहि माम्. ४३

सत्त्वाढ्यप्रकृते परास्तनिकृते निर्दोषमोदाकृते

---

१. सीरहेतिर्बलभद्रः ।

सर्वत्रोपकृते विगीतविकृते लब्धात्मवित्सत्कृते
नित्यानंतधृते दयालयमतेऽन्वर्थापबाधस्तुते
भक्तस्वर्व्रतते क्षताहिततते लक्ष्मीपते ! पाहि माम्. ४४
विद्वद्वृंदपते तपोनिधिपते तत्वज्ञगोष्ठीपते
पुण्यारण्यपते बहुप्रदपते सद्वीरसेनापते
योगाभ्यासिपते क्षमाधनपते विष्वग्दयावत्पते
दीनाऽनाथपते जगत्त्रयपते सीतापते ! पाहि माम्. ४५
वाणीनाथगुरो सनंदनगुरो सद्भक्तसंसद्गुरो
प्रह्लादादिगुरो बिभीषणगुरो सुग्रीवसेनागुरो
गीर्वाणर्षिगुरो पराशरशुकव्यासांबरीषोद्धव-
व्याधाक्रूरकिरीटिदाल्भ्यजनकश्रीसद्गुरो ! पाहि माम्. ४६
भक्ताब्जद्युमणे महीपतिमणे शस्त्रज्ञचूडामणे
भास्वद्वंशमणे सुलक्षणमणे शास्त्रज्ञसंसन्मणे
वैराग्याढ्यमणे सुरद्रुममणे देवर्षिभूषामणे
पुण्यश्लोकमणे पुरातनमणे चिंतामणे ! पाहि माम् ४७
अक्रूरेक्षितदिव्यरूप रजकव्यापादन स्वेष्टकृत्
कुब्जारूपद पुण्यदर्शन जगन्नेत्रोत्सवैकाकर
मालाकारकृतप्रसाद कुशलालंकार रामानुज
ध्वस्तेष्वास हतद्विपेंद्र रदभृच्चाणूरभित् ! पाहि माम्. ४८
मत्तेभोद्भटमल्लमर्दन महावीर प्रजारंजन
स्वायत्तोग्रपराक्रमाद्भुतरुचे कंसासुविध्वंसन
सद्बंधो वसुदेवबंधहरण स्वीयेप्सितापूरण
श्रीसांदीपनिशिष्य कालयवनाराते प्रभो ! पाहि माम्. ४९
कौंतेयप्रतिपालनोत्सुक जरासंधाभियाते नृगो-
द्धर्तः पौंड्कमूर्धकर्तन सुधन्वप्नक्षराजार्चित

---

१. हस्तदोषः–नृगोधर्तः ।

भामेच्छावशपारिजातहरण प्रत्यूहकृद्वज्रभृ-
  द्दर्पघ्नाजित सन्मयूरकरुणांभोद प्रभो ! पाहि माम्. ५०

---

# पांडुरंगस्तोत्रम्

## ( प्रथमम् )

### ( अनुष्टुब्वृत्तम् )

प्रसादं कामये नित्यं समदं[2] पांडुरंगजम्
नचोच्चैःश्रवसं नित्यं समदं पांडुरं गजम्. १

वंदे निजयशःपाननिष्ठं तं स्वरसादरम्[3]
शुद्धप्रेम्णा[4]मिष्टकायां तिष्ठंतं स्वरसादरम्. २

पांडुरंगं सकृन्नत्वा कलिना मलिना अपि
भवंति भावुका भास्वद्रुचयः[5] शुचयः सदा. ३

संसृतौ कलिकाले यः सदरः[6] सदरस्तुतेः[7]
विठ्ठलादभयं प्राप्तः करुणावरुणालयात्. ४

यच्चेतः पांडुरंगस्य सदा चरणसादरम्,
तं[8] संतं नान्यमूचुर्ज्ञाः सदाचरणसादरम्. ५

विठ्ठलेति जपेन्नाम पांडुरंगस्य यः सदा,
कृपाकटाक्षा न विभोरंत्यजं तं त्यजंत्यहो. ६

यः पिबत्यसकृन्नाम प्रभोर्भवगदार्दितः,
हेपयत्यमृत किं न स कलौ सकलौषधम्. ७

---

. अत्र समाप्तिद्योतकः कविकाव्यनामाद्युल्लेखो न वर्तते । २. समदं शमदम् । वे आत्मनि यो रसस्तस्मिन्नादरो यस्य तम् । ४. स्वरे शुद्धप्रेम्णा गाने सादरम् । ास्वद्रुचयः सूर्यकान्तयः । ६. दरेण भीत्या सहितः । ७. सद्भिः अरं प्रभूतं र्यस्य तस्मात् । ८. ज्ञाः पण्डितास्तं संतं सदाचरणे सादरं नान्यमूचुरित्यन्वयः । ामृतं सः पुरुषः कलौ सकलौषधं शुण्ठीं न हेपयति किम् ? इत्यन्वयः ।

मोचिताः पांडुरंगेण पतिता अतितापतः,
अयमेव कलौ कीर्त्या निजया विजयावहः. ८

नाम्ना यः पाति यमलं नाम्नायः स्तोतुमीश्वरम्[1],
यशसा यस्य सद्वृंदं समहं[2] तमहं भजे. ९

वैरस्यदर्शिना स्वर्गे कलौ वैरस्य कारिणा
यशसास्य प्रभोस्तीर्थे सज्जना मज्जनालसाः. १०

वदंति[3] विठ्ठलं विज्ञा जडेभ्योऽप्यतिदुर्लभा,
या दीयते प्रभो! भक्तवश! सा यशसा तव. ११

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा येऽन्येऽपि संकराः,
रंकराजमुखाः सर्वे कृताः श्रीशेन शंकराः. १२

पूर्वं प्रयासेनाविद्याविनाशमलभन् जनाः,
अद्य नाम्ना प्रभोः कष्टं विनाशमलभं जनाः. १३

पांडुरंगपुरं मोहो वदत्यत्रत्यमानसे[4]
कथं तिष्ठामि विजये हंत तेऽहं तते सति १४

नामसंकीर्तनप्रायं पांडुरंगपुरं विना
भ्रमन्भवति मेदिन्यां परितोऽपरितोषभाक्. १५

पांडुरंगपुरे पीतप्रभुनामयशःसुधाः
बुधाः स्मरंति न स्वर्गं दृष्टचक्रगदायुधाः १६

तीर्थान्यायांति सर्वाणि दैवतान्युत्सुकानि यत्,
द्रष्टुं भगवतः को न चत्वरं सत्वरं व्रजेत्? १७

पांडुरंगपुरं प्राप्य सर्वो ना रदति[5] स्फुटम्,

---

१. यमीश्वरं स्तोतुमाम्नायो नालमित्यन्वयः। २. सानन्दम्। ३. विज्ञाः पण्डिता विठ्ठलं वदन्ति। हे भक्तवश! अतिदुर्लभा या मुक्तिर्जडेभ्योऽपि दीयते सा न त्वया किंतु तव यशसा यशोगानेनेत्यन्वयः। ४. अत्रत्यमानसे वर्तमानो मोहः पाण्डुरंगपुरं वदति। हन्तेति खेदे। त्वयीत्यध्याहार्यम्। त्वयि तते सति सर्वत्र प्रथितयशसि सति अहं ते तव विजये कथं तिष्ठामि। त्वां विजेष्ये इत्यर्थः। ५. रदति विदीर्णो भवति। द्रवीभवतीत्यर्थः।

हरिनामयशोगानानिरतोऽविरतोत्सवः. १८

पांडुरंगपुरं संतो भूवैकुंठं वदंत्यहो!

एतत्तु सर्वसुलभं कुलभंजनमंहसाम्[1]. १९

प्रवर्तितेन परमामृतसत्रेण सर्वदा

पुंडरीकेण सर्वोऽपि सत्रपः[2] सत्रपः[3] कृतः. २०

पुंडरीकेण सर्वार्थैः सत्कृतं यत्कृतं तथा

ब्रह्मांडेऽत्र न केनापि कविना भाविना[4]ऽमलम्. २१

अमुना यमुनारोधः पूर्वं भीमरथीतटम्

पश्चादलंकृतं गोपच्छद्मना पद्मनाभिना[5]. २२

दयालुना भगवता पांडुरंगेण बंधुना

दीना हीना निजगतिं गमिता अमिता जनाः. २३

पांडुरंगः प्रभुर्भक्तबहुमानवशंवदः

बिभर्ति भर्ता जगतां शिरसातिरसा[6]च्छिवम्. २४

शृण्वन्नभंगाननिशं तृप्तो नाद्यापि विठ्ठलः

कथं हरंतु न सतामुक्तयो मुक्तयोगिनः[7]. २५

धीः श्रियं जनतां भक्तौ तामसीमा[8]मुदारताम्

जानात्यच्छा[9] प्रभोर्वेत्ति तामसीमामुदारताम् २६

मधुपा अप्सु राजीवं, सुरा [10]जीवं यथा दिवि,

उपासते तथा संतं पांडुरंगपुरे जनाः. २७

पांडुरंगपुरस्था ये जीवन्मुक्ता हि तेऽखिलाः,

यत्प्रभूक्तिः स्वतीर्थाप्तमज्जना मज्जना[11] इति. २८

मज्जनं चंद्रभागायां, पांडुरंगस्य दर्शनम्,

---

१. पापानाम्। २. सत्रपो देवः। देवलोक इत्यर्थः। ३. लज्जान्वितः। ४. भवः संसारोऽस्त्यस्य तेन। संसारिणेत्यर्थः। ५. पद्मनाभिना पद्मनाभेन विष्णुनेति यावत्। ६. अतिरसात्प्रेम्णोऽतिशयेन। ७. मुक्ताश्च योगिनश्च तान्। ८. असीमाममर्यादाम्। ९. अच्छा निर्मलैव धीस्ताम्, असीमाम्, उदारतां वेत्तीति योजना। १०. बृहस्पतिम्। ११. मम जनाः मद्भक्ताः।

कीर्तनश्रवणं यस्य स महासमहा[1] भवे. २९
तीर्थं क्षेत्रं पांडुरंगो नामसंकीर्तनं कलौ
मलौघहृत्स्वमहसा सहसा रचितेंऽजलौ. ३०
विट्[2] ज्ञानेन ठान् शून्यान् लाति गृह्णाति विठ्ठलः
निरुक्तमिदमस्माकं चरमं परमं बलम्. ३१
जडोद्धारयशोग्रंथग्रहहृतिसुमेधसे
नमो भगवते तस्मै पांडुरंगाय वेधसे. ३२
नमोऽस्तु पितृभक्ताय पुंडरीकाय साधवे,
जडोद्धारव्रतं पुण्यप्रभावाद्यस्य माधवे. ३३
ज्ञानदेवैकनाथाद्या नामदेवादयोऽपरे
तेभ्यो नमोऽस्तु यैर्भक्त्या रंजितोऽरं जितोऽजितः[3]. ३४

---

# पांडुरंगस्तोत्रम्

## (द्वितीयम्)

(पज्झटिकावृत्तम्)

बालदिगंबर एको धूर्तः स्वांतहरो मनुरेव स मूर्तः,
भीमरथीसरितस्तट आस्ते लोकाः स्ववशं नीता आस्ते[4]. १
सर्वस्वस्य करोत्यपहारं तदपि वदंति जनास्तमुदारम्,
द्रष्टुं यांति च वारंवारं प्रेम्णा श्लिष्यंत्यपि चमुदारम्. २
श्लिष्यंत्येनं सुदृढं योषाः स्वामिसमक्षमचिंतितदोषाः,
चित्रमिदं विगतेर्ष्यारोषाः सर्वेऽपि भवंत्येव सतोषाः. ३
यस्य पुरः स्वजनेऽप्यनुकालं विवशा आपंडितमाबालम्
गायंत्युच्चैः कृतकरतालं नृत्यंति च विहसंति बतालम्. ४

---

१. अतितेजस्वी । २. इयं विठ्ठलशब्दस्य निरुक्तिः । ३. अत्र कविमातृकायामपि समाप्तिद्योतको लेखो न दृश्यते । ४. आः ते इति पदच्छेदः ।

यं दृष्ट्वैव सकृत्खलु देहं सधनतनयदयितं निजगेहम्
स्मरति न हृदयं त्यक्तस्नेहं वशिनं मन्ये तमसंदेहम्. ५

---

# पांडुरंगस्तोत्रम्

## (तृतीयम्)

(द्रुतविलंबितवृत्तम्)

व्रजपते! जपतेऽस्यभयप्रदः सुरसदो[1] रसदो महिमा तव,
अवनगे घनगेयरुचे[2]ऽशनिस्त्वमव माऽभव मामकरोर्वैराम्. (?) १
सततमस्तु मयि प्रणतेऽखिलप्रणतवत्सल! भव्य यशोनिधे!
चरणभक्तिरुदार! तव प्रभो! रविवराविवरासन! मुन्निधिः. २
इह कलावपि जंतुमजामिलादधिकमच्युत! नाम यदृच्छया
सकृदथाप्यसमग्रमितं नु कं न समलं[3] समलंकुरुते भवान्? ३
रुडपि ते शिवकृद्भगवन्! द्विषां प्रणमतां किमु युष्मदनुग्रहः
परमदुर्लभमीश! सुनिर्भयं पदमिता दमिता भवता खलाः. ४
सपदि संप्रति भीमरथीतटे स्थितिमुपेत्य जडा अपि जंतवः,
इह कृता निजकीर्त्यमृतेन के न भवता भवतापविवर्जिताः? ५
सित[4]सरोरुहसाह्वमुनेः पितृव्रतवशाज्ञतमःप्रशमोद्यत!
प्रणतवत्सल! विठ्ठल! ते यशः कविशते विशते स्वयमादरात्. ६
श्रुतिनुतस्य जने कृपणे कृपा परमते! रमतेऽपि सदाशिवः,
तव यशस्यमले विपुले सुधासरसि को रसिको न निमज्जति? ७

---

१. सुराः सीदन्ति अस्यामिति सुरसत् तस्याः । देवसभाया इत्यर्थः। २. घनवद् गेया वर्ण्या रुचिः कान्तिर्यस्य तत्सम्बुद्धौ । त्वमघनगे पापपर्वते अशनिर्वज्रं तद्वत् पापानि नाशयसीति भावः । हे अभव अज । मा मां अव रक्षेति योजना । ३. समलं सपापम् । ४. पुण्डरीकमुनेः । सितसरोरुहं पुण्डरीकं सा आह्वा नाम यस्य तस्य मुनेः ।

बत कबीरमुखा यवनाः कृताः शुचितमा निजनामपरास्त्वया
भवति पात्रमपि प्रजडः सतां द्युनग! ते न गतेरिह को हरे! ८
वरदराज! मुकुंद! तुकाभिधो वणिगतिप्रथितः स्तवनैस्तव,
सकलसाधुमनःपरितोषकृत्कविवरो विवरोज्झितशुद्धवाक्.[1] ९
स्वकरुणां वदसि ध्रुवमंत्यजः स्मरणकृद्यदि देवि न तं त्यज,
पतितपावन! नाम च तन्मृतावलसरे वस रे! वदने श्रुतौ. १०
श्रुतकथे! भवतः स्वजनापदामगदयागदया क्रियते न सा.
पितृशतैः करुणा करुणानिधे! तनुभवेऽनुभवेन सतामिदम्. ११
दिश दयार्णव! चक्रमनर्थहृत्स्वशरणागतविघ्नविनाशकृत्,
त्वयि मनोऽस्तु मम प्रणतोद्धृतावनलसेऽनलसेवितसत्कथे. १२
सुपतिता अतितापसमाकुला अशरणाः शरणागतवत्सल!
तव मुकुंद! सकृच्छ्रुतसत्कथाः सुरगुरोरगुरोकासि सत्कृतिम् १३
जडसमुद्धरणं प्रथितं कलौ करुणविठ्ठल! तेऽद्य महाप्रभोः!
अनुभवञ्श्रुतवांश्च सदुक्तितो नयमतो यमतोऽपभयोऽखिलः १४
सदयकोटिशताधिककर्मणे नतसमस्तजनाशनिवर्मणे[2]
भगवते ननु तुभ्यमहं करोम्यज! नमो जनमोहहराभिध! १५
उदितहार्दभरैः कृतकीर्तनैस्त्वमिह विठ्ठल भीमरथीतटे,
लसदभंगगुणैस्तव सद्यशः सुरसिकैरसि कैर्न वशीकृतः. १६
श्रुतिरहस्यविदः स्वपदं गता अपि भवंतमुदारगुणं प्रभुम्,
परमकारुणिकं सुहृदं परं मुनिजना निजनाथमुपासते. १७
स्वपरिरंभसुखातिशयोचितं प्रणतमाशु करोष्यखिलं जनम्,
अयि! वदान्यगुरो[3]! तव सोऽधिकं हनुमतोऽनुमतोऽप्यलसो जडः १८
तव पुमर्थदपुण्ययशःकथाश्रवणविस्मृतदेह इतस्ततः
भवति विठ्ठल कोऽपि जनस्तपोवनमना न मनागपि तीर्थधीः. १९
य इह दृष्टभवच्चरणांबुजानपदमूनमुमेशवृतात्पदात्

१. विवरं मुखबिलं तस्मादुज्झिता निर्गता शुद्धा वाग् यस्य सः । २. वर्म कवचम् । ३. "गुरोऽद्य तवाधिकं" इति पाठान्तरम् ।

खलु लभंत उदाराशिरोमणेस्त्वदयि ते दयितेषदपि श्रियः! २०
निजयशोधिकमांतरमादरं प्रकटयंतमुदारगुणं प्रभुम्,
स्वजनसद्यशसः श्रवणे सदा कृतमहं तमहं शरणं गतः. २१
निजयशोमृतसेवनसक्तया सततसात्त्विकभावसमृद्धया
भगवता भवता बहवः कृताः स्वसभया सभया भृशनिर्भयाः २२

(अनुष्टुब्वृत्तम्)

प्रियस्तुतेर्भगवतः पांडुरंगस्य पादयोः
मयूरेणार्पिता भक्त्या या स्तुतिः सास्तु तीर्थवा[1]ः. २३

---

# पांडुरंगस्तोत्रम्

## (चतुर्थम्)

(स्रग्धरावृत्तम्)

श्रीजाने! पांडुरंग! त्वामिह कलियुगे दर्शनात्पासि पापा-
निरयाख्यातं दयार्द्रैः सुमतिभिरसकृत्त्वज्जनैः सत्यसंधैः,
तत्सत्यं मन्यमानोऽहमपि तव विभो!ऽपश्यमेवांघ्रिपद्मं
निष्पापोऽस्मीति मन्ये, तदपि खलु कुतोऽद्यापि नो तापशांतिः? १
वैराग्यं नो न भक्तिर्न च परिचरणं सज्जनानां बतास्मा-
द्धेतोस्तापोपशांतिर्न मम यदि विभो! सत्यमंगीकृतं मे[2];
को ब्रूयात्साक्षिणस्ते पुर इह वितथं देव! किंत्वत्र किंचित्
पृच्छामि त्वां नमस्यन्ननु कलुषहृते तानि किं संति पूर्वम्? २
नाम्नो माहात्म्यतस्ते बहव इह कलौ विठ्ठल! प्रापुरग्र्यां
शांतिं भक्तिं विरक्तिं गतिमभिलषितां योगिभिर्नारदाद्यैः[3],

---

१. तीर्थोदकम्। अस्मिन् स्तोत्रे चित्रकाव्यपरायणस्य कवेर्बहवः श्लोका अतीव दुर्बोधाः सन्ति। महता प्रयत्नेनापि तेषामर्थो न ज्ञायत इति विदितमस्तु रसिकानाम्। २. मे इति विभक्तिप्रतिरूपकमव्ययम्। मयेत्यर्थः। ३. "योगिनो नारदाद्याः" इति पठितुमुचितम्।

तत्ते नाम श्रुतं मेऽसकृदपि च विभो! गीतमुच्चैस्त्वदीयै-
हीं[1] कष्टं नष्टमद्याप्यतिगुरु न कथं जालमाः संशयानाम्? ३
त्वं तु स्वामिन्! स एव स्वयमसि तमसि स्वाश्रितानां प्रदीप-
स्त्राता योऽतेवसायिप्रभृतिमलधियां कीर्तनादेव नाम्नाम्,
विप्रेष्वत्यादरस्तेऽवसि यदि शरणं तान्स्वपादाब्जमाप्तान्
किं चित्रं विठ्ठलायं द्विजकुलज इति त्राहि[2] मां दीनमद्य. ४
पापोऽहं पापकर्मेति च सततमहं स्नानकाले ब्रवीमि,
कृत्वा पापं कथं मे कृतमिति बहुशश्चापि तप्तो भवामि?
स्वामिन्! रक्ष क्षमस्वेत्यसकृदपि विभो! प्रार्थनां ते करोमि,
ब्रूह्यन्यत्किं करोमि प्रभुवर!? चरणौ तेऽर्तिशांत्यै स्मरामि. ५
दीनोऽहं दीनबंधुस्त्वमहमघनिधिः पावनस्त्वं प्रसिद्धो
भीतोऽहं कालदंडाच्छरणमुपगतस्त्वामसि त्वं शरण्यः
दाता त्वं सद्वराणां वरदगुरुरहं याचकस्त्वं दयावा-
नार्तोऽहं त्वं क्षमावानहमपि विनतः पादयोः सापराधः. ६
मां कामक्रोधलोभादिभिररिभिररं चेतसा मोहितेन
ग्रस्तं किं नाथ! दुष्टोऽयमिति परवशं मन्यसे मे न दोषः?
यातो दैवेन दीनः प्रबलखलवशं निर्दयैः पीडयमान-
स्त्वां स्मर्तुं नालमन्यत्किमथ कथय ते कोऽत्र सेवावकाशः? ७
साक्षी पश्यस्यपि त्वं स्वयमनयकृतोऽरीन्षडुग्रान्समर्थो
हुंकारेणापि दुष्टानसि भुवनपते! भस्मसात्कर्तुमेतान्,
हुंकारेणालमात्मा[3] प्रभुवर! भवतो मास्त्विहायासपात्रं
दृष्ट्या किं न स्युरेते भसितमयि विभो! मय्युपेक्षैव नूनम्? ८
दीनोपेक्षां न कर्ता त्वमहमिति विभो! वेद्मि तत्तूक्तमर्त्या[4]
मर्त्यानां देवतानामपि खलु न हि भो त्वां विनान्योऽवितास्ति.

---

१. आः इति मनःखेदे। २. त्राहीत्यपाणिनीयम्। त्रायस्वेत्यर्थः। ३. हे प्रभुवर! भवत आत्मा इहास्मिन् कर्मणि आयासपात्रं मास्तु इत्यन्वयः। ४. तत्तु तद्वचनं तु मया अर्त्या पीडयोक्तमिति योजना।

श्रांतः प्राप्तोऽसि निद्रां ननु किमयि विभो ! तिष्ठतापीष्टकायां
लोकैरालिंगितेनाप्यविरतमपि सा सेव्यते चित्रमेतत्. ९
भो नाथ ! प्राकृतोऽपि प्रभुरिह भवति त्यक्तनिद्रः कुटुंबी
पंचानां पालकोऽपि क्षणमपि न मनाग्जातु निद्रात्यचिंतः,[1]
त्वं त्वेकश्चासहायोऽपि च खलु जगतां साधुभर्ता पुराणो
निद्रामासेवसे चेत्कथयतु भगवान्का गतिर्विष्टपस्य ? १०
योगीशोऽस्वप्न[2]नाथः कथमवनविधावेकदक्षः कथं वा
यन्निद्रालुत्वमेवं सति मतिमति न त्वय्यदः किं यशोघ्नम् ?
कालाद्दस्योः सुलुब्धादलमपहरतो मोचयेत्कः समर्थ-
स्त्वत्तोऽन्यो दीन[3]दासद्रविणनिधिमिमं मां द्रुतं जागृहीश ! ११
नेयं निद्रा यदि स्याद्भगवति जगतां भर्तरि त्वय्यपीशे
गुप्ते कृत्स्नापि जीवव्यवहृतिरनिशं किं यथापूर्वमास्त ?
न ह्यस्तं तिग्मरश्मावचलमुपगते भासके भव्यभासि
लोके दृष्टा श्रुता वा मृगजलतटिनी तत्र चैषां प्रवृत्तिः. १२
नो निद्रा नो समाधिः क्वचिदपि न च ते यातमन्यत्र चित्तं
नूनं रोषः सदोषे मयि तव भगवन् ! विद्यते तेन मौनम्,
नैवैतत्तार्कितं मे सुमतिमतमये प्राकृतोऽपि प्रभुर्यत्
सद्यः क्रोधं जहाति प्रणति[4]मति कृतागस्यरातावपीश ! १३
शंके रंके मयि त्वं प्रभुवर कुरुषे कंचनामुं विनोदं
किं वक्तायं कविर्मामिति कुतुकितया श्रोतुकामो वचो मे,
नो चेदुच्चैः कृपालुः कथमियदणुतोऽप्यूनमद्यापि कार्यं
कर्तुं कर्ता विलंबं न हि गिरि[5]धर ! ते स्यात्तृणस्यातिभारः. १४
ग्रस्तोऽस्म्याकंठमुग्रप्रकृति[6]मनसिजेनाहिना बालभेकः

---

१. " **निद्राति साधिः** " इति पाठः । साधिः मनसस्तापः । २. **अस्वप्नानां** देवानां नाथः । ३. '**स्वीयदास**' इति पाठांतरम् । ४. नमनपरे । ५. गिरिधरेति साभिप्रायं विशेषणम् । परिकरालंकारः । ६. "**प्रकृतिपतिमनोजाहिना** " इति पाठान्तरम् । मनोजो मदनः ।

पाह्यस्मास्त्वं त्वदन्यो ननु दशमकरोत्सानुकंपामिभे[1] कः ?
स्तोत्रं चेच्छ्रोतुकामोऽस्ययि मयि विकले बालिशे सेवके कां
शक्तिं पश्यस्यदृष्ट्वा घनमपि कुरुते किं शिखी देव ! केकाम् ? १५
त्वं चेदद्य प्रसादं ध्रुव इव कुरुषे देव ! बाले मयीह
स्तोतुं स्यामेव कामं निपुणतरकविः श्राव्यभव्यप्रबंधः,
कः स्तोता तात ! जातस्तव जगति विनानुग्रहाद्विप्रदेवे-
ष्वन्येष्वप्यब्जयोनिः प्रभुरपि भवतोऽनुग्रहादेव सुज्ञः १६
मह्यं देहि प्रभो ! स्वस्तवकवनवरं स्वस्य च प्रीतिहेतुं
यत्त्वं स्तुत्यातितुष्टो हृदि भवसि तथा नान्यसत्कारकोट्या,
नुत्या नुत्या च तज्ज्ञैरजित ! न विजितः कैर्भवान्पाददासै-
राप्तैराप्तो न मोदं प्रभुतिलक ! यथा भक्तवृंदैरसंगैः ? १७
आरब्धासु त्वदंघ्रिस्तुतिषु सुरधुनीवीचिमालामलासु
प्रादुर्भूते पुरस्ते नवमुदिरघटागर्वसर्वंकषेंऽगे
भावैरालिंगितोऽहं सखिभिरिव समं सात्विकैरुत्सवोत्कै-[2]
र्युक्तो मुक्तोक्तिनत्या दर इव च जनौ त्वं वदास्यां कदा स्याम् ? १८
श्रीमत्या भीमरथ्यास्तटभुवि भवता तिष्ठता विष्टपेश !
स्वामिन् ! सौभाग्यमस्या गमितमतिनुतिं स्वर्धुनीभाग्यतोऽपि,
पाथःस्पर्शादपंकामलमियमवनीमेव नो चंद्रभागा
कर्तुं कीर्त्या त्रिलोकीमपि च विजयते तीर्थपादप्रिया ते. १९
देवास्तीर्थानि संतः खलु सततमपि स्नातुमायांति हर्षा-
दित्थं साधूक्तमेव श्रुतमसकृददो देव ! दासेन ते मे;
तस्मादस्माकमेषा सकलमलधियां नाथ ! मातेव सद्यः
पंकप्रक्षालनेन प्रियमुचितमरं किं न कुर्याद्दयार्द्रा ? २०
भो श्रीमन्विठ्ठल ! श्रीपतिमतिथिरहं त्वामुपेतोऽस्मि. किं मां
सत्कार्यं नाद्रियंते बत भवदनुगाः साधवः सद्विचाराः ?

---

१. नक्रोपपीडिते गजेन्द्रे । २. उत्सवेनानन्देन उत्काः उत्कण्ठिता उत्पन्ना इति यावत् ।

ब्रह्मण्यस्त्वं तु लक्ष्म्या वससि दयितया नित्यमंतःपुरे हा!
  कष्टं! नष्टं व्रतं ते. मम च यदफलप्रार्थनः सन्निवृत्तः. २१
भो ब्रह्मन्! पुंडरीक! द्विजवर! भवतः स्वास्थ्यमभ्येतु चित्तं
  'दीनांस्तापत्रयार्तान् शरणमुपगतानुद्धरिष्येऽहमाशु'
इत्येवं सुप्रसिद्धं सुरमुनिसविधं यत्प्रतिज्ञातमग्रे
  तत्सत्यं सत्यसंधस्त्वमिह कलियुगे कुर्वधारे! नमस्ते. २२
दुःखाब्धेरुद्धृतानां प्रभुवर! भवता मादृशानां जनाना-
  माकंठं तर्पितानाममलममृतरसेनोत्तमेनादरेण,
आशीर्भिः पुष्कलाभिर्जगति नृपसुरैरप्यरं दुर्लभाभिः[1]
  प्राप्तं पूर्वं यशस्ते परममिह पुनः प्राज्यमप्याप्नुहीश! २३
दीनानां दैन्यनाशात्समुपगतमुदामाननादादरेण
  प्रोद्भूता आशिषस्त्वां पतिमभिवृणते कांतमेकं वरेण्यम्.
दंड्यो दुष्टोऽस्मि यद्यप्यहमुचिततरा मे गृहीतुं कुबुद्धे-
  राशीराशीविषस्यार्पितमणिरिव ते स्यात्प्रभो भूषणाय. २४

इति श्रीरामनंदनमयूरेश्वरकृतं पांडुरंगस्तोत्रं समाप्तं तच्चरणयोरर्पितं च ।

---

# पांडुरंगस्तोत्रम्*

## (पंचमम्)

(स्रग्विणीवृत्तम्)

सख्यमापुर्यया बालगोपा वने भीमरथ्यास्तटे सत्यतः[2] पावने
साधिता पुंडरीकेण या साधुना सिद्धिरालिंग्यते[3] सज्जनैः साऽधुना. १

---

१. हस्तदोषः—दुर्लभाभि । * अस्य कविलिखिता मातृकोपलभ्यते । किंतु तस्यां समाप्तिद्योतको लेखो न दृश्यते न वात्रैवेतत्समाप्तमिति परिज्ञातुं पार्यते । इदं तु नामधेयमस्माभिः प्रकरणार्थमनुसृत्यैव विहितामित्यवधेयं सहृदयैः । २. सत्यतः सत्यलोकादपि । ३ सिद्धिः श्रीविठ्ठलरूपा ।

क्वाऽपि कस्मादपीषन्नदासादरं यात्विति त्यक्तनिद्रं सदासादरम्
तिष्ठते या कलौ सानुकंपाऽवनौ श्यामलाहं तदंघ्री भजे पावनौ. २
विठ्ठलाख्या भवाब्धौ तरिः[2] पारदा यां श्रिता वज्रवेदेंदुभृन्नारदाः[3]
स्थापयामास सद्धार्मिकः कोपि तां चेतसैवाश्रये साधुभिर्गोपिताम्. ३
पाणिपद्मद्वयन्यासराजत्कटिं श्यामलां कोमलां पीतविद्युत्पटीम्
साधुभिर्नृत्यमानामुदारां नटीं संपिबामोऽद्भुतांगीं सुधाया घटीम्. ४
गाढमालिंग्यते या सदा पापिभी रम्यरूपा यया नेक्ष्यते कापि भीः
स्वैर्गुणैर्मुग्धगीतैः सदा मोहितां तां विशंकं स्वमातुर्वदामो हिताम्. ५
मय्यपत्ये स्वकर्मालसेऽलं क्रुधा चिंतया साधुभिस्ताम्यते किं मुधा
भीमरथ्यास्तटे स्वर्ग्यलभ्या[4] बुधा भो मया पीयते साधुलब्धा सुधा. ६
तापपापौषधं साधु यन्नाम या सन्मुखाच्च श्रुता सुप्रसन्नाऽभया[5]
बल्लवीनां सखीं देवतादेवतां चिंतये चित्तमेत्युत्सवादेव[6] ताम्. ७
त्यक्तसिंहासनाः साधवः केवलं प्राप्तुकामा हि यत्पादपांसुं दरीम्
ईयुरेवोत्सुकाः को न तां चिंतयेन्निर्जितस्वर्गसत्पादपां सुंदरीम्. ८
को न तां चिंतयेच्छुद्धिकामः कलौ यत्पदांभोजनिर्णेजनापां[7] ततिः
साधुनीराजिता साधुनीराऽजिता[8] सा धुनी राजिता शंभुमौलावपि. ९
सिद्धिरत्युत्तमा योग्यलभ्याऽसतस्त्रासदेवादरान्नित्यमभ्यासतः[9]
पुंडरीकेण या साधुना रंजिता भक्तवृंदैः कलौ साधुनारं जिता. १०

---

१. ईषदपि दासाद् अरं द्रुतं क्वचिदपि मा यात्वितीव याऽवनौ तिष्ठते तदंघ्री अहं भजे इत्यन्वयः । 'यान्त्विति' इति तु बहुवचन प्रामादिकम् । 'तिष्ठते' इत्यामनेपदमपाणिनीयम् । २. तरिर्नौः । ३. वज्रभृदिन्द्रः, वेदभृद् ब्रह्मा, इन्दुभृत् शंकरः । ४. स्वर्गिणो देवास्तेषामलभ्या । ५. अविद्यमानं भयं यस्याः सा अभया । ६. चित्तं तामुत्सवादेवैति इत्यन्वयः । ७. यस्य पदाम्भोजयोर्निर्णेजनं क्षालनं तदर्थमुपयुक्तानामपां ततिः साधुभिर्नीराजिता स्तुता । ८. साधुनीरा अजिता सा धुनी भीमरथी शंभुमौलावपि राजिता इत्यन्वयः । ९. आदरान्नित्यमभ्यासतः सततमपसेवनया असतो भावयतीति तादशीति कथञ्चिद्योजनीयम ।

जीवनेनाप्यहह्रोधीष्टकं[1] तर्पितो भीमरथ्यास्तटे पुंडरीकेण यः
श्यामलः कोपि दीपः पतंगप्रियः[2] श्लिष्यतां तापहा निर्मलः स्नेहकृत्. ११

---

# शंकरस्तोत्रम्

( स्वागतावृत्तम् )

पर्वरात्रिरमणामृतभासां[3] सर्वगर्वहर ! निर्मलकांते !
पर्वतेश्वरसुताधव ! शंभो ! शर्व ! मामव नतं जनमार्तम्. १
पंकराशिमपि पावनकीर्ते ! रंकराजमव मां करुणाब्धे !
शंकराऽनतमलं[4] तव कर्तुं कं कराब्जमनघं न सदीड्यम्. २
पादपा[5] दिविषदां न यथा ते पादपांसुरखिलेश सुखाप्त्यै
सादरा तव मतिर्भजदिष्टे[6] याऽदरादवति संश्रितवर्गम्. ३
स्वर्गवास्यरिशतक्षयकर्मानर्गलप्रथितानिस्तुलशक्ते[7] !
भर्ग ! तेऽद्य भजतोऽपि न षण्णां वर्ग एष निहतो द्विषतां मे. ४
नेदमन्नवसनादपि कालात्ते दरव्यसनमीश ! लभंते
वेदगीतगुण ! ते शिव ! दृष्टा ये दयामृतरसार्द्रदृशाऽत्र. ५
व्यालदष्टमिव भेकशिशुं मां कालदष्टमव दीनमनाथम्
भाललोचन ! महेश्वर ! शंभो ! बालशीतकरशेखर ! शर्व ! ६
संतु कल्पशतसंचितनानामंतुकोटय[9] उमेश ! तथापि

---

१ अधीष्टकमिष्टकायाम् । २. पतङ्गस्य वैनतेयस्य प्रियः । ३. पर्वरात्रिरमणः पूर्णिमाचन्द्रस्तस्यामृतभासां सर्वं गर्वं हरतीति तत्सम्बुद्धौ । तेभ्योऽप्यतिधवलस्तापशान्तिकरश्च । ४. हे शंकर तव सदीड्यं कराब्जं कं आनतं अनघं निष्पापं कर्तुमलं न इत्यन्वयः । सर्वानपि नताननघान् विदध्यादिति भावः । ५. हे अखिलेश सर्वेश । यथा ते पादपांसुः सुखाप्त्यै भवति तथा दिविषदां पादपा अपि न इत्यन्वयः । ६. भजतां भक्तानामिष्टे । ७. स्वर्गवासिनामरीणां शतं तस्य क्षयकर्मणि विनाशेऽनर्गलमव्याहतं प्रथिता निस्तुला शक्तिर्यस्य तादृशः तत्सम्बुद्धौ । ८. षण्णां द्विषतां वर्गः कामादिषट्कम् । ९. मन्तवोऽपराधास्तेषां कोटयः ।

जंतुभिस्तु शरणीकरणीयस्त्वं तुषाररुगिवाखिलतत्त्वैः [1] ७
कामकोपमुखशत्रुभिरुग्रैरामयैरतितराकुलचेताः
हा महेश! किमहं वद कुर्यां नाम तेऽप्यलमयं न गृहीतुम्. ८
देव! या मुदिह सा खलु तोयादेव यादसि महत्यपि वाल्पे [2]
सेवया तव सुखं जगति त्वामेव यामि शरणं श्रुतकीर्तिः. ९
इंदुचूड! गृणतां तव कीर्तिं बिंदुतां भजति संसृतिसिंधुः
विंदुना [3] तदिह सैव निषेव्या किं दुरीश्वरगुणैर्बत [4] गीतैः? १०
दासवत्सल! भजंति सुरास्त्वां वासवप्रभृतयः प्रभुमाद्यम्
हा सहास! पदमेव न नम्रो व्यासवत्कविरपि स्वगुरुं यः. ११
कापि नाकजनमंगलमूर्तिर्या पिनाकसमलंकृतपाणिः
पापिना करुणया द्रुतचित्ताप्याद्दता बत मया न हृदिस्था. १२
मूलमुग्रविपदां स्मरमक्ष्णा तूलमग्निरिव योऽदहदीशः
कूलमस्य महतो भवसिंधोः शूलपाणिरभयाय ममास्तु. १३
साहिमुग्रम [5] अपटं [6] जटिलं त्वां सा हिमाद्रितनयेश! यथासौ
भो! जडस्य मम धीस्तव पादांभोजमुत्कहृदयाभ्युपयाता. [7] १४
अस्तु नाम तव संपदभावो वस्तुना मम मुदीश्वर! येन
तत्त्वयास्ति विधृतं खलु कंठे तत्त्वमाद्यमुरु मंगलमेकम्. [8] १५
अद्य हंत कृपणः किमु कुर्यां यद्यहं तव दशा नहि दृष्टः
चित्रमेतदयि! पंकजबंधुं मित्रमेव भवतो बहु मन्ये. १६
योगिभिर्न शिव! केवलमुग्रैर्भोगिभिः श्रितपदोऽप्यसि शंभो!
त्वां ततोऽस्म्युपगतः शरणं तत्स्वांततोषद यशोर्णव! पाहि. १७

---

१. तुषाररुग् धवलः त्वं हिमगिरिश्च। २. अल्पे वा महति वा यादसि जलजन्तौ या मुदिह वर्तते सा खलु तोयादेव। एवं तवैव सेवया जगति सुखमिति योज्यम्। ३. विंदुना प्राज्ञेन। ४. दुष्टा ईश्वरा राजादयः। ५. सनागम्। ६. अपटं दिगम्बरम्। ७. उत्कमुत्काण्ठितं हृदयं यस्यास्तादृशी धीः। ८. येन वस्तुना मम मुत् तत् त्वया कण्ठे विधृतमित्यन्वयः।

( औपच्छन्दसिकं वृत्तम् )

किमनंगपिशाचयुक्सदाहं न मनो भूतभयंकरं श्मशानम्
भवता भवतापभागशुद्धं[1] मम वासाय हरोररीकृतं ते. १८

( शिखरिणीवृत्तम् )

नतोऽहं ते हतेश्वर! चरणयोर्भूरिदययो-
रतः शंभो! शं भो! वितर हर! मह्यं त्वमतुलम्;
कृतं नागो[2] नागोत्तमवलयकैर्न भ्रमवशैः
क्षमा कार्या; कार्याधव[3]! तव कथा न क्षमिनुता? १९

( पृथ्वीवृत्तम् )

अनादृतमुमेश! ते श्रुतिशतस्तवैकास्पदं[4]
पदं[5] तदितरद्गुरु स्वहितमित्यरं सेवितम्,
जनेन बत येन तत्सपदि तस्य कालाकुलं
किमुग्रविपदां भवेन्न जनकं पदं कंपदम्, २०
पुनाति[6] न भवान्प्रभो! कमिह कीर्तितः कीर्तितः
ददाति न फलं मुदामतिशयाचितं याचितम्,
किमास्त उत नांतिकेऽप्यहह मेऽनया मेनया
तयेव कुधिया विभो! त्वमपमानितोऽसि ध्रुवम्. २१

---

१. भवस्य संसारस्य तापं दुःखं भजतीति तादृक्। अशुद्धं च मम मनो भवता वासाय नाङ्गीकृतं किमित्यन्वयः। २. न आगः इति पदच्छेदः। ३. का आर्याधव इति पदच्छेदः। आर्या पार्वती। तव का कथा क्षमिभिर्नुता नेत्यन्वयः। ४. श्रुति-शतस्य यः स्तवस्तस्या मुख्यमास्पदम्। ५. हे उमेश! येन जनेन ते श्रुतिशतस्तवैकास्पदं पदमनादृतं तदितरद् गुरु च स्वहितं द्रुतं सेवितं तस्य तत्स्वहितं कालेन मृत्युना व्याकुलं सत् उग्रविपदां पदं न भवत् किम्। कम्पदं पदं स्थानं न भवेत् किम् इत्यन्वयः। ६. हे प्रभो! कीर्तितः कीर्त्या कीर्तिवर्णनेन कीर्तितः स्तुतो भवानिह कं न पुनाति कं च याचितं मुदामतिशयेनाचितं व्याप्तं च फलं न ददाति। सर्वानपि ददात्येवेत्यर्थः। तत्फलं तवान्तिके आस्ते उत न इत्यनया कुधिया तया मेनयेव त्वं ध्रुवमपमानितोऽसीत्यन्वयः।

प्रसादमुपवर्णितं शिव! तवोपमन्यावहं
शृणोम्यसकृदादरात्कविभिरुत्तमैरुत्तमम्,
भवंतमपि भूतपं सदयमाशुतोषं भवं
प्रभुं त्रिजगतां गुरुं शरणमागतस्त्वामतः. २२

( द्रुतविलंबितवृत्तम् )

भव! न तेऽवनते कठिनं मनः सुरगुरोरगुरोरिव भोगिनि
कुरु[1] चिरं रुचिरं शिरसीश! मे स्वपदमापदमाशु यदुद्धरेत्. २३

( हरिणीवृत्तम् )

वरद! करदः संसृत्यब्धौ त्वमेव निमज्जतां
सदसि यदसि ख्यातः सत्यं सतामिति सर्वथा,
भवति भवतिग्मांशौ सत्या[2]: कथं न तमःक्षतिः
सदयपद! यद्युक्तं तद्भोः! कुरुष्व. नमोऽस्तु ते. २४

( पुष्पिताग्रावृत्तम् )

स्मरहर! करुणाघन! त्वमेकां शृणु निजभक्तमयूर[3]सूरिकेकाम्,
त्वमसि तमसि दिव्यदृष्टिरंधो भ्रममिह दीन इतोऽस्मि दीनबंधो! २५

इति श्रीरामनंदनमयूरविरचितं श्रीशंकरस्तोत्रं संपूर्णम् ।

श्रीशंकरार्पणमस्तु ।

---

असहिष्णुनोग्र! भवता हृदये दारिद्र्यदुःखमत्युग्रम्
पीतमपि विषं तस्माद्भीतमतः कंठ एवास्ते. १

---

१. चिरं रुचिरं स्वपदं मे शिरसि कुर्वित्यन्वयः । २. सति आः इति पदच्छेदः । तिग्मांशौ सति तमःक्षतिः कथं न भवतीत्यन्वयः । आः इति खेदे । ३. '**मयूर-मुग्धकेकाम्**' इति पाठः । मुग्धा रुचिरस्वना ।

# हरिहरप्रार्थना*

(गीतिवृत्तम्)

किमु [1]माधव! भगवन्! मामतिदीनमुपेक्षसे? न युक्तमिदम्
भो [2]नाथ! भवव्यसने त्राता त्वं परमवत्सलो वरदः. 1
प्रभुता जगत्सु भवतो नतजनभवदुःखलय [3]महादेव!
कुरु हर! उचितं शुचि तं स्वयमेव स्वं विचिंत्य माहिमानम्. २
[4]मामव शंभो! भगवन्नवनीरदनीलकंठ! पतितं त्वम्;
किमशक्यं तव लोके करुणावरुणालय! प्रभोरेतत्. ३
गौरीश[5]! ननु त्राता भवता शरणागता निकामहित!
यशसाखिलसाधुसभा कामं शोभन[6]दशावतारमिता. ४
न[7] हि केशव! तुल्यास्ते भक्ता व्यक्तातिशायितवात्सल्य!
मंतुं क्षमस्व नमतो भवतापं चास्य हर! दया कार्या. ५
भो [8]भव हर! शरणागतसंगोपनसद्व्रताच्युत! स्वामिन्!

---

* अत्र कविः सभङ्गश्लेषभङ्गीमनुसृत्य सम्बोधनैर्हरिं हरं च स्वोद्धाराय विज्ञापयति। १. 'किम् उमाधव' इति 'किमु माधव' इति च पदच्छेदः। २. नाथ भव इति हरपक्षे सम्बुद्धिद्वयम्। हरिपक्षे तु नाथ भवव्यसने संसारदुःखे त्वं त्राता इति योजना। ३. महान् देवो महादेव इति हर इति चोभयत्रापि योज्यम्। ४. हरिपक्षे माम् अवशं भोः भगवन् अव नीरदनील कंठपतितम् इति पदच्छेदः। भो नीरदनील घनश्याम भगवन् कण्ठपतितं मामवेत्यन्वयः। हरपक्षे तु माम् अव शंभो भगवन् नवनीरदनीलकंठ पतितम् इति पदच्छेदः। अन्वयस्तु सुलभः। ५. हरिपक्षे गौः ईश इति पदच्छेदः। गौः पृथिवी। ६. हरपक्षे शोभनदश अवता रमिता इति पदच्छेदः। शोभनदशेति सम्बुद्धिपदम्। हरिपक्षे शोभनदशावतारम् इता इति पदच्छेदः। ७. प्रथमार्धं हरिपरम्। द्वितीयार्धे तु हरिपक्षे नमतो भक्तस्य मन्तुमपराधं क्षमस्व भवतापं चास्य हरेत्यन्वयः। हरपक्षे तु हे पंचास्य, भवता दया कार्या इत्यन्वयः। ८. हरिपक्षे भवहरेत्येकं पदम्। हरपक्षे तु पदद्वयम्। तद्वदेव हरिपक्षे शरणागतसद्व्रत अच्युत इति पदच्छेदः। हरपक्षे तु शरणागतसद्व्रतादच्युत इति पञ्चमीसमासः।

[1]का मदनकाल! शक्तिः प्रभवति पुरतस्तव प्रभो स्थातुम्. ६
जगतां गुरुं विना त्वां संसारे कोऽत्र [2]वामदेव हितः
[3]न रमापतेऽद्य मार्तं त्राता भ्राता सखा पिता पुत्रः. ७
पालयसि सर्वमपि जनमचिरात्कर्पूरगौर! कीर्तिरतम्
एतमपि तथा पालय [4]मालयमेतु त्वमेव देव गतिः. ८
प्रभुरसि यशः श्रुतं ते कृतवांस्त्वं [5]पर्वतं पुरारेणुम्,
धाव विनाशं कर्तुं मम पापस्याशु तोषकरकीर्ते! ९
याचे त्वां निस्तारं भ्रांतोऽत्र चिरं [6]भवांधकारेऽहम्,
मा राधिकाप्रिय! त्यज मा करुणानीरदाश्रितमयूरम्. १०

इति श्रीरामनंदनमयूरविरचिता श्रीहरिहरप्रार्थना समाप्ता तदर्पितास्तु ।

---

१. हरिपक्षे हे कामद कालशक्तिस्तवपुरतः स्थातुं न प्रभवतीत्यन्वयः । हरपक्षे तु हे मदनकाल का शक्तिस्तव पुरतः स्थातुं प्रभवतीत्यन्वयः । २. हरिपक्षे वा मंद अवहितः इति पदच्छेदः । हरपक्षे तु वामदेव हितः इति । ३. हरिपक्षे न रमापते अद्य मा आर्तम् इति पदच्छेदः । भ्रात्रादयस्त्रातारो न सन्तीत्यर्थः । हरपक्षे तु नरं आपतेन् यमार्त इति पदच्छेदः । यमार्तं नरं भ्रात्रादयो न त्रातुमापतेयुर्गच्छेयुरित्यर्थः । ४. प्रथमार्धं हरपरम् । द्वितीयार्धे तु हरिपक्षे मालय मे तु इति पदच्छेदः । मालय लक्ष्मीनिवास । हरपक्षे मा लयं एतु इति पदच्छेदः । ५. हरिपक्षे पर्वतं पुरा रेणुम् इति पदच्छेदः । रेणुवल्लघुमित्यर्थः । हरपक्षे त पुरारे अणुम् इति पदच्छेदः । द्वितीयार्धे त हरपक्षे तु आशुतोष करकीर्ते इति सम्बुद्धौ पदद्वयम् । मम पापस्य विनाशं कर्तुं धावेत्यन्वयः । हरिपक्षे तोषकरकीर्ते इत्येकं पदम् । ६. प्रथमार्धे हरपक्षे भव इति भिन्नं पदम् । हरिपक्षे तु भवान्धकारे इत्येकमेव । द्वितीयार्धे तु हरिपक्षे हे राधिकाप्रिय करुणानीरद आश्रितं मयूरं मां मा त्यजेत्यन्वयः । हरपक्षे तु मारस्य मदनस्याधिकमप्रिय इत्येकं पदम् । शेषं समानम् ।

# श्रीकाशीक्षेत्रस्थप्रार्थना*

विश्वेश्वर महादेव देवदेव दयानिधे!
दैवाधीनं जडं दीनं पाहि मां शरणागतम्. १
अन्नपूर्णे जगन्मातः कृपामृततरंगिणि!
दैवाधीनं जडं दीनं पाहि मां शरणागतम्. २
बिंदुमाधव विष्णो त्वं करुणावरुणालयः
दैवाधीनं जडं दीनं पाहि मां शरणागतम्. ३
*कालभैरव देव त्वं ममासि कुलदैवतम्
दैवाधीनं जडं दीनं पाहि मां शरणागतम्. ४
त्रिलोचन दयासिंधो शरणागतवत्सल!
दैवाधीनं जडं दीनं पाहि मां शरणागतम्. ५
वीरेश्वर त्रिलोकेश प्रणतानां सुरद्रुम
दैवाधीनं जडं दीनं पाहि मां शरणागतम्. ६
श्रीगंगे करुणामूर्ते भागीरथि नमोस्तु ते
दैवाधीनं जडं दीनं पाहि मां शरणागतम्. ७
काशीनिवासिनो देवा भवद्भ्योस्तु नमो नमः
कुरुध्वं करुणां दीने मयि स्वशरणागते, ८
विश्वेश्वरप्रिये काशि राशिस्त्वं यशसा मुदाम्
दैवाधीनं जडं दीनं पाहि मां शरणागतम्. ९
ये वेदशास्त्रतत्वज्ञा विप्राः काशीनिवासिनः
धन्याः संन्यासिनः शांतास्तेभ्यो मेऽस्तु नमो नमः. १०
कीर्तयन्ति हरिं प्रेम्णा हरं चाभेददर्शिनः
भक्ताः पुण्यकथासक्ता नमस्तेभ्योस्तु सर्वदा. ११

---

* अस्यां प्रार्थनायां काशीक्षेत्रस्थाभ्यः सर्वाभ्यो देवताभ्यः प्रणामक्रियाव्याजेन तत्रस्था देवताः कविना क्रमेण वर्णिता इत्यवगन्तव्यं सहृदयैः।

भागीरथीस्नाननिष्ठा ये पुमांसः स्त्रियश्च याः
तेभ्यस्ताभ्यश्च साधुभ्यः साध्वीभ्योस्तु नमो नमः ॥ १२

शिवप्रसादभाजस्ते जीवाः काशीनिवासिनः
पशवः पक्षिणः सर्वे तेभ्यो नित्यं नमो नमः ॥ १३

प्राणिनो ये वसंत्यत्र अपि कीटाः पिपीलिकाः
नमोस्तु तेभ्यो यत्पात्रं महेशानुग्रहस्य ते ॥ १४

काश्यां ये जंगमाः सन्ति प्राणिनो येऽप्यजंगमाः
नमोस्तु तेभ्यो मुक्तेभ्यो महेशितुरनुग्रहात्. ॥ १५

काश्यां वसंति ये केचित्पिशाचा ब्रह्मराक्षसाः
तेभ्यो नमोस्तु सर्वेभ्यः शवेभ्योपि नमो नमः. ॥ १६

गंगायां यानि यादांसि बकाः काकाश्च ये तटे
नमोस्तेभ्योऽतिपुण्येभ्यो भेकेभ्योऽस्तु नमो नमः. ॥ १७

अविमुक्तेश्वरस्वामिन्नहं त्वां शरणं गतः
देहि मे मरणं काश्यां वरमन्यं न कामये. ॥ १८

वक्रतुंड गणेशान प्रत्यूहप्रशमाभिध[1]
पाहि मां प्रणतं दीनं ब्राह्मणं शरणागतम्. ॥ १९

वरुणे पाहि मां मातस्त्वमसि प्रतिपालय
मंदाकिनि नमस्तुभ्यं नमस्ते मणिकर्णिके. ॥ २०

नमामि करुणासिंधो तुभ्यं साक्षिविनायक
मां तारय भवांभोधौ प्रणतं शरणागतम्. ॥ २१

इति काशीक्षेत्रस्थप्रार्थना ।

---

१. प्रत्यूहाः विघ्नास्तेषां प्रशमः अभिधा यस्य तत्सम्बुद्धौ । विघ्नहर्तः इत्यर्थः ।

# गंगाविज्ञप्तिः

(गीतिवृत्तम्)

जय जय भगवति गंगे! त्वं गेयगुणा प्रतीपसुतदयिते![1]
अयि! तेऽस्तु दया त्वत्तो[2] येऽन्ये दीने नहि क्षमा मयि ते. १
बलिना कलिना मलिनानुद्धर्तुमसि त्वमेव सत्यमलम्,
गायन्ति यशः कवयस्तव यत्पीयूषतोऽपि सत्यमलम्[3]. २
[4]भविता त्वयि मज्जनतः शुचिराशु तथा तपन्न गंगेऽहम्,
रुचिरमपि वपुः पापं हेयमिह यथा सपन्नगं[5] गेहम्. ३
शरणागतो दयावति! दीनस्त्याज्यस्त्वया न गंगेऽयम्
कः स्मरतु त्वां हित्वा संतानं विषयिणां नगं! गेयम्! ४
भागीरथि! तव दृष्टिः प्रभवति पुरुषार्थसंपदे विनते
ईषन्मात्रमयि श्रुतमौदासिन्यं जनेषु देवि! न ते. ५
मूर्तिमती त्वमसि दया देवस्य हरेर्जगद्दयादवतः,
त्रातं हि लीलयेदं विश्वं संसारतस्त्वया दवतः ६
जय देवि! जह्नुकन्ये! भजदघसंहारसद्व्रते! धन्ये!
संतु बहवः किमन्ये त्वामेव जगद्धितावहां मन्ये. ७
वससि विशंकं शंभोः [6]कृतसिंजितविहितमर्मरा शिरसि,
दुर्गाया अपि तेन त्वं भगवत्यतुलशर्मराशिरसि. ८
शरणागतजीवानां प्रक्षालितसर्वपापजंबालाम्.

---

१. प्रतीपसुतः शन्तनुः । २. त्वत्तो ये अन्ये तेषां मयि क्षमा न इत्यन्वयः । "**त्वत्तोऽन्ये ये**" इति पाठः। ३. सति इति सम्बुद्धिपदम्। पीयूषतोऽपि अमृतादपि अमलं शुद्धम्। ४. यथा कश्चिज्जनः त्वयि मज्जनात् शुचिर्भविता भविष्यति तथा तपन् तपस्यन्नपि अहं न भविष्यामीति योज्यम्। ५. सपन्नगं सर्पोपसृष्टम्। '**यशः**' इत्यत्र '**त्वां**' इति पाठः। '**स्मरति**' इति पाठः। ६. कृतं यत्सिञ्जितं भूषणानां शब्दः तद्वत् विहितो मर्मरो यया सा।

वंदे हरेर्हरंतीं त्रासं त्वां त्रिविधतापजं बालाम् ९

पतितः काकोऽपि भवति पयसि भवत्याः सुरापगे! हंसः

भजति यशः सुकृतौघस्त्वयि कृतमज्जन[1] सुरापगेऽहं सः. १०

हरितां[2] ददासि जाह्नवि! जंतुभ्यस्त्वं तथा मुदा हरताम्[2].

किं मे न दर्शनं वाक्सत्यास्तु यशःकथामुदाहरताम् ११

उत्तम ईशितुरंगे नटासि नदीश्वरि! नटी यथा रंगे

कृतजगदघनगभंगे! सन्मतसंगे! नमोऽस्तु ते गंगे! १२

स्वस्तुत्यनभिज्ञेऽपि त्वत्करुणा मयि कृतानतावस्तु[3]

वस्तु प्राप्नोत्वयमयि जलजंतुभिरपि तवाप्यते स्वस्तु[4]. १३

दयमानमानसे! त्वं पुष्णास्यपि दर्दुरं बकं मीनम्;

पीनं कुरुषे मकरं धनहीनं त्यजसि किं द्विजं दीनम्. १४

भक्तमयूरघनघटे[5]! कुधियामस्माकमुचितमत्यागः

स्वयशो मा त्यज मातर्महतां[6] महितो न शुचितमत्यागः. १५

विष्णुपदि! प्रतिकूलं व्यावर्तयितुं क्षमासि न तदिष्टम्

सति! सति सामर्थ्येऽपि प्रणमदनवनं[7] यदंब! न तदिष्टम्. १६

कास्ते त्रिविक्रमांघ्रेर्ध्येया[8] स्वद्रोरिहाब्जजन्मान्या

सर्वासु देवतासु स्वर्धुनि! मातस्त्वमेव सन्मान्या. १७

नमनादमनाक्करुणे देवि! भवत्या भवव्यथा[9]शमना:

अमिताः प्रजाः कृतार्थाः प्राप्ता भव्यं वरं परं शमनाः[10]. १८

स्पृष्ट्वा[11] त्वां मां वातः स्पृशतु सुखं स्वमिव बालकं तातः

---

१. 'कृतमज्जन' इत्यत्र मुद्रितपुस्तके दृश्यमानः 'च निमज्जन्' इति साधीयान् पाठः। कृतमज्जन इत्यत्र विसर्गलोपोऽपाणिनीयः। २. हरिस्वरूपम्। हरतां हरस्वरूपम्। ३. कृता आनतिर्येन तस्मिन्। ४. स्वः स्वर्गः। ५. भक्तमयूरस्य घनघटा मेघपंक्तिस्तत्सम्बुद्धौ। ६. महतां शुचितमस्य त्यागो न महितः न प्रशस्यः। ७. '**प्रणमज्जयनं**' इति पाठः ८. '**ध्यायि**' इति पाठः। स्वद्रोः कल्पद्रुमात्। ९. '**भवव्यथाः शमिताः**' इति पाठान्तरम्। १०. '**शमिताः**' इति पाठः। ११. '**सुखः**' इति पाठः।

मास्तु मम विपदि पातः संसारात्तारयाशु भो मातः ! १९
भवतीं विनात्र मुदितं कर्तारो दीनमातुरं के ते ?
मलिनोऽपि शिशुरशंकं सुखमयमपि[1] लुठतु मातुरंके ते. २०
शरणागतस्य मम खलु तव चापि यशस्करीमिमामुक्तिम्
मानय मा नय निकटं परिपालय देहि वत्सले ! मुक्तिम्. २१
संतापमपाकर्तुं कादंबिन्या[2] यथा मयूरेण
गंगाया विज्ञप्तिः प्रेम्णैव कृता तथा मयूरेण. २२
इति श्रीरामनंदनमयूरविरचिता श्रीगंगाविज्ञप्तिः ।

---

# मनः*प्रार्थनाष्टकम्

(सारंगवृत्तम्)

कामेन मूढः स्वकामेक्षणोत्कोऽत्र कामेतिनार्तिं न धामेह मोदाय
मा मे मनो ! वाचमामेति मन्यस्व रामे त्रिलोकीललामे रमस्वाशु. १
[3]सव्यं करं यस्य भव्यं श्रितं धन्वदक्षे द्विषन्नाशदक्षेषुयुग्मं च
क्षत्रेश्वरं पद्मपत्रेक्षणं राममेकं भज स्वांत ! के कं परार्थाय. २
धामात्मजद्रव्यरामादिकं चित्त ! कामामयायैव मा मा श्वसिह्यत्र
क्षमामा[4]वरात्त्वं सतामाश्रयाद्धंत रामादृते यासि कामात्मासिद्धिं नु. ३
लंकावरारिं कलंकापहं भूम्यलंकारमिच्छाबलं कामदं चित्त !
साकेतपं हेतुना केन नो यासि नाकेऽपि नम्रा मुदा केन तं हंत. ४
ये वासवेशादिदेवा भजंत्येनमेवाधिपं पादसेवारताः साधु
सीताधवं दत्तभीताभयं चित्तवीताऽगुणं मेदिनीतारकं प्रेहि. ५

---

१. 'अयि' इति पाठः । २. मेघमालायाः । * सारङ्गवृत्तघटितमिद मनःप्रार्थनाष्टकमतीव दुर्बोधम्। अत्र कविः स्वांतं रामचिन्तनाय प्रयोजयितुमुद्यतस्तत प्रार्थयते । प्रथमपद्यस्य प्रथमार्धस्यार्थस्तु सौकर्येण नावबुध्यत एव । ३. यस्य सव्यं करं भव्यं श्रितमित्यन्वयः । ४. क्षमा च मा च तयोर्वरात् ।

पापक्षयेऽहं स्वतापघ्नमीशानमापद्मजाधारमापद्धरं मंक्षु
शोकापहं सर्वलोकाधिपं याहि भो का वदांबा न तोकासुखं[1] हंति. ६
कर्तास्य विश्वस्य भर्तापि चांते स हर्ता श्रियः प्राणभर्ता शृणु स्वांत !
माता पिता सैव दाताखिला को नु धाता परोऽस्माद्विधातायमेवांग ! ७
श्रुत्या पदं यस्य नुत्या वृतं यः प्रकृत्या मृदुः साधुकृत्याश्रयश्चित्त !
व्यासादिभिः सद्भिरासादितं सर्वदासाप्त ! मे ह्यप्रयासाय मोदाय. ८

इति[2] मयूरकृतं मनःप्रार्थनाष्टकम् ।

---

# दशमस्कंध*मुख्यार्थगीतिः

(पज्झटिकाच्छंदः)

सच्चित्सुखमूर्तिर्विधितातः श्रीदेवककन्योदरजातः
नंदयशोदापुत्रीभूतः पीतबकीप्राणोऽप्यतिपूतः १
क्षिप्तपदाब्जविचूर्णितशकटः साधुषु चरितैः सुतरां प्रकटः
लीलालवनिहततृणावर्तः शरणं विदुषां खलसंवर्तः २
स्तनपाने मुखदर्शितलोकः शिशुचरितामृतहतभवशोकः
यो गोपीनवनीतस्तेनः सुखयति यशसि मनः शस्ते नः ३
स मृदो[3]ऽदर्शयदशने मात्रे वदने विश्वं कंपं गात्रे
बद्ध उलूखल आगसि दाम्ना बहवो मुक्तिमिता यन्नाम्ना. ४
बद्धेनापि कृतावलममलौ धनपतितनयावगमौ[4] यमलौ

---

१. तोकस्य बालकस्यासुखम् । २. इदमष्टकमस्माभिः कविलिखितमनुसृत्य मुद्रितम् । प्रयतितं च यावच्छक्यमर्थावगमाय । तथापि प्रथमे प्रथमपादत्रयस्य द्वितीये तुरीयस्य पञ्चमे चोत्तरार्धस्यार्थो न यथावदवगम्यते इति निवेदयामहे । * अत्र श्रीमद्भागवतस्य दशमस्कंधस्थं कथाविभागं कविः क्रमेण पज्झटिकाच्छन्दसोपवर्णयति । कथारसज्ञानां च नैतत्प्रकरणं दुरूहं भवेदिति कानिचिदेव पदानि व्याख्यायन्ते । ३. मृदः अशने भक्षणे मात्रे यशोदायै वदने विश्वं गात्रे च कम्पमदर्शयदित्यन्वयः । ४. अगमौ वृक्षौ यमलार्जुनौ ।

वत्सबकाघसुरखलकालः पद्मजमोहनगोव्रजबालः. ५
धेनुककालियमर्दनदक्षः सुयशःप्रमुदितसज्जनलक्षः
बलमुद्बोध्य प्रलंबो नीतः प्रलयं येन ज्वलनः पीतः. ६
गोपकुमारीजनपटचौरः कांत्या श्यामो यशसा गौरः
हतमाथुरविप्रस्त्रीमोहः प्रणताखिलजनसुखसंदोहः. ७
लीलोद्धृतगोवर्धनगोत्रः शक्रमदहरः पुण्यस्तोत्रः
यस्मान्मुक्तो वरुणान्नंदः प्राप्तः स्त्रीभी रासानंदः. ८
नंदमजगरान्मुनिशापात्तं यो मोचितवानतितापात् तं
गोपीहरदरचूडारातिः स्त्रीजनवर्णितवेणुख्यातिः. ९
लीलालेशध्वंस्तारिष्टः केशिवधानंदितबहुशिष्टः
गुणरंजितनारदमुनिपालः शिशुदस्युव्योमासुरकालः. १०
दुर्लभदर्शनसुखिताक्रूरः संनिहितोऽप्यभवद् व्रजदूरः
यत्र घने खलकलशो न्युब्जः पाटीरार्[1]पणतारितकुब्जः. ११
नाशितमाथुरजनहृत्पीडः क्रीडानिहतकुवलयापीडः
भुजसमरप्रमथितखलमल्लः स्मितरसभरपरिशोभितगल्लः. १२
रणवेलाहेलाहतकंसः सात्वतमानसहंसवतंसः[2]
[3]सदनुग्रहगुरुकुलजानितनयः प्रोज्जीवितसांदीपनितनयः. १३
उद्धवमुखहृतगोपीतापः कुब्जारतिवरदकुसुमचापः
आश्रितदानपतिप्रियकर्ता पितृभगिनीचिंताज्वरहर्ता. १४
असकृत्कृतमागधबलविलयः सागररचितात्यद्भुतनिलयः
कालयवनमतिवंचनदक्षः कृतमुचुकुंदक्षितिपतिरक्षः. १५
मगधमहीपतिकैतवभीतः रैवतजादेवर इति गीतः
भीष्मककन्या राक्षसविधिना येन हृता करुणामृतनिधिना. १६
रुक्मिण्यामुत्पादितकामः स्वीकृतजांबवतीमणिभामः
कालिंदीं मित्रोत्तराविंदां हृतवान् सत्यामपि गतनिंदाम् १७

---

१. पाटीरश्चन्दनम् । २. सात्वतोऽक्रूरस्तस्य मानसं तस्यालंकृतिर्हंसः । ३. सदनुग्रहाय लोकसंग्रहाय गुरुकुले जानितः अधीतः नयो नीतिशास्त्रं येन तादृशः ।

भद्राजानिर्माद्रीभर्ता द्व्यष्टसहस्रस्त्रीप्रियकर्ता
वैदर्भीचेतोहरनर्मा अनुमतरुक्मिवधाग्रजकर्मा. १८
प्रेमभरसमरनिर्जितशर्वः शातितबाणासुरभुजगर्वः
नृगनृपसद्गतिवितरणवित्तः कृष्टतराणिजागोपीचित्तः. १९
पौंड्रककालः कृत्याशमनः क्रूरद्विविदमहाकपिदमनः
हललीलोन्मूलितनागपुरः सुरमुनिमोहकरचरितचतुरः. २०
मागधनृपवधविस्मितवैद्यः क्षतसाध्वपचित्यसहनचैद्यः
धर्ममखाहतभूसुरदास्यः कुर्वधमस्खलितोदितहास्यः २१
शाल्वघ्नो दंताद्वक्त्रघ्नः पापेल्वलहतविप्रोपघ्नः
श्रीमद्धर्मनरेश्वरदूतः क्षितिभरखलवधपरनरसूतः. २२
श्रीदामद्विजदारिद्र्यहरः स्वविरहमग्नसुहृद्दत्तकरः
सुतदर्शनहृतमातृक्लेशः स्वसृहरणानुमतगुडाकेशः २३
उद्धृतबहुलाश्वश्रुतदेवः पापिवृकत्रातमहादेवः
भृगुगीतातुलशांतिसुशीलः भूसुरसुतानयनाद्भुतलीलः २४
भक्तमयूरदयामृतजलदः सततस्वचरितवर्णनबलदः
तमहं वंदे खगपतिकेतुं सुखहेतुं भवसागरसेतुम्. २५
अनुपदमेतद् ध्रुवपदमुदितं वितरतु रसिकाननुपममुदितम्.

(अनुष्टुपछंदः)

दशमस्कंधमुख्यार्थगीतिरेषाऽघहारिणी
संपूर्णा यादवेशानकृष्णसंतोषकारिणी. २६

इति मयूरकविविरचिता दशमस्कंधमुख्यार्थगीतिः ।

---

१. दन्ताद्वक्त्रो वक्त्रदन्तः ।

# पद्यानि

१

वातनंदनमनःशान्तिकरचरणजलजात कुशतात कारुण्यसिंधो!
शातकुंभाभपट पातकापह धरणिजातपःफल दीनलोकबंधो! १
राम राजीवदलनयन रघुवीर रविवंशभूषणरत्न रावणारे! —ध्रुव० ॥
चापनिगमांतग[2] सदापदपहाररत तापसाराध्यपद पुण्यमूर्ते!
क्ष्मापवर[3] कुसुर[4]वनितापवादाघसंतापभंजन भुवनगीतकीर्ते! राम० २
रक्षसामंतचतुर क्षमापालनपर क्षपानाथजितवदनकांते!
रक्ष रामज[5]मुदार क्षमादिगुणनिकरक्षय स्मृतिरस्तु मयि तवांते! राम० ३

२

कथं तं न भजे पावनकथम्। शमितामितहृद्व्यथम् कथं —ध्रुव० ॥
त्रातुं क्षमम[6]लसमखिलं जगदिदं खलु यथातथम्
कुर्वंतं शरणागतसमवनमतुलविपदि सशपथम्। कथं० १
पूरितसंश्रितजनवनधनतनयाद्यखिलमनोरथम्
कमलावरमजममलाशयमरिकर[7]मंडजवररथम्। कथं० २
भक्तमयूरदयाघनमिनकुलपतिमतिभावुकपथम्
यमभजतो जनुरमपतेरपि वरमपि भवति वितथम्। कथं० ३

३

त्र्यक्ष सकलभक्तवृंदरक्षणप्रवीणचरण दक्षमहाध्वरविनाशदक्ष चंद्रगिरिपयो-
वलक्षदेह रक्ष मां द्रुतम्
यक्षनाथसख भवाभिधार्युपद्रुतम्
न क्षमत्यज क्षमस्व बहुभयाद्रुतम्। १

---

१. वातनंदनो हनूमांस्तस्य मनःशान्तिकरं चरणजलजातं चरणकमलं यस्य तत्सम्बुद्धौ। 'शात' इति लिपिकरप्रमादः। २. धनुर्वेदपारग। ३. भूपतिश्रेष्ठ ४. कुसुरो भूसुरो गौतमः। ५. रामजं रामनन्दनं मयूरं कविम्। ६. अनलसमालस्यरहितम्। ७. अरिकरं चक्रपाणिम्।

शंकरेश शिव शरण्य शर्मशेवधे!—ध्रुव० ॥

खर्वभूसमर्चितांघ्रिपर्व समुदितेंदुकांतिगर्वतस्करास्यपद्म पर्वतेंद्रजाधव गंधर्व-
गीतगुणजगत्पते

शर्व! कुर्वये! दयां त्वदंघ्रियुगनते
सर्वभुवननाथ न समुचितमदो नते। शंकरेश० २

भालदृगाविर्भवत्करालवीतिहोत्रखरज्वालदग्धरतिप्राणपाल सज्जनस्वमान-
सालयाद्य पालयाकुलम्

व्यालमुंडमालधर न मेऽन्यदिह बलम्
कालकूटकंठ समव[1] रामसुतमलम्। शंकरेश० ३

४

कुं[2]डलीशशयन मकरकुंडलिन्ननंतगुण मृकंडतनयदर्शितचिदखंडमोदरूप सद-
घखंड नैकपंडितप्रभो!

पुंडरीकवरद भुवनमंडनाद्य भो!
पुंडरीकनयन शमय भवभयं विभो!! १

पांडुरंग मामिहाव शरणागतम् —ध्रुव० ॥

चंडपराक्रम स्वभुजदंडबलविमर्दितारिमंडलानवद्यगुणकरंड मुं[3]कुलतलस्व-
च्छगं[4]डचतुस्तुंडजनितनो!

खंडपरशुजप्यनामधेयसन्मनो
अंडकूपरोमकूपसकलतनुतनो! पांडुरंग० २

अंडजेंद्रवाहन वेतंडपरित्राणपटूद्दंडदयाधारहृदाखंडलानुजने शिरस्यंजलिं
निधाय नुतिरतम्

दंडवत् प्रणम्य चिंतयंतमविरतम्
दंडपाणिभीतिमलं रामसुतमितम्। पांडुरंग० ३

५

ब्रह्मपुरंदरमुखवृंदारकवृंदवंद्यमीश्वरम्

---

१. समव सम्यक्तया रक्षेत्यर्थः। २. कुण्डलीशः सर्पाधिराजः। शेष इति यावत्।
३. रलयोरभेदान्मुकुलो मुकुरः। दर्पण इत्यर्थः। ४. चतुस्तुण्डो ब्रह्मा।

मंदरमंदिरमिंदीवरदलरुचिबंधुरकंधरम् १
वंदे मन्मथहरम् । हरं तम् –ध्रुव० ॥
हिमनगपतिनिजदुहितृमुखसलिलरुहमधुरसमधुकरम्
स्वचरणयुगपरिचरणरतहृदयजनसमुदयसुखकरम् । हरं तम् २
वामदेवममितामरनुतपदतामरसं सुखकरम्
रामतनूजभवामयवैद्यमकामदत्तपरवरम् । हरं तम् । ३

---

## १. गणेशार्तिक्यम्

जय देव जय देव गजमुख सुखहेतो
नेतर्विघ्नगणानां जाड्यार्णवसेतो[1] –ध्रुव० ॥
येन भवदुपायनतां नीता नवदूर्वा
विद्या संपत् कीर्तिस्तेनाप्तापूर्वा
मुक्तिर्लभ्या सुखतस्तव नित्यापूर्वा
धार्या जगतः स्थितये भूमौ दिवि धूर्वा । जय देव० १
प्रथमनमस्कृतिभाक् त्वं तव लोकप्रथितम्
दृष्टं सद्व्यवहारे गुरुभिरपि च कथितम्
यः कश्चन विमुखस्त्वयि निजसिद्धेः पथि तम्
विविधा विघ्ना भगवन् कुर्वंति व्यथितम् । जय देव० २
बालं[2] सकृदनुसरति त्वद्दृष्टिश्चेता-
मनु राज्ञीमिव दास्यो विद्याः स हि वेत्ता
पविपाणिरिव[3] परं परपक्षाणां भेत्ता
भवति मयूरोऽहेरिव मोहस्य च्छेत्ता । जय देव० ३

## २. जगदंबार्तिक्यम्

सर्वस्य त्वमसि मता सद्विदुषामाद्या

---

१. जाड्यमज्ञानं तस्यार्णवस्तस्य सेतुः । २. त्वद्दृष्टिश्चेद् बालं सकृदनुसरति तर्हि विद्याः राज्ञीमनु दास्य इव तामनुसरन्तीति योजना । म ीवद्यावान् भवतीत्यर्थः । ३. पविर्वज्रं पाणौ यस्य तादृश इन्द्रः ।

श्रुतिभिः स्मृतिभिः शास्त्रैः कविभिः प्रतिपाद्या
गायंति त्वच्चरितं निपुणा वृतवाद्याः
सा का त्वत्तोऽन्यावति नाम्ना पापाद्या
जय देवि प्रणमदखिलवरवितरणदक्षे
जय जगदंब समुद्धृतशरणागतलक्षे । –ध्रुव० ॥ १
मातर्जगदुत्पत्तिस्थितिसंहृतिलीले
संश्रितजनकल्मषवनकल्पदहनकीले
सर्वत्र सदा सादरनतलालनशीले
स्वविमलगुणगणरंजितविधिशिवघननीले । जय देवि० २
तव सेवाऽर्थिजनानां चिंतामणिशाला
भक्तमयूराणां ते स्मृतिरंबुदमाला
त्वां स्तोतुं त्वत्पुरतो गीरपि खलु बाला
का तत्रान्यकविकथा क्व सुधा क्व च हाला[1]?। जय देवि० ३

### ३. श्रीकृष्णार्तिक्यम्

मुचुकुंदेन यवनमिव दह गुरुणा मोहम्
स्पर्शमणिर्न सुवर्णं कुरुते किमु लोहम्
पतितोऽजामिल इव गजपतिरिव विकलोऽहम्
प्रभुरसि वेत्सि च दातुं वरसुखसंदोहम्
जय भगवन् चक्रगदाशंखांबुजपाणे
कुरु मयि दृष्टिं सकृपामसति[2] यथा बाणे। –ध्रुव० ॥ १
अघमिव मामपि दुरितात्कुरुषे यदि मुक्तम्
भवतो नव[3]तोयदमदहरकांते युक्तम्
पालय न मे प्रणश्यति भक्त इति यदुक्तम्
स्मर तत्कलुषनगभिदुर विदुरगृहे भुक्तम् । जय भग० २
मायामूढेऽत्र जने दृष्ट्वालं दोषम्

---

१. हाला सुरा । २. दुर्जने राक्षसे इत्यर्थः । ३. नवस्य तोयदस्य मदं हरतीति तादृशी कान्तिर्यस्य तत्सम्बुद्धौ ।

मातुर्न मनस्तोके दृष्टं कृतरोषम्
ब्रह्मण्योऽसि विधेहि त्वं ब्राह्मणपोषम्
वितर मयूरे भक्ते करुणाघन तोषम्। जय भग० ३

## ४. शिवार्तिक्यम्

हालहलविषपानं त्रिपुराणां मथनम्
नाथ कथंकारमहं कुर्यां तत्कथनम्
चरितममितमंधकमुखजगदहितक्रथनम्
यदलंकृतये तत्तद्धुतशिरसां ग्रथनम्
जय जय शिशुशशिशेखर शिव! कामाराते!
ज्ञातमिदं परमेश्वर करुणा स्फारा ते –ध्रुव० ॥ १
उपमन्यव ईशकृतं दुग्धोदधिदानम्
काश्यां दीयत एव प्राणिभ्यो ज्ञानम्
दस्युरितः शिरसि पदं दत्वापि विमानम्
बहुमतमिदमेव सतां कीर्तिसुधापानम्। जय जय० २
नाम्न्यरस्त्वादर ईश ग्रीष्म इव व्यजने
बालस्य क्रीडन इव वा भवतो भजने
मामुद्धर मा[1] मुद्धर! नश्यतु मे भजने
भक्तमयूरघन त्वं परिगणय स्वजने। जय जय० ३

## ५. दिनकरार्तिक्यम्

जय दिनकर जय भास्कर जय भग जय तरणे!
तरणिस्त्वमसि[2] तमसि जनिमृतिभवभयतरणे! –ध्रुव०॥
कर्मणि सतां प्रवृत्तिं प्रकरोषि च वृष्टिम्
किं च ददास्यंधानामिव जगतां दृष्टिम्
पास्यनलस एव परिभ्रमणपरः सृष्टिम्

---

१. तव भजने मे मुदानन्दो मा नश्यतु। तव भजने मे रतिः सदास्त्वित्यर्थः।
२. त्वं तमसि अन्धकारे तरणिर्नौरसीति योज्यम।

मन्ये लोकं वत्सं त्वां भगवन्! गृष्टिम्[1] १
जगदालयदीपस्त्वं चक्षुर्लोकानाम्
दुःसहविरहमहार्तेरगदः कोकानाम्[2]
हेतुर्मंदेहा[3]सुरसेनाशोकानाम्
तव [4]भांबुरुहां सुखदारणिरिव तोकानाम् २
किंबहुना स्तवमेकं ब्रूमस्तव सारम्
कुरुते पुरतस्तेऽञ्जलिमजयद्यो मारम्
त्वं खलु सद्गतिभाजामार्याणां द्वारम्
मुदिर इव मयूरकुलं सुखयसि [5]सद्वारम् ३

## ८. नृसिंहार्तिक्यम्

यः कनककशिपुरकरोत्साधौ संरंभम्
पुष्ट्वा गर्वं क्रोधं सद्वेषं दंभम्
कर्तुमृतं [6]भृत्यवचो भित्त्वाशु स्तंभम्
मार्तंडमिवात्मानं कृतवानसि भांतम् १
जय देव जय देव श्रीनरहरिमूर्ते!
यत्तव नाम्नि फलमलं तन्नेष्टापूर्ते[7] –ध्रुव०॥
भो भगवन्! [8]सर्वसुजनमानसजलजाले!
करुणा सर्वत्र कृता नैकस्मिन्बाले
मोचय मामपि दीनं पतितं भवजाले
यत्तेजोऽस्ति तव नखे न हि तत्करवाले. २
प्रह्लादं पितुरिव मां मोहादव दासम्
दह दुरितं द्रुतमिद्धो दमुना[9] इव घासम्[10]

---

१. गृष्टिः सकृत्प्रसूता गौः। अतिवत्सलां धेनुमित्यर्थः। २. कोका रात्रौ वियुक्ताश्चक्रवाकाः। ३. मन्देहा नाम दिनकरं सायंप्रातरुपरुन्धाना दानवविशेषाः। ४. भा अम्बुरुहाम् इति पदच्छेदः। ५. सतां वारः समुदायस्तम्। ६. भृत्यस्य दासस्य प्रह्लादस्य वचः। ७. इष्टं यज्ञादिविधानम्। आपूर्तं कूपादिखननं तस्मिन्। ८. सर्वेषां सुजनानां मानसं पंकजमिव तत्र अलिर्भृंगः तत्संबुद्धौ। ९. दमुनाः अग्निः। १०. तृणम्।

दीनानामसि बंधुर्मा कुरु परिहासम्
भक्तमयूरघनार्पय पदपंकजवासम्. ३

## ७. श्रीरामचंद्रार्तिक्यम्

जय जय सीतावल्लभ! दशवदनाद्रिपवे!
[1]भवता पदमुरु दत्तं निजसदनाद्रिपवे –ध्रुव०॥
जनुषालंकृतमिन[2]कुलमथ मुनिमखरक्षा
दृषदपि विहिता कर्मसु पदरजसा दक्षा
त्र्यंबकधनुरपि भग्नं, तदनु वृता स्वक्षी[3]
विजितः पथि पाटितपरपृथ्वी[4]पतिवक्षाः. १
राज्यं तृणवत्त्यक्तं गुर्वर्थं सहसा
या[5] शूर्पणखा विकृताऽकार्यरिदुःसह सा
सुग्रीवमतिर्मुदिता व्यरचि धनुर्महसा[6]
लंकादाहात्प्रभृति त्रिदशसभा सहसा. २
बंधनमब्धेः कपिभी राक्षसबलदलनम्
भक्तबिभीषणराज्यं यस्यास्ति न चलनम्[7]
भरतमयूरं प्रति यत्करुणाघनवलनम्
वाल्मीकेरपि यशसोऽशक्यं परिकलनम्.

## ८. श्रीविठ्ठलार्तिक्यम्

जय जय विठ्ठल भगवन् करुणामयमूर्ते!
धूर्तेतर[8]सकृदुपनतसर्वेप्सितपूर्ते! –ध्रुव०॥
[9]श्रुतिशास्त्राचारानधिकारादतिमलिना

---

१. भवता निजसदनाद् उरु श्रेष्ठं पदं रिपवे दत्तमित्यन्वयः। २. इनः सूर्यस्तस्य कुलम्। ३. शोभने अक्षिणी यस्यास्तादृशी सीता। ४. पाटितानि परपृथ्वीपतीनां वक्षांसि येन तादृशो भार्गवः। ५. या शूर्पणखा, सा, हे अरिदुःसह, त्वया विकृता अकारीति योज्यम्। ६. चापस्य तेजसा वालिहननेनेति यावत्। ७. ध्रुवमित्यर्थः। ८. धूर्तेतराः सज्जनाः। ९. श्रुतिशास्त्राचारेष्वनधिकारादधिकाराभावात् अतिमलिनाः स्त्रीशूद्रादयः।

जीवास्तव दृष्टस्मृतवंदितपदनलिनाः
ते सांजलिना दूरान्नमिताः खलु कलिना
कालेनापि कवलिताखिलजगता बलिना. जय जय० १
भवताधिष्ठितमनिशं भीमरथीतीरम्
वैकुंठीकृतमिह नो रमयति कं धीरम्
जडमपि कुरुषे सुपटुं वाचि यथा कीरम्
शिरसि बिभर्षि धृतं ते येन चरणनीरम्. । जय जय० २
त्वां मेघमिव मयूरा दृष्ट्वा तव भृत्याः
प्रेमाश्रुप्लुतनयना भृशविस्मृतकृत्याः
व्यक्तं मंक्षु भवंति प्रमुदाहृतकृत्या
मुक्तिर्वृणुते तानुरुगाय[1]! मनोवृत्त्या. । जय जय० ३

## ९. श्रीदत्तार्तिक्यम्

जय भगवन् जय भगवन् योगीश्वर दत्त
त्वत्तः सर्वैः कुशलं प्राप्तो, नो मत्तः -ध्रुव०॥
गुरुणापि सता भवता जनसंग्रहमतिना
गुरवो बहवोऽत्र कृता दर्शितसद्गतिना
सच्चित्सुखरूपं त्वां देव तथा सति ना
न भजति विषयी स समः स्पष्टं मलरतिना। जय देव० १
अपि च कृतं खलु दशशतभुजमर्जुनभूपम्
श्रुत्वालर्कं च सकृत्समनात्सुखरूपम्
भजति जनस्त्वां सिंधुं मुक्त्वान्धं कूपम्
शूलं वोग्रं त्यक्त्वा सौवर्णं यूपम् । जय देव० २
गृण्हाति यया मूढोऽयं भारं मस्ते
प्रविशति निरवधिसुखदे न तव यशसि शस्ते
भक्तमयूरं करुणाघन नर्तयतस्ते
सा मायास्तेमायाधिप वत्सल हस्ते । जय देव० ३

१. उरु गायं कीर्तिर्यस्य तत्सम्बुद्धौ ।

## १०. शिवार्तिक्यम्*

गौरीकांतं नौमि सदा निर्जरदांतम् —ध्रुव०॥

कामारातिं पावकभालं जनपालम्
मायालीलं चंद्रकलारंजितमौलिम्
योगातीतं योगिभिरंतःस्तुतिगीतम् । गौरी० १

गंगामालं दानवकालं मुनिपालम्
देवाधीशं व्यालकुलालंकृतवेषम्
क्षोणीनाथं वारणचर्मांबरकायम् । गौरी० २

नानावाद्यैस्तांडवकाले सुरसंघैः
नागादैः सामकलाभिस्तुतिपूज्यैः
सर्वोपायं वारणदत्तांबरकायम् । गौरी० ३

नानारूपै......नानाभुवनानि
सूक्ष्मासूक्ष्मैः स्थूलतरास्थूलतरैः...
लालितपालितदीनं दिनदशपालम् । गौरी० ४

पाशबाणैः संयुतं खेलंतमनंतम्
दीक्षाभंगं दक्षिणकांतं कृतवंतम्
वेदैः शास्त्रैर्वंदितपादं सुरमोदम् । गौरी० ५

क्षोणीपालं वारिमयं तं ......
तेजोरूपं चंद्रमयं सूर्यमयं चार्कम्
तारामार्गैः सोमकलाक्षं त्रिपुरांतम् । गौरी० ६

भूतानंदं मर्दितभस्मासुरकंदम्
वाराणस्यां सेवितविश्वेश्वरपादम्
यंत्रैस्तीर्थैर्मंत्रैः परैर्मानसगीतम् । गौरी० ७

प्रातःकाले शंकरमालारुचि...मेतम्

---

* अस्य मयूरकृतित्वे सन्देग्धि नश्चेतः। नेदं कविलिखिते ग्रन्थसमूहे समुलभ्यते न वान्यैरपि तत्समकालिकैः कुत्रापि निर्दिश्यते । प्रायश्चाशुद्धं न त्रुटितं च यथा काव्यसंग्रहे मुद्रितं तथैवास्माभिः ।

रामानंदे जल्पति कांतं रमणीयम्
भुक्त्वाभोगं वंचति योगांकितगम्यम्
स्नानं शंभो मत्तमयूरेश्वरवृंदम् । गौरी० ८

---

# शिवार्याशतकम्*

( उपगीतिच्छन्दः )

काचित्सोमा धवला कृतविषकवला पटीयसी देवी,
जटिला शशधरनिटिला कुट्टितकुटिला नमस्या मे. १

अस्तु निरंजनमेकं वस्तु त्रय्याः शिरोभागे,
अरुणं तरुणीधरणं विलसत्करुणं तु नः श्रेयः. २

नैगमपटलीरूढं मनसि निरूढं जगत्त्रय्याः,
हिमगिरिरत्नसमूढं स्मरति न मूढं कुतश्चेतः? ३

अयि! मामनाथमल्पं करुणाजल्पं प्रभो! पाहि,
जहि वा बिरुदाकल्पं कल्पं कल्पं यमाधत्से. ४

विषयविषाशनमत्तं विषयिषु यत्तं स्मराराते!
स्मर मां मुहुरनिमित्तं यदि तव चित्तं कृपायोनिः. ५

किं न च्छिन्नं शंभो! यदि भवदंभो विवृद्धोऽसौ,
परमिह भवहरमपरं विघ्नो न परंपराजाले. ६

विषपीयूषनिकेतन! धृतविपकेतन! भवाराते!
चेतितविष्टपचेतन! करुणावेतनमिदं कुरु मे. ७

---

* अस्य शतकस्यैतत्कविकृतत्वे मंशेते नश्चेतः। नास्य नामापि कविलिखितस्वकृतग्रन्थावल्यामुपलभ्यते । न च क्वापि मातृका । काव्यसंग्रहकारैस्तु शतकमेतद्यथा मुद्रितं तथैवास्माभिर्मुद्यते । सन्ति खल्वत्र बहव एवाशुद्धयः । अपेक्ष्यन्ते च कचित्कतिपये वर्णाः । यद्यप्यन्ते ''इदमार्यापतेरार्याशतम्'' इत्यादि लिख्यते तथापि तत्परलिखितं स्यादित्यस्ति नो विश्वासः । तादृशस्योल्लेखस्य कुत्राप्येतत्कविकाव्येऽदर्शनात् ।

व्यालाकलितजटालादिह विधुभालां ददक्षिणे बालात्,
न हि रे! कंठे कालात्कलितकपालात्परं किंचित्. ८

काचित्कदनितमदना चित्सुखसदना तनू गौरी
गौरीचुंबितवदना चंदिररदना नमस्या मे. ९

काचिच्चिदिह सदारा दाहितदारा ममेदानीम्,
करुणापारावारा जगदाकारा पुरः पश्चात्. १०

कपिलः कालीशाली वीटपपाली जगज्जीवः
हरिहरमस्तकमाली मनसि कपाली सदा ध्येयः. ११

ऐरावर्णेदुवर्णा शोभितकर्णा फणींद्राभ्याम्;
वामे विलसदपर्णा शिवमितिवर्णा तनुर्ध्येया. १२

न वयं वेदविधिज्ञा न च कृतयज्ञाः कृतज्ञा वा,
किं त्वाशापटलं पटमकपटमीशं प्रपश्यामः. १३

विष्वक्करुणावेषा दत्ताशेषा स्वभक्तेभ्यः
शेषाकल्पविशेषा जगतः शेषा तनुः पायात्. १४

शमनः श्रेणीशमनी शमदमगमनीयमाहात्म्या,
भूतिः कापि च रमणी स्वीकृतरमणी मुदे नः स्यात्. १५

निरयत्रासनिहंत्री बुद्धिनियंत्री मुमुक्षूणाम्
कलितकलामयतंत्री गिरिजारंत्री तनुर्ध्येया. १६

बालकलाधरचूला सुहृदनुकूला जगज्जननी
च्योतच्चर्मदुकूला धृतत्रिशूला तनुर्जयति. १७

अलसं जडमतिचपलं कितवं धूर्तं शठं हृष्टम्
विषमिव विषयिणमपि माभिधेहि त्रिपुरांतक! स्वपदोः. १८

भुजगान्कर्तुं भुजगाननलं निटिले विषं कंठे
नैव विवेकस्तेऽभूद्धर्तुं पदयोः क्षमामेव. १९

त्वत्तो मातुस्तातादिह नो धाता पुराराते!
नापि च भवतः पातादपरः पातास्ति किं कुर्मः. २०

वेदावेदितशोधाः प्रत्यग्बोधाः शृणुध्वं मे

अर्धांगाहितदारं परमोदारं महः श्रेयः. २१
तर्कादुदर्कभाजां कर्कशवाचां प्रपंचोऽयम्,
यच्छ्रीकंठे तेजसि सत्यपि सिद्धांतमिच्छंतः. २२
संख्या संख्याहीनं संख्यावंतो ब्रुवंतु संख्येम्
पश्यंत्वथवा वल्लयां वल्लयां भिल्लीचरं कंचित्. २३
तावद्धर्मोऽधर्मस्तावत्कर्माप्यकर्मैव,
यावन्निगुणविलासी निगमनिवासी नुतो नेशः. २४
यदिदं निगमविचारे स्मृतिसंसारेऽपि यथावत्
तदिदं निखिलाधारं सारं कैलासकुंजेषु २५
विषधराविषयविषादं मामाविषादं धरः स्वपदोः
नो चेत्त्रिभुवनरक्षणबिरुदं भवतोऽद्य भाराय. २६
काचिच्चित्तकुटीरे चित्पटपेटीगता मूर्तिः
उद्धटतटिनीमुकुटा घटतो रटतः स्फुटं मेऽस्ति २७
काचिच्चित्तचमत्कृतिरुग्रा सोमासिता काली
स्त्रीपुंस्तनुरप्येका चिंत्यविवेका मुदे नस्तात् २८
न हि रे! काचन चिंता त्रिजगच्चिंतामणिः शंभुः
अंतः परितः पुरतः स्फुरति प्रेम्णा समाकूतः २९
मंत्रैः किं किं तंत्रैरपि किं वेदांतसिद्धांतैः
यावत्तत्त्वगुरूणां गुरुरयमीशो न सर्वस्वम्. ३०
मास्तु ममागमबोधो मास्तु च शोधोऽपि सर्वत्र,
अस्तु श्रुतिषु यदेकं वस्तु स्वांते मृडान्येव. ३१
स्मरहर पुरहर भव हर शिव मृड गिरिशेति जल्पतामग्रे
भृत्यायते सुरेज्यः कालो बालायते सधः. ३२
नाहं बिभेमि कालान्नो भवजालादपि भ्रष्टः,
दीनानाथत्रातरि पातरि शिरसि स्थिते स्थाणौ. ३३
शिवदः शंभुः शंकर ईश्वर एवासि सर्वेषु
वामेषु वामदेवो देव! त्वं मत्कृते स्थाणुः. ३४

संततमाद्रिनिवासात्कठोरनाम्नावनौ नीतः
अपि काकोलहरत्वात्करुणाकूपार एवासि. ३५

दग्धे दिविषद्वृन्दे परितः प्लुष्टेऽपि गोविंदे
ब्रह्मांडमंडपेऽस्मिन्क्षुब्धे क्ष्वेडाश एव त्वम्. ३६

पयसा प्लावितसत्ये क्लृप्ते वैकुंठ आकंठ
स्मारितविष्टपवृत्ते धर्ता त्वं त्वेव गंगायाः. ३७

वृंदायामपि विष्णुं तद्वत्परमेष्ठिनं च कन्यायाम्,
युक्त्वाप्यतो जिगीषुः स्मर्तव्यात्मा स्मरस्त्वत्तः ३८

गर्वादखर्वकर्ता त्वहमिति भावाद्दतो बोधः
त्वामपि सविधे विमनंश्छिन्नः कापालभूषायै. ३९

केचिद्वदंति गुणिनं निर्गुणमेकेऽपि विद्वांसः
निर्णेतुमेव धत्से त्रिगुणीं मुंडावलिं नित्यः. ४०

नित्यानित्यविवेके नित्यस्त्वत्तोऽस्ति नैवान्यः,
निखिलं त्वमेव दग्ध्वा धत्से भस्मांगरागाय ४१

भस्मासुरोऽपि कश्चिद्धस्मरशक्तिः पुरा भक्तः,
विस्मृतशैवचपेटः कपटी भस्मैव संजातः. ४२

ख्यातस्त्वमेव देवस्त्वमेव निखिले महादेवः
रुद्रादन्याभावे स नास्मि विष्णुर्न वा धाता. ४३

धातुस्त्वमेव धाता पाता विष्णोश्च विष्णुत्वात,
अपि च हरस्य हरस्त्वं नातस्मात: परा काष्ठा. ४४

काष्ठावासो वासो यस्य त्रैलोक्यधूलीपु
युक्तं निखिले दग्धे शेषावासश्च वासाय. ४५

वासो यस्य हृदब्जे भासः सर्वेषु भूतेषु
हासः कालो नृत्याद्दासस्तस्याहमेकस्य. ४६

एकस्य द्वे नियमात्काश्चिद्द्वैपाश्रितोऽस्त्वर्थः
जानेऽहं तु यदंगे गिरिजागंगे तमेवैकम्. ४७

एको रुद्रः प्रथमा सर्वो रुद्रः परा ब्रूते

परमृग्यजुषोक्तीनां सिद्धः सिद्धांत एवैकः. ४८
एकोऽहं तु बहु स्यामनया वाचैव सा सिद्धिः
तस्मात्सिद्धिनिदानं रुद्रं जानंतु भद्राय. ४९
भद्राय राजमुद्रा वेदो ब्रूते शिवः शिवदः,
नातः पुमर्थसिद्धिः काचित्कश्चिन्न सिद्धांतः ५०
सिद्धांतादरदूरं दूरत्वान्नाम पीयूषात्
पीयूषांशुकलाधरधर मां चानाथनाथत्वात्. ५१
नाथ! त्वामनुयातस्याधःपातः कथं मे स्यात्,
स्यादथ दैवनियोगाद्योगाभक्त्याथ मुक्त्या च. ५२
मुक्त्यालमस्तु भक्तिप्रसादलभ्यो ममास्त्विष्टः,
ब्रह्मांडव्रजबीजः कैलासाद्रिद्रुमः कश्चित्. ५३
कश्चिद्गिरिजावल्लीवातो ललितो जगत्पर्णैः,
स्वांतालवालवासी स्मृत्या फलितो भवेत्सद्यः. ५४
सद्यः पापविनाशः सद्यस्त्रैतापिकी शांतिः
सद्यः सकलसुखानां सिद्धिर्भविता शिवस्मरणात्. ५५
स्मरणादेव हि देवा मरणान्मुक्ताः सुखं चेरुः,
स्मरणादेव मुनीशाः शंभोः कारुण्यपात्राणि. ५६
पात्राणि तानि मन्ये हिमगिरिकन्येशपूर्णानि,
शेषाणि खर्पराणि प्रायो विण्मूत्रादिग्धानि. ५७
दिग्धानि भांति येषां भसितैर्भालानि भाग्येन,
धन्यास्त एव वन्या नान्यान्मन्यामहे नूनम्. ५८
नूनं विभूतिकवचाः शिवमृडरुद्रेति दिव्यास्त्राः
त्रिषु लोकेषु जयंतः संततमंतः कृपावंतः ५९
कृपया तेन विमुक्ता जीवन्मुक्तास्त एवैते
येषामंतःकरणे जगदावरणेश्वरः शंभुः. ६०
शंभुर्मुक्तिलताया मंडप एवास्ति निश्चितं फलवान्
यस्तामिच्छति कश्चित्सुतत्तं मनसा श्रयेत्स्वस्थः. ६१

स्वस्थस्तदेव भविता भाविता सिद्धिस्तदा काचित्
सुरनरफणिनामविता त्रिजगत्सविता सदा ध्यातः. ६२
ध्यातः शुद्धमनोभिः ख्यातः श्रौतार्थविस्तारैः
ज्ञातः परमगुरुभ्योऽस्यातः शंभोरहं भृत्यः. ६३
भृत्यः कृतातिकृत्यः शंभोरेवास्ति नान्यस्य
कुपिते कदाप्यगस्त्ये सिंधुर्बिंदूपमो जातः. ६४
जातो दशावतारी भृगुणा शप्तोऽपि गोविंदः
गोविंदोऽपि यदीयो मधुहा मुरहाथ लक्ष्मीशः. ६५
लक्ष्मीश्वरोऽथ चक्री खगपतिरपि यो जगत्त्राता
वरदे गौरीरमणे विष्णुर्दैत्यांतको जातः. ६६
जातो मरत्यवश्यं मृत्योर्जायेत वा निरयी
प्राप्ते कायनिकाये शिवमेवालंब रे चेतः! ६७
चेतस्तवैव भाग्याच्चक्षुःश्रोत्रास्यमुख्यानि
संतींद्रियाणि यावत्तावत्संभावयेशानम्. ६८
ईशानमेव शरणं व्रजतो मरणं तु मोक्षाय
नो चेन्मायावरणं क्व शिवाचरणं विना नश्येत्? ६९
नश्येत्पापकलापः शिव शिव जप्ते क्व संतापः?
स्यादथ कोऽपि दुरापः सुमेरुचापः पुरः पश्चात्. ७०
पश्चात्तापनिमित्तं ब्रूमश्चित्तं प्रति क्षोभात्
स्मर रे! शिवेति वित्तं भित्त्वा भित्तं तु विषयाणाम्. ७१
विषयाणामपि चिंता का तव चिंता.........
शिव शिव शिवेति जप्ते शिव एव त्वं न संदेहः. ७२
संदेहोऽपि न कश्चित्सर्वो रुद्रः श्रुतिर्ब्रूते
तस्माद्भावनयाहं बद्धो मुक्तोऽहमित्युक्तिः. ७३
शक्तिस्तावद्द्विविधा विद्याऽविद्यात्मिका भवति,
विद्या शिवपदफलदाऽविद्या संसारभोगाय. ७४
भोगायापि भवश्चेद्ध्यातो दद्यात्स सद्भोगान्,

विषयप्रेमजभोगो भुक्तो भवतैव रोगाय. ७५
रोगायौषधमेकं दृष्ट्वा नैकं वदाम्येतत्
एका पुण्यतरंगा गंगा गंगाधरोऽप्येकः. ७६
एको वस्तुविवेको धात्रानेकोपनिषदुक्तः
शिवमिति स परिच्छेको न चेति भेकोपमो ब्रूते. ७७
ब्रूते यस्तु कदाचिच्छिवेति नामाक्षरद्वितयम्
तस्य तदेव भवाहे मुक्तिर्भुक्तिश्च मुक्तिश्च. ७८
मुक्तिः शमदमसिद्धा यस्याः सिद्धा अपि भ्रष्टाः
भ्रष्टा अपि शिवभक्त्या स्त्रष्टारस्ते तु शास्त्राणाम्. ७९
शास्त्राणि संतु दूरं दूरं मंत्राश्च तंत्राणि
नेदीयसीह चेतसि नित्यानंदे जगत्कंदे. ८०
कंदं छिनत्ति जनुषां भिनत्ति भेदभ्रमं सद्यः.
यच्छति रूपमरूपं चित्तमचिंतामणेः शंभोः. ८१
शंभोर्ध्यानममंदं ज्ञानानंदं नयत्युच्चैः
अश्ममपि तन्मंदास्त्यजंति पापे च युंजंति. ८२
युंजंति योगमपरे भोगं भुंजंति चैवान्ये
अस्माकमप्यभंगा तृप्तिर्गंगाधरः कश्चित्. ८३
कश्चिच्चिदंबुमाली जटिलो व्यालीनसद्व्यालः
शूली ब्रह्मकपाली विभूतिशाली स नः पायात्. ८४
पायादपायहंता पुंगवगंता पुरारातिः
मुनिजनमानसरंता मानससंतापदावाग्निः. ८५
दावाग्नेरप्यधिकः संभवमरणोद्भवो व्याधिः
शांतिस्तदैव भविता भविता भर्गश्च वैद्यश्चेत्. ८६
चेदद्य नीलकंठं भवगजकंठीरवं स्मरसि
तर्हि त्वमेव जंतो! बहुविधमंतो सुखी भविता. ८७
भविता तदैव सर्वं शृणु गतगर्वं किमप्यंतः
जपतः सर्वदशर्वं दुःखमखर्वं सुखाय स्यात्. ८८

स्यादिह कोऽपि न पाता पातकपातादहं जाने
दैवाद्गिरिजाजानेरपरः शपथोऽस्ति तत्पदयोः. ८९

पदयोरधरीभूते विधुरीभूतोऽसि चेन्नाथ!
कः कटु मधुरीकुरुते त्वत्तोऽप्यंतरधुरीणस्त्वम्. ९०

त्वं मे माता तातस्त्राता भ्राता गुरुर्देवः
त्वं मे जीवस्त्वत्तः परमं परमं न मे किंचित्. ९१

किंचित्काचित्कश्चिच्चितयं तावद्भवत्यर्वाक्
शिवलिंगादेकस्मात्स्फुरंति सर्वाणि लिंगानि. ९२

लिंगानि पूर्वदेवैर्देवः सर्वेषु लोकेषु
नत्वा हरिहरमुख्यैर्लब्धानीष्टानि निष्ठातः ९३

निष्ठा विमलज्ञानं निष्ठा भक्तिश्च वैराग्यम्
निष्ठैव संशयानां हंत्री निष्ठा शिवं दत्ते. ९४

दत्ते भावितमंतर्धत्ते स्वीयेषु कृत्येषु
नित्यैव नित्यमीशो यस्तं मत्या श्रयेदंतः. ९५

अंतः शुद्धमनोभिः संतः पश्यंति यत्तेजः
गौरं तदेव गौरीलंपटमपटं प्रपश्यामः. ९६

पश्यंतस्त्वामीशं के परमीशं प्रपश्यंति
अभजंतोऽपि भजंतं के परमं तं न पश्यंति. ९७

पश्यंति शाश्वतं ते पदमिह शंभोः पदे लग्नाः
अपरे पतंति सद्यः परितः क्लिश्यंति वा भग्नाः. ९८

भग्नास्त एव लोके त एव शोके निमज्जंति
यैरधिवाणि भवानीपतिरिह नानीयते यत्नात्. ९९

मोदादंतर्गोधाधरमन्नतो दापतुल्यै ये (?)
दधति विषयापनोदानपहस्तो दारभासस्ते. १००

भासंत एव वासा येषां वासाय दिग्वासाः
तेऽपि सुखोल्लासा वै शैवा शैवस्य देवताकाराः. १०१

(अनुष्टुप्छन्दः)

इदमार्यापतेरार्याशतमार्याः पठंति ये
ते तु शैवागमाचार्या नात्र कार्या विचारणा. १०२

इत्याकूतमयूरेशशैवेनाऽऽशैवशासनात्
उपगीत्यैव गीतानां गाता वीशः प्रसीदतु. १०३

---

# शिवाष्टोत्तर*शतनामावलिः

श्रीकंठो वरदः शर्व आशुतोष उमापतिः
दयानिधिर्महादेवो भवो भवहरो हरः. १–१०
मदनारिस्त्रिनयनः शंकरः सुकविः शिवः
विभुः प्रभुर्वृषरथो विवेकी विशदो वशी. २–२१
ललाटाक्षः कालकालः शरण्यश्चंद्रशेखरः २५
पुरारातिः श्रितहितो देवदेवः सदाशिवः. ३–२९
शांत उग्रः समः श्रेष्ठो भूतेशो भव्यविग्रहः ३५
परमेशः परानंदः परिपूर्णः पदप्रदः. ४–३९
मधुरो महितः शंभुर्गिरीशो गिरिशो मृडः
अजः पिनाकी प्रवरः प्रबलः प्रमथाधिपः. ५–५०
मानदः पंचवदनो दशबाहुर्दिगंबरः ५४
शूली कपाली सुमुखो मृगपाणिर्जटाधरः. ६–५९
शाश्वतोऽतिमहाः स्वामी गिरिधन्वा गुरूत्तमः ६४

---

* अस्यां शिवाष्टोत्तरशतनामावल्यां ग्राथितानि नामानि क्रमेणैव मयूरकविविरचिते महाराष्ट्रभाषामये "शिवरामायण" इत्याख्ये काव्ये ग्राथितानि समुपलभ्यन्ते। इयं च नामावलिः कविना स्वहस्तेनैव लिखिता तद्ग्रन्थेषु दृश्यते। तत्किमियमनेनैव विरचिता आहोस्विदन्येन केनापीत्यत्र संदेग्धि नश्चेतः। किं च प्राचीनगीर्वाणपुस्तकेषु कुत्राप्यदर्शनमस्या मयूरकृतित्वे प्रमाणयतीति विरम्यते।

रुद्रो जयप्रदो जेता भुजगाभूषणोऽव्ययः. ७-६९
पुराणः पुंडरीकाक्षप्रियः प्रणव उद्भवः ७३
कर्पूरगौरः सुतपाः सामतुष्टः प्रजापतिः. ८-७७
महाव्रतः सुरमणिः सत्यसंधो विनायकः ८१
अंधकारातिरजितः सदोदारो निरंजनः. ९-८५
दीनबंधुर्दक्षहंता विरागो नीललोहितः ८९
सेव्यः साक्षी कृती नेता उदासीनः सतां गतिः. १०-९५
माता पिता सखा भर्ता सकलाधिनिवारकः १००
बहुरूपो वेदसारो विद्यानाथः शिवायनः. ११-१०४
निरमिश्रो निरवधिर्निरविघ्नो निरामयः १०८
मोक्षप्रदमिदं नाम्नां शंभोरष्टोत्तरं शतम्. १२

# श्रीराधानामावलिः*



श्रीकृष्णदयिता श्रीड्या श्रीकंठस्तुतसद्गुणा
श्रीमती श्रीदवंद्यांघ्रिर्विधिमाता सुरार्चिता. १
राधा महासती मान्या पुण्यकीर्तिसुधासरित्
भद्रादितिस्नुषाख्याता देवी त्रैलोक्यसुंदरी. २
व्यासादिसत्कविस्तव्या शुकयोगींद्रवर्णिता
भगवत्सत्कृतारामा सुभगा कोटिसंस्तुता. ३
मधुभिन्मोहिनी मुख्या मानिनी मधुराकृतिः
ललना ललितानंदप्राप्ताशीर्वृषभानुजा. ४
यशोदालालिता लक्ष्मीसपत्नी लक्षणाश्रया

---

* इयमावलिः कविलिखिता चासम्पूर्णा चोपलभ्यते। नामाप्यस्या आवल्या अस्माभिरेव विषयमवलोच्य प्रकल्पितम्। बहुषु स्थलेष्वस्या मातृका यन्त्रादिसाहाय्येनापि नावगन्तुं शक्येति तत्र दुरूह एवार्थः। इतरत्र तु सुगम एव नाम्नामर्थ इत्युपेक्ष्यते व्याख्यानम्।

राजगोपाललीलोत्का गोपीवृंदशिरोमणिः. ५
कृष्णदर्शनसर्वस्वा कृष्णसर्वस्वदर्शना
वासुदेवसखी पुण्या वरेण्यवरदा वरा. ६
धरालिरार्या स्वार्तिघ्नी सदाराध्या सनातनी
गोलोकवासिनी नित्यानंदा नंदात्मजानुगा. ७
नर्मदा शर्मदा प्राज्ञा प्रभूतगुणशालिनी
प्रसन्नवदना प्राज्यलावण्या प्रभुसुप्रिया. ८
पुराणपुरुषप्रीता परब्रह्मप्रसादिनी
बृहत्कीर्तिः परब्रह्मसहचर्यैतिगौरवा. ९
कलिंदजाप्रियसखी कलिकल्मषनाशिनी
महाविदग्धा कालिंदीतीरकुंजविहारिणी. १०
कलावती रासरक्ता रम्याकृतिरुदारधीः
गोविंदांकासनासीना गोविंदाश्लेषनिर्वृता. ११
विलासिनी विशालाक्षी मदिराक्षी मदालसा
तन्वी तनूदरी सुभ्रूः सुमुखी सुदती सुवाक्. १२
सुकुमारी सुखखानिः सुतनुः सुज्ञसन्नुता
सुकेशी सुप्रभा सुज्ञा सुनासीरप्रजावती. १३
सुवर्णवर्णा सुमतिः सुमनोलंकृताकृतिः
कुंजगा कुंजरगतिः कुंददामविभूषिता. १४
कुंभस्तनी कुंकुमाभा कुंतलालिजितालिनी
वेणुनादहृतस्वान्ता कान्तकान्तिः कलध्वनिः. १५
कान्तकल्पितकल्पद्रुप्रसूनानल्पप्रगा (?)
कर्णपूरीकृतप्रेष्ठप्रेमार्पितशिखिच्छदा. १६
वंशतीष्टा-(?) वंशभूषा हंसगद्गदभाषिणी
धीराऽभिसारिका नैकयुक्तवेषा प्रियंवदा. १७
समयज्ञा पुण्यशीला वेदज्ञा वंद्यवंदिता
सुरांगनागीतकेलिर्गुणाढ्या गुणिसंगता. १८

गंधर्वगीतचरिता मेनकाद्यप्सरःस्तुता
उर्वशीकृतसत्कारा घृताचीरचितांजलिः. १९
रंभासंवीजितापादपद्मप्रह्वा तिलोत्तमा

... ... ... ...

गोपीश्वरी गोपलक्ष्मीर्गोमती गोकुलोद्भवा
कृष्णचेतोहरा कृष्णसहगानधुरंधरा. २४
कृष्णस्कंधार्पितभुजा कृष्णास्यनिहितेक्षणा
कृष्णाननात्तताम्बूला कृष्णाश्लेषनिमीलिता. २५
कृष्णस्तुता कृष्णहृता कृष्णचित्तप्रमाथिनी
कृष्णानुकारकुशला कृष्णप्राणेश्वरीश्वरी. २६
रत्युत्तमा रतीशाक्षी रसश्रेष्ठैकमानसा
रात्रीशरश्मिधवला धवलांबरधारिणी. २७
तमिस्रदीपिकाकान्तिस्तारुण्यामृतनिम्नगा
कात्यायन्यर्चनपरा कृष्णेभालानदृक्छटा. २८
गंभीरनाभिर्गंभीरभावा गंभीरभाषणा
कृष्णप्रसाधिता कृष्णहस्तलब्धविशेषका. २९
स्तनभारनमन्मध्या नखदंतक्षतांचिता
प्रेमक्रीताच्युता प्राज्यप्रीतपीताम्बरप्रभुः. ३०
पक्ष्मलाक्षी पद्मपत्रव्यजनानिलसेविनी
पुरुषायितसंप्रीतप्रियाकृष्टमनोघना. ३१
विहारिणी विशदधीर्विश्वबाहाविनोदिनी
वीक्षाविध्वस्तस्वविपद् विष्णुसाक्षात्कृतिप्रदा. ३२
दीर्घदृष्टिर्दग्धदासदैन्या विश्वस्तवत्सला
धर्मलभ्या धैर्यदात्री धुतारिर्धूपितालका. ३३
फणीन्द्रतल्पा फलिता स्फारभा स्फटिकद्विजा
यज्ञसिद्धिर्यशोराशिर्यतिसेव्या यमाधिदा. ३४
यतीष्टदा यत्नदृश्या योगिध्येयाऽथ नाजिता (?)

यदुनंदनयत्नाप्ता...पतिगभीरहृत्. ३५
मोहहंत्री मोहदात्री मोमासाविश्युपासिता
मोहिनी मोचितासंख्या मोघाहितमनोरथा. ३६
उरुक्रमानतिक्रांतमानोऽप्युन्नतमस्तका
उद्योगिन्युद्धतापांगच्छटोपद्रवनाशिनी. ३७
उद्दामरूपसंपत्तिरुल्लसन्मणिमेखला
उत्कणश्रीरुदात्तर्धिरुपास्थितमहोदया. ३८
उदारोदाहृतकथा प्रशस्तिरुचितोचिता
हर्यक्षमध्या हरिणीप्रेक्षणा हीरमण्डना. ३९
हेलानिर्जितदिग्वस्त्रीहेमतालफलस्तनी
कृष्णहृत्पंजरशुकी कृष्णमेघशतह्रदा. ४०
कृष्णचेतोंगणनटी कृष्णसत्तरुसल्लता
कृष्णलोचनकर्पूरशलाकायितविग्रहा. ४१
श्रीकृष्णशशभृज्ज्योत्स्ना श्रीकृष्णद्युमणिद्युतिः
श्रीकृष्णब्रह्मसावित्री श्रीकृष्णेश्वरपार्वती. ४२
श्रीकृष्णाब्धिमहासिंधुः श्रीकृष्णाम्नायसत्क्रिया
श्रीकृष्णहिमभृन्मेना श्रीकृष्णैरावणाभ्रमुः. ४३
श्रीकृष्णदेवेन्द्रशची कृष्णश्रीरामजानकी
श्रीकृष्णशूरासिलता श्रीकृष्णब्राह्मणश्रुतिः. ४४
कृष्णहृच्चातकप्रावृट् कृष्णबर्ह्यभ्रमालिका
गोविंदचक्षुस्तृषितचकोरस्मितचन्द्रिका. ४५
पुण्यश्लोकप्रणयिनी परमात्मप्रलोभिनी
शरदिंदुविडंदास्या शारदातिविशारदा. ४६
शृंगारसिंधुलहरी शृंगारारण्यसिंहिका.
शृंगारेंदुशरद्राका शृंगाराभ्युदयोद्भवा. ४७
असंख्यपीतोर्वरिताऽनंतपुण्यकथासुधा
अनादिनिधना योत्या छद्मबल्लवदारिका. ४८

शश्वच्छिःसीमसौभाग्या शश्वद्भरविदंचिता
निरंतरानंदपूर्णा निरंतरनवस्तुतिः. ४९
प्रहर्षिणीरोमराजिस्त्रिवलीललितोदरी
जारत्वहरजारत्वा जगत्पावनपावनी. ५०
लीलानरानंतशक्तिर्लीलाकैवल्यजारिणी
योषिल्ललाम श्रीमूर्तिः सर्वरामादिनायिका. ५१
सर्वभावविभावानुभावसात्त्विकभावभूः
मणिमालामुद्रितादिपुंशिरोमण्युरस्थला. ५२
स्वमुखांबुजसौरभ्यलुब्धभृंगात्तसाध्वसा
दूतीकृतभ्रमद्भृंगदुःखदावदवस्मृतिः. ५३
दुग्धफेनमृदुस्वच्छशय्यातलविहारिणी
स्वांगरागसुगंधार्ककन्याजलविहारिणी. ५४
स्वभावभव्यसौरभ्या सहजद्युत्यलंकृता
अशिक्षितातिचातुर्या वंचनाजितलोचना. ५५
दामोदरोरःशयना कृष्णबाहूपधानका
कृष्णोत्तरीयव्यजना कृष्णांघ्रिनखदर्पणा. ५६
श्रुतिस्तुतस्तुतगुणा ज्ञातिमानितमानिता
योगिध्येयध्येयमूर्तिर्विश्वपूजितपूजिता. ५७
वृत्तोन्मतारक्तनखा विद्योतन्मणिमुद्रिका.
महाविभूतिमानार्हा महती मन्मथारणिः. ५८
राजरामा रतिश्वश्रूर्गुर्वी कृष्णाम्रकोकिला
नित्यप्राप्तासंगसंगा निरातंका निरंजना. ५९
निर्निमेषा निर्विशेषा निरीहार्चा निरामया
सिंदूरगर्भसीमंता सिंदूरतिलकालिका. ६०
सीमंतिनी सृष्टिसीमा+सीतिक्रांतवैभवा (?)
भामिनी शालिनी श्यामा मेघश्यामा तिलालसा. ६१
महामण्यंगदभुजा मणिकांचनकंकणा

अमृतस्राविताटंका मुक्ताचोला सुवासिनी. ६२
वरारोहेभनासोरुर्नतभ्रूर्मत्तकाशिनी
नित्यानंदस्वरूपानुभूतिर्भूतिलकायिता. ६३
कृष्णकर्णामृतोदंता कृष्णनेत्रालिपद्मिनी
हातश्रीकृष्णरमिता यमितापघ्नकीर्तना. ६४
देदीप्यमाना दुर्दैवदुर्लभस्मृतिवंदना
दयमानमना दासत्रासनाशधृतव्रता. ६५
भक्तेक्षणक्षणप्राल्पप्राणप्रियतमास्मृतिः
अनन्यभक्तसर्वस्वा निजभक्ताभिमानिनी. ६६
भुक्तिमुक्तिप्रदपदा भुजपाशसिताच्युता
नेत्राधरप्रभागुंजीभूतनासाग्रमौक्तिका. ६७
निरीहेहाकरीरम्भरीतिरीश्वररीतिभृत्
शुद्धसत्वोत्कर्षवती सर्वसात्विकसन्नुता. ६८
ब्रह्मांडमंडपस्तंभस्तंभना सकलेक्षणा
वंशीनिनादश्रवणक्षणत्यक्ताशनालया. ६९
मुरलीनादजीवातुर्मुरलीध्वनिनिस्त्रपा
सायंवेणुरवप्रीता प्रातर्वेणुरवाकुला. ७०
दिवावंशीकथानीतयुगयामचतुर्दया
कृष्णचुंबितवंशीर्ष्या वंशीकुत्साकृतादरा. ७१
वंशीसपत्नी वंश्याप्तमहाभाग्योत्सवासहा
वंश्यायत्तप्रियप्राप्तिर्वंशीदूतीप्रबोधिता. ७२
वंशीसखीसमाहूता वंशीज्वरहरौषधिः
वंशीनादानिरस्ताधिर्वंशीलज्जासरित्तरिः. ७३
वनमालिपरिष्वंगाऽज्ञातनिर्गतयामिनी
भगवद्विरहाऽशीतरश्मीभूतसुधाकरा. ७४
श्रीमत्समागमानंदचंद्रीभूतदिवाकरा
भगवत्संगमोत्कर्षपल्लवीकृतबल्लवी. ७५

मृदङ्गी नागनासोरूः कुंजारण्याधिदेवता
गुंजद्भृंगघनध्वान्तपुंजकुंजप्रहर्षिणी. ७६
वैकुंठीकृतकालिंदीतटारण्यलतागृहा
निकुंजबन्धुः सर्वांगमंजुला वंजुलालया. ७७
वशंवदरमारंगा गंगाच्छागुणगर्विता
कीरनासा चक्रवाकस्तनी खंजनलोचना. ७८
जपाप्रसूनरसना विद्रुमाधरपल्लवा
ग्रीष्मकालहिमस्पर्शा हिमकालोष्णविग्रहा. ७९
दामोदरकरस्पर्शश्लथनीविः स्खलद्गतिः
श्लक्ष्णदृष्टिर्दृढस्नेहा दुग्धमुग्धस्मिताधरा. ८०
भक्तप्रेमद्रवच्चित्ता भगवद्भक्तिजीवना
गोविंदसख्यप्रख्याता दामोदरमणिप्रभा. ८१
कृष्णलक्ष्मीभ्रमकरीगोपालफणभृन्मणिः
कृष्णबद्धोल्लसद्वेणी केशवाक्ष्यर्पितांजना. ८२
कृष्णारचितपत्रालिः कृष्णदत्तांघ्रियावका
कृष्णोत्तरीयव्यजना कृष्णोत्संगवरासना. ८३
भगवत्कौस्तुभादर्शा गोविंदाधरकज्जला
मानग्रहनमत्कृष्णालिकलग्नांघ्रियावका. ८४
कृष्णानिमिषदृक्पीतवदनांबुरुहासवा
पूर्णकाममनःकाम्या स्वात्मारामनोरमा. ८५
सदातृप्तसदारब्धकेलिर्नित्यहरीहिता
गुरुगम्या गुणातीता सद्गुणप्रतिपादिनी. ८६
चुंबनोत्कप्रियस्पृष्टचिबुका चपलेक्षणा
कृष्णमार्जितरत्यंतघर्मबिंदुभृदानना. ८७
श्रीकान्तस्य पदन्यस्तक्रीडा विस्रस्तभूषणा
प्रियपादांबुजापास्तविन्यस्तमणिनूपुरा. ८८
कृष्णार्पितस्वंगरागा कृष्णबद्धस्रगंबरा

प्रसाधकश्रेष्ठदत्तरसाज्ञापारितोषिका. ८९
दंतकान्तिजितज्योत्स्ना सुधोत्तमरसाधरा
स्वपादपद्मसौभाग्यजितसौगंधिकाम्बुजा. ९०
कल्पद्रुपल्लवानल्पस्मयघ्नकरपल्लवा
वाङ्मूकीकृतगर्वाढ्यशारदाशुकसारिका. ९१
कृष्णच्छायासहचरी कृष्णदृष्ट्यास्पदानना
यज्ञपत्नी पूज्यचित्रानंदसर्वस्वराक्षिणी. ९२
पुत्ररंजनसंप्रीतयशोदाविहितादरा
व्रजेश्वरार्पितापत्यनिर्विशेषांकसंस्थितिः. ९३
कृष्णास्यार्पितसंयावा राजगोपालभोजिता
प्रीतिपीतप्रीतपीतचेलेषत्पीतपायसा. ९४
कृष्णार्पितस्वनेपथ्या कृष्णनेपथ्यधारिणी

---

# श्रीकृष्णनामावलिः*

श्रीकृष्णः सच्चिदानंदो वसुदेवात्मसंभवः
देवकीगर्भसंभूतो यशोदानंदनंदनः. १
पूतनाजीविततहरः शकटध्वंसकारकः
तृणावर्तप्राणहर्ता मुखे विश्वप्रदर्शकः. २
उलूखलनिबद्धश्च यमलार्जुनभंजनः
वत्सासुरांतकरणो बकासुरविनाशकः. ३
अघाघहृद्धैकगोपबालवत्सस्वरूपभृत्

---

* यथैव श्रीरामायणाद्रामनाम्नामष्टोत्तरं शतमुद्धृत्य कविनानेन श्रीरामनामाष्टोत्तरशतरामायणं व्यरचि तथैव श्रीमद्भागवताच्छ्रीकृष्णनाम्नामष्टोत्तरशतस्य ग्रथने बद्धादर इव स्यादयं कविरिति मन्यामहे । नैतत्कविना सम्पूर्णतया लिखितं विरचितं वेति प्रतिभाति ।

# पद्यपरिशिष्टम्

चातुर्मासेसंग्रहस्थेषु मयूरकविपद्येषु—

अपि सीताजाने मामव दीनम्–ध्रुव० ॥

कोऽब्दमृते चातकमस्त्यविता वारि विनापि किं मीनम्. १

किमवति वत्सलतातो न पिता सुतमलसं गुणहीनम्. २

कालभयात्त्वा शरणं यातो व्यालभयादिव वीनम्. ३

श्रुतमार्यास्त्वां त्यजति न करुणा चिंता बुधमिव जीनम् ४

मंक्षु जिघृक्षति कालो जंतुं डिंभः स्तनमिव पीनम्. ५

प्लवगमयूरद्विजकुलमकरोरानंदांबुधिलीनम्. ६

अभंगवृत्ते अन्नपूर्णास्तुतिः––

मातरन्नपूर्णे! विश्वेशदयिते! । वात्सल्यमयि ते नित्यमस्तु ॥ १

अन्नपूर्णे! ख्याता विश्वस्य त्वं माता! । विश्वेशान्नाता तातोप्यन्यः ॥ २

विश्वनाथभार्ये! मयूरं पाह्यार्ये! । विश्वत्राणकार्ये! त्वमेवालम् ॥ ३

दोहाछन्दोमयस्य विठ्ठलवर्णनस्यान्ते––

पांचाल्या व्यसने वसनीभूतं करुणाजीमूतम्

वंदे कुरुवर्ययुधिष्ठिरदूतं शक्रात्मजसूतम्

खलबलदलनमखिलकलिमलकुलहरनिरुपमचरितैरतिपूतम् १

वंदे शरणागतपालनदक्षं निजजनधनयक्षम्

दीनानामजरामरशिवपक्षं विहितामितरक्षम्

ददतमलममलमसुलभतममपि निजपदनुतिकृत उरुवरलक्षम् २

वंदे भक्तमयूरघनमुदारं वसुदेवकुमारम्

कमलाकुचशक्रनीलमणिहारं श्रुतिसारमपारम्

गुरुवरमघहरमरिधरमरिहरमातितरसुखकरमाहितविहारम् ३

---

१. गरुडम्.

# स्फुटश्लोकाः

महाराष्ट्रभाषामयस्य मंत्ररामायणस्यादौ—

श्रीमद्गणेशगुरुपदनखशशिकांतिच्छटा जयंतुतराम्
प्रतिभारत्नं लब्धं यासु मयेदं मनस्तमोघ्नीषु. १

महाराष्ट्रभाषामयस्य गङ्गास्तवस्यान्ते—

शिवविष्णुभक्तयालं भूतदयाधर्मसक्तया देवि!
वत्सस्त्वया जनन्या सह संयोज्यो वने भ्रांतः. १
भागीरथ्यास्तीरे बालकमिव देवि मातुरंके माम्
स्थापय मापयशोऽस्तु स्वर्धुन्या मम तवाप्युदारायाः. २

महाराष्ट्रभाषामयस्य रामस्तवस्यादौ—

लंकापतिप्रमथनं कामकल्पतरुमंकाहितानतजनं
पंकाब्धिपोतमकलंकाकृतिं सुहृदलंकारमद्भुतगुणम्
रंकावनादृतकरं कालकंठविनुतं कारणं त्रिजगतां
तं काममीड्यचरितं कामयेऽनवरतं कायनिंदितघनम्. १

कुत्रचित् पत्रे—

निर्जितगंगाभंगाऽभंगाकर[१] आर्यकौतुकारामः
श्रीनारदवाल्मीकिव्याससखो जयति कौ[२] तुकारामः.

श्रीदत्तदयोदयस्यान्ते—

श्रियः क्रीडागारायितविपुलवक्षःश्रुतिसुधा-
करं वक्त्रं नेत्रेऽप्यमृतपरिपूर्णे सरसिजे
पदं तीर्थाधारं भजतु भजतो बीजमुदरं
विधिद्रोर्नस्तेऽजाभयवरदबाहूंश्चमुदरम्. १

कुत्रचित् वार्तापत्रे—

रुचिरं सुचिरं गोपवनिताजनितादरम्

---

१. निर्जिताः गंगाया भंगास्तरङ्गा यैस्तादृशानामभंगानामाकरः खनिः । २. पृथिव्याम्.

सुरुषं पुरुषं वंदे करुणावरुणालयम्. १

कृता त्वया दयासिंधो! पूतना धूतनारका
तथा कुरुष्व दासं मामधुना मधुनाशन!. २

याज्ञसेन्या हृतं दत्वा वसनं व्यसनं महत्
भवता संश्रितांस्त्रातुं भो! जितो भोजितोऽतिरुट्. ३

महाराष्ट्रभाषामयस्य प्रह्लादविजयस्यान्ते—

प्रह्लादविजयो नाम ग्रंथो विष्णुपुराणतः
मयूरेश्वरपंतेन सारंप्रथ विनिर्मितः. १

देशभाषानिबद्धोऽपि सेव्योऽयं रसवेदिभिः
पंकजं शैवलाच्छन्नं मधुपैर्नोज्झितं क्वचित्. २

खवेदाक्षिमितस्वच्छवृत्तमौक्तिकनिर्मितः
प्रह्लादविजयग्रंथहारो लुठतु सद्धृदि. ३

महाराष्ट्रभाषानिबद्धस्य कृष्णास्तवस्यान्ते—

अर्चितं वचनमुत्तमं मनो निर्विशेषसुखदं वपुर्दशाम्
अस्ति चेदघपराङ्मुखी मतिर्लक्षणैः किमपरैर्नृयोषिताम्. १

श्रीमयूरकविनात्मनः कृते बहवो गीर्वाणभाषामया ग्रन्थाः स्वयं लिखिताः। चित्तेषामन्ते कानिचित्पद्यानि समुपलभ्यन्ते। तत्र च्छन्दःसूत्राणामन्ते

(१) भाद्रे सिते च पंचम्यामिंदौ छंदोऽलिखन्मुदा
मयूरेश्वरपंतः स्वकृते पाराशरे गृहे। १
इति गुरुगणपतिपदजलजप्रसादतोऽस्त्वकुतोभयम्.

अतीव सूक्ष्माक्षरैर्विलिखितस्य वाणीभूषणस्यान्ते—

(२) मयूरेश्वरपंतेन लिखितं स्वात्मनः कृते
नेतरेषां स्थूलदृशां मुदे सूक्ष्ममदो यतः. १

धात्रब्देऽश्वयुजे मासि कृष्णे संपूर्णतामगात्
वाणीभूषणनामैतच्छंदःपुस्तमिदं शुभम्। इति. २

श्रीगुरुचरणांभोजभ्रमरेण मयूरशर्मणा विदुषा
सूक्ष्ममलेखि यतोऽज्ञैः कार्या न क्रुदत्र कदा. ३

स्थूलदृशां स्यात्तुष्ट्यै स्थूलं सूक्ष्मं हि सूक्ष्मदृशाम्

प्रबोधचंद्रोदयस्यान्ते—

(३) प्रबोधचंद्रोदयनामनाटकं कृती मयूरेश्वरपंत आदरात्
श्रीरामलक्ष्मीतनुजोऽलिखद् द्रुतं गुरोर्गणेशांघ्रिकृपाकटाक्षतः. १
बारामत्यां भाद्रे शुक्ले बहुधान्यवत्सरेऽष्टम्याम्
अर्यमवारे नाटकमखिलं व्यगमत्समाप्तिमदः. २

विद्वच्चित्तप्रसादिन्या अन्ते—

(४) मयूरेश्वरपंतेन विद्वच्चित्तप्रसादिनी
षट्पद्या लिखिता टीका श्रीकांतार्पितचेतसा. १
वृषेऽब्दे माधवे मासि दशम्यां भृगुवासरे
सितपक्षेऽगमत्पूर्तिं दक्षे गोदावरीतटे. २
सिद्धेश्वरप्रसादेन विद्वानेनां सुखप्रदाम्
विलोकयतु लोकेशपदसंलग्नमानसः. ३

राघवपाण्डवीयस्यादिमे पृष्ठे—

(५) दशनच्छदविस्कारजपास्ते कालिभिक्षवः
ग्रामासक्तधियो गेहनिवासा राजवर्तिकाः, १
सायमाद्यंतयोरह्नोः प्रातःसायं च मध्यमे
उपवासफलप्रेप्सुर्जह्याद् भुक्तिचतुष्टयम् २

तस्यैवान्ते—

(६) मयूरेश्वरपंतेन रामलक्ष्मीतनूभुवा
लिखितं स्वमनस्तोषकारि काव्यं यथामति. १
बाणसुबंधू वासवदत्ताकादंबरीकारौ
जयतो जयंति सुतरां कविराजाः सर्वकविशिरोरत्नम्. २
विक्रमाब्देऽधिके कृष्णे द्वादश्यां भृगुवासरे
पराशरेऽगमत्काव्यलेखनं पूर्णतामदः. ३
गुणिनो जीवंतु चिरं जीवंतु ततोऽधिकं गुणज्ञा ये
अगुणज्ञा गुणहीना ये स्युः सारस्वतेक्षणप्रीताः. ४

रामचंद्राय वैदेहीजानये सुखयोनये
न ये नमोऽस्तु कुर्वंति तेऽपार्थाः संतु मानवाः. ९

तदनन्तरं च—

धृपमुरलि कुरंगः सर्वतो दत्तरंगः क्षतरिपुचतुरंगः ज्ञातकुब्जाङ्गुरंगः
श्रुतमधिगतरंगः सात्वतानंतरंगः पतगपतितुरंगः पातु मां पांडुरंगः. १

कुवलयानन्दस्यान्ते—

(७) मयूरेश्वरपंतेन ग्रंथसंग्रहकारिणा
स्वयं कुवलयानंदो लिखितोऽखिलतोषकृत्. १
वृषेऽब्दे कृष्ण आषाढे भौमे षष्ठ्यां तिथावयम्
समाप्तिमगमद् ग्रंथः पर्वतीश्वरसन्निधौ २
नानार्थानां सुवृत्तानां सरसानां विलोकनात्
श्लोकानां साधुलोकानां मुदं याति मनोऽतुलाम्. ३
नारायण! जगदीश्वर! करुणार्णव! दुग्धसिंधुजाजाने!
पालय मामतिदुष्कृतकारिणमनुतापभाजमखिलपितः! ४
केशव! माधव! विष्णो! नारायण! वासुदेव! कृष्ण! हरे!
मधुसूदन! रामाच्युत! गोविंद! मुकुंद! रघुपते! नृहरे! ५

आपदेवविरचिताया वेदान्तसारतत्त्वप्रदीपिकाया अन्ते—

(८) मयूरेश्वरपंतेन श्रीमद्रामात्मजन्मना
लिखिता साधु वेदांतसारतत्त्वप्रदीपिका. १
श्रीमज्जानकीजानिचरणयोरर्पितोऽसौ सुमनसामंजलिरिव ग्रंथः।
श्रीगुरुचरणौ शरणं शरणं नः क्षितिसुतापतेश्च पदे
यदपेक्षया न संश्रितमुदेऽस्ति शक्तिः क्वचिदपीह. २
पातु मामातुरं देवो रामो राजीवलोचनः
नमतो ममतोत्पाशान्मोचनो विश्वरोचनः. ३

अनर्घ्यराघवटीकाया अन्ते—

(९) यः श्रीरामात्मभवः श्रीमत्केशवगणेशपंडितशिष्यः
स मयूरेश्वरपंतो लिलिखेमां श्रुतमनर्घ्यराघवटीकाम्. १

अंगिरस्याश्विने कृष्णे दशम्यां सोमवासरे

शाके भूपाश्र्यङ्कि(?)मिते कथंचित्पूर्णतामगात्. २

भगवन्नामकौमुद्या अन्ते—

(१०) लक्ष्मीरामतनूजेन मयूरेश्वरशर्मणा

लिखितास्यादराच्छीघ्रं भगवन्नामकौमुदी. १

श्रीमदापदेवविरचिताया भगवन्नामकौमुदीटीकाया अन्ते—

(११) लक्ष्मीरामतनूजेन मयूरेश्वरशर्मणा

भगवन्नामकौमुद्याष्टीकेयं लिखितादरात्. १

विद्वन्मोदतरङ्गिण्या अन्ते—

(१२) मयूरेश्वरपंतेन श्रीमद्रामांगजन्मना

लिखिता झटिति प्रेम्णा विद्वन्मोदतरंगिणी. १

चम्पूभारतस्यान्ते—

(१३) श्रीरामनंदनेनेदं मयूरेश्वरशर्मणा

लिखितं रसिकप्रीत्यै सरसं चम्पुभारतम्. १

रसमञ्जर्या आदिमे पत्रे —

(१४) मयूरेश्वरपंतस्य लक्ष्मीरामतनूभवः

भानुमिश्रैर्विरचिता सरसा रसमंजरी. १

तस्या एवान्ते—

(१५) मयूरेश्वरपंतोऽदो लिलेख परमादरात्

पुस्तकं रसमंजर्या बुधवर्यात्मतुष्टये. १

श्रीमद्रामसुतो गणेशचरणांभोजद्विरेफायितो

लक्ष्मीकुक्षिभवोऽतिसत्कविसखः प्राज्ञो मयूरेश्वरः

स प्रीत्या व्यलिखद्रसज्ञजनताकर्णावतंसायिता-

मत्यच्छां रसमंजरीं निजमुदेऽब्दे विक्रमे माधवे. २

तस्या एवान्तिमे पत्रे—

मयूरेश्वरपंताभिधरामनंदनस्यादः पुस्तकमपास्तदोषम्.

सौंदर्यलहर्या अन्ते च—

मयूरेश्वरपंतेन लिखितं स्वात्मतुष्टये

सौंदर्यलहरीस्तोत्रं सतां भवतु संततम्. १

# शोधनपत्रम्



| पृष्ठं । पंक्तिः | शुद्धम् |
|---|---|
| ६।१३ | गोपुच्छा- |
| ६।२२ | देव्यो |
| १९।१० | मसीत्येवं |
| २१।८ | भवतो- |
| २२।७ | विनिर्ययौ |
| २४।२२ | ददौ |
| २६।२७ | ध्वजानां मालाः, तास्सन्ति यस्यां सा-तां-ध्वजपंक्ति-युतामित्यर्थः |
| ३५।२६ | ह्रीता |
| ३६।१२ | साऽयशस्कारिणी |
| ३७।१३ | वागुरामिव |
| ३७।२७ | बंधन- |
| ४०।३ | नयन्त्वित्य |
| ४१।१३ | रामो |
| ४३।१३ | भरतो रुषः |
| ५१।२८ | क्षिप्रं |
| ५७।४ | च्छरः |
| ५७।२२ | दकंपनः |
| ५७।२५ | संख्ये |
| ६२।७ | वक्तुमर्हो |
| ६२।२० | वीक्षमाणौ |
| ६९।१२ | माऽनयं |
| ८३।२४ | मगं |
| ८४।११ | महार्णवं |
| ९८।४ | ददृशुः |
| १००।१५ | विंदंतः |
| ११४।२६ | समारुह्य |
| ११९।१० | वक्तुं |
| १३१।१२ | शशंसु |
| १३३।१२ | सुरेंद्रा- |
| १६०।२ | हमप्लवैः |
| १६०।२९ | अतार्यः |
| १७०।३ | ऋषिदेवा हि |
| १७४।४ | धारयेन्नैव |
| १७४।९ | सन्निवर्त्य |
| १७४।२८ | भीरुणा |
| १७६।१६ | संरुरुहु |
| १७८।३ | पर्याप्तोऽहम् |
| १८०।२० | ब्राह्म्या |
| १८०।२३ | ब्राह्म्येति |
| १८१।२९ | इति तिलके (वा. रा. स. ५९, श्लोक १०९-११०) |
| १८८।१३ | अभिपिष्टोऽलं: |
| १९७।१४ | वाचालं |
| १९८।२ | शरैः |
| २०३।७ | सा |
| २२४।७ | तथागंगदम् |
| २३१।७ | हंतुं |
| २३२।१५ | मुद्दिश्य |
| २३३।९ | प्रीतमना |
| २३६।९ | ह्रिया |
| २३६।१४ | सामर्थ्यो |
| २३९।१८ | राक्षस |
| २४८।१७ | लोके |
| २५५।२ | वासः |

| पृष्ठं । पंक्तिः | शुद्धम् |
|---|---|
| २६५।२ | बिषमूत्राशय |
| २७५।२२ | सुस्तस्यास्तु |
| १८०।८ | दिवसेरात्स (?) |
| २८१।८ | स्रस्तांगो |
| २८२।२२ | चेद् द्वार्यंत्र |
| २८९।९ | दारकौ |
| २९२।२९ | कृशीभावः |
| ३१३।११ | महो |
| ३१४।२ | नतरक्षाऽविकलम् |
| ३१४।४ | नृप अलम् |
| ३१४।१६ | रक्षणेऽविकलम् |
| ३१४।२७ | १३=७ |
| ३१५।२ | तमस्ते |
| ३१५।६ | सन्मतेनाऽपि |
| ३१५।१४ | शर्मनं |
| ३१५।१५ | स्वादु वचः |
| ३१७।२ | सत्सु धातः! |
| ३१९।२८ | ३. हनुमान् |
| ३२०।२६ | १. हनूमते त्वया |
| ३२१।७ | नरा महितम् |
| ३२१।१० | निवृतिमेति |
| ३२२।३ | जयं तस्य च |
| ३२७।७ | शर्वमतेन |
| ३३०।१८ | आस्याब्जासमवपुषी |
| ३३६।२ | नीता |
| ३३६।१५ | ३७=७३ |
| ३३७।२६ | कुटिलाशयाभि- |
| ३४०।३ | ०रतितमाम् |
| ३४०।५ | तमातांता |
| ३४१।१६ | कुपतिः |

| पृष्ठं । पंक्तिः | शुद्धम् |
|---|---|
| ३४२।१२ | तांच्छरणम् |
| ३४३।४ | जनाय ते |
| ३४३।२५ | त्वत्पदसंचरणेन |
| ३५२।१२ | माऽत्र |
| ३५९।२ | सीरहेत्य |
| ३६१।२२ | ०त्यमृतं |
| ३६५।२७ | आह्वया सहितः साह्वः सितसरोरुह इति साह्वः एतादृशः मुनिः तस्य |
| ३६६।१६ | निर्वर्मणे |
| ३७४।२१ | योगिभिर्न |
| ३७५।२५ | भवेत् |
| ३८०।१३ | नमस्तेभ्यो |
| ३८२।१५ | नतदिष्टम् |
| ३८३।६ | निकटं |
| ३८३।१६ | धन्व दक्षे |
| ३८३।२१ | के न तं |
| ३८३।२३ | चित्त! वीतागुणम् |
| ३८७।१९ | जनुरमरपते |
| ३८८।१६ | शरणमागतम् |
| ३८९।२० | त्वद्दृष्टिश्चित्तां |
| ३९०।२ | स्मृतिभिः |
| ३९५।१७ | कृतबंतम् |
| ३९७।१३ | पटलंपट |
| ३९८।५ | संख्यासंख्यां हीनं |
| ३९८।५ | संख्येयम् |
| ४००।१० | द्योगाद् भक्त्या |
| ४०१।१२ | जातोऽमरत्यवश्यम् |
| ४०२।८ | भवाहेर्मुक्ति |
| ४१५।१७ | केषां चित्तेषामन्ते |